## ॥ किञ्चित् प्रास्ताविकम् ॥

अस्ति खलु विद्वत्सु सुविदिततरं सूरिशेखरश्रीमद्विजयसिंहसूरिशिष्य–श्रीवर्द्धमानसूरिवरैर्विनिर्मितं गिर्वाणभाषानिबद्धं पद्यमयं श्रीवासुपूज्य-चरित्रम् । अस्य ग्रन्थरत्नस्य सरसत्वं हृदयङ्गमत्वं सद्धर्मोपदेशकत्वं च विदित्वा गिर्वाणभाषोपासकानां बालजीवानां पठनोपयोगहेतोरेतस्य पद्यमयस्य मूलपुस्तकस्य गद्यमयानुवादकरणं समुचितं ज्ञातमस्माभिः ।

एतस्य ग्रन्थमणेर्निर्मापणमेकोनत्रयोदशशततमे (१२९९) विक्रमसंवत्सरे श्रीवर्द्धमानसूरिपादैर्विहितमिति ग्रन्थप्रान्तस्थितया प्रशस्त्या ज्ञायते । श्रीवर्द्धमानसूरिपादानां गुरुपरम्परा, तेषां गच्छशाखादिनामुल्लेखः, ग्रन्थनिर्माणप्रेरकस्येतिवृत्तमित्यादि सर्वमस्यां प्रशस्तौ वर्णितमिति ततोऽवसेयं तदिच्छुकैः ।

अस्याबालवृद्धजनोपकारिणो ग्रन्थस्य प्रकाशने प्रातःस्मरणीय–परमपूज्यपाद–सूरिशेखर–श्रीमद्विजयनेमिसूरीश्वर–पट्टालङ्कार–प्रातःस्मरणीय–शास्त्रविशारद–कविरत्न–व्याकरणवाचस्पति–श्रीमद्विजयलावण्यसूरिपादानां प्रेरणा निमित्तमिति तेषां गुरुवर्याणामुपकारं सान्तःकरणं वयमुररीकुर्महे। अस्मिन् ग्रन्थे पूज्यगुरुणीश्रीदर्शनश्रीजीनांशिष्या–साध्वीश्रीदिव्यश्रीजीनां सदुपदेशः सत्प्रयासश्च मुख्यं निमित्तमिति तासामुपकारं सानुनयं स्वीकुर्महे ।

साहित्य–व्याकरणाचार्य–पण्डितश्रीजगदानन्दझाशास्त्रिणा पद्यमयमूलग्रन्थानुसारेण निर्मितोऽयं गद्यमयोऽनुवादः सर्वेषां गिर्वाणगिरानिबद्धचेतसां सहृदयानां धार्मिकाणां चोपकारकः स्तादित्याशास्महे । अस्य ग्रन्थस्य मुद्रणसंशोधनं श्री. रतिलाल दीपचंद देसाइ–इत्यनेन कृतम् ।

अत्र ग्रन्थे यत्र कुत्रापि यत्किञ्चिदपि स्खलनं दृष्टिपथं यायात् तत् सर्वं शोधनीयं क्षन्तव्यं च धीधनैर्विदुषांवरेण्यैरित्यस्माकमभ्यर्थना ।

**विक्रमाब्दः १९९८; वसन्तपञ्चमी ।**

**–प्रकाशकः**

# ॥ विषयनिरूपणम् ॥

मुद्रणकर्ता—१०८ पृष्ठपर्यन्तं नानालाल सोमालाल शाह इत्यनेन श्रीअरुणोदयप्रिन्टींगप्रेस दोसीवाडानी पोल, अमदावाद इत्यत्र मुद्रितम्। अवशिष्टं च सर्वं श्री शारदामुद्रणालये देवचन्द्रात्मजेन पण्डित हीरालालेन मुद्रितम्। पानकोरनाका जुमामसीदसामे अमदावाद।

श्री

# ॥ श्रीवासुपूज्यचरित्रम् ॥

[ प्रथमो भागः । ]

अर्हन्तं नौमि नाभेयं कल्याणकलशं सताम् ॥
रेजुराम्रदलानीव यत्कर्णनिकटे जटाः ॥ १ ॥
भक्तिरागभृतानन्तभव्यस्वान्तस्थितेरिव ॥
विद्रुमच्छायकायोऽसौ वासुपूज्यः श्रियेऽस्तु वः ॥ २ ॥
स्वार्थेऽहं कमठात्कष्टं सेहे भोगी तु मत्कृते ॥
तन्मान्योऽयमितीवामुं पार्श्वो मूर्ध्ना वहन्मुदे ॥ ३ ॥

रणेऽपि धीरा वीराः स्युर्महावीरस्त्वसौ यतः ॥
देवीहावैर्जितो नेति यं स्तौतीन्द्रः स वोऽवतात् ॥ ४ ॥
अन्यानपि जिनान्नौमि ध्यायामि श्रुतदेवताम् ॥
प्रारब्धसिद्धिफलदाञ्श्रये कल्पतरून् गुरून् ॥ ५ ॥

(अर्हं) यस्य कर्णसमीपे जटा आम्रपत्राणीव रेजुस्तं सज्जनानां कल्याणस्य घटरूपं नाभिपुत्रमृषभदेवं नौमि। भक्तिसम्बन्धिप्रेमरूपरागपूर्णानन्तकल्याणयुतो विद्रुमस्य कान्तिवत्कान्तिमान् स वासुपूज्यो युष्माकं कल्याणाय भवतु। अहं स्वार्थाय कमठात्कष्टं सहे स्म सर्पस्तु मदर्थं कष्टं क्षमते स्म, अतोऽयं सर्पो मान्य इतीवासुं सर्पं शिरसा वहञ्छ्रीपार्श्वनाथो हर्षाय भवतु। धैर्यवन्तो रणे वीरा अयं तु ततोऽपि महावीरो, यतो देवीकटाक्षभावादिभिरपि न जित इति इन्द्रस्तुतः स महावीरो युष्मान्रक्षतु। इतरानपि जिनेश्वरान्नौमि, आर्हतीं भारतीं हृदि धारयामि, सकलमनोरथसिद्ध्यर्थं कल्पवृक्षसदृशान्गुरूनाश्रयामि। सज्जनानामानन्दजनकः सर्वस्मिँल्लोके श्रेष्ठतया व्यवस्थापकः प्राणिनामुद्धारकरणेन शोभमानो धर्मश्चिरञ्जीयात्। यस्माद्धर्मादमूः बुद्धिः, श्रीः, वृद्धिः सिद्धिश्चेति चतस्रः क्षीरधारा इवाचरन्ति, स कल्पवृक्षसदृशो धर्मो युष्माकं मनोरथान्देयात् ॥

धर्म एव परोपकारिणां मुख्यः, यः स्वाधिपत्येऽपि सांसारिकेच्छारहितः सन्नाश्रितेभ्यो मोक्षं ददाति। येषां बुद्धिः

सर्वदा धर्मे रमते, भुवि लब्धोत्तमयशसस्ते सज्जनाः सततं जयन्ति। विदुषां सम्मताः सकलमनोरथसाधकाः दानं, शीलं, तपः, भावश्चेति चत्वारो धर्मस्य भेदाः सन्ति। भयङ्कररसंसाररूपसमुद्रस्य सेतुसदृशास्ते दानादयो महतां पुरुषाणां चरित्रश्रवणाद्धि-द्भिर्दर्शायन्ते। अतो यो हि इन्द्राणां पूजनीयः "वासुपूज्य" इति नाम्ना प्रसिद्धः, तस्य तीर्थरक्षकस्य सत्पुरुषाणाममृतवृष्टिकरं कल्याणप्रदं कर्ममालिन्यक्षालने समर्थं मनोहरमिदं चरितं रचयामि। कल्याणानां निधिः, मेरुपर्वतेन शोभमानभूमिर्लक्षयोजन-विस्तृतो "जम्बू" नामा द्वीपोऽस्ति, यस्योत्तरक्षेत्रे नानारत्नयुक्तो "जम्बू" नामा वृक्षो मयूरपिच्छरचितछत्रमिवेतरद्वीपविजयेनो-न्नतशिरा अस्ति यो। जम्बूद्वीपोऽस्यां भुवि अनन्तप्रतिमोऽस्ति यस्मादुत्तमोऽन्यो द्वीपो नास्ति। अनादिनिधनोऽपिपण्डितैः "सप्तवर्षमयः" कथितः। स कङ्कणरूपेण लवणसमुद्रेणावृतो सच लवणः द्विलक्षयोजनो विस्तारवानस्ति। यो लवणसमु-द्रोऽन्तः पर्वतस्थमन्दिरेषु स्थितानां शास्वतप्रतिमानां पुरो भक्त्या कल्लोलरूपभुजैर्नृत्यति गम्भीरगर्जितेश्च गानं करोति। लवणसमुद्रस्य परभागे "धातकीखण्ड" नामा द्वीपोऽस्ति। यः पृथुत्वे चतुर्लक्षयोजनो विस्तृतः। अयं द्वीपो मन्नाम्ना प्रसिद्धोऽस्ति, इतिहेतोर्मेरुपर्वतस्था धातकीवृक्षा रत्नमया यत्र नृत्यन्ति, नीतिधर्मयोश्चतुरङ्गिणीसेनाद्यूतफलकं यो धातकी-खण्डश्चःतुपष्ट्या विजयैः पदातिसैन्यैरिव शोभते। यस्मिन्धातकीखण्डद्वीपे द्वादश सूर्या द्वादश चन्द्राश्चान्तःस्थितकाम-क्रोधादिपड्शत्रुविजयवतो जनस्य तेजःकीर्त्तिलक्ष्मीनां कुण्डलानीवाचरन्ति। तस्य धातकीखण्डस्य परिवेष्टनत्वेन स्थितः सर्व-तोऽष्टलक्षयोजनविस्तृतः "कालोद" नामा समुद्रोऽस्ति। सरस्वती नित्यं दिग्रूपपत्रेषु अर्हतामनन्तान् शौर्यादीन्गुणाँल्लिखत्विति-बुद्ध्या यः कालोदसमुद्रः स्वजले मषीभावं धत्ते। तस्य परतः षोडशलक्षयोजनविस्तृतः "श्रीपुष्करवर" नामा द्वीपोऽस्ति।

तस्य कमलवासिन्यः श्रेष्ठश्रियो नामार्थमत्यन्तं मत्तभ्रमरगुञ्जितैः कमलैर्विस्तारयन्ति। तस्य द्वीपस्यार्धभागे "मानुषोत्तर" नामा पर्वतोऽस्ति, तस्य शिखरे जिनेश्वराणां मन्दिरं मुकुटमिव स्फुटं राजते। तस्मादर्वाग्विभागे पृथिव्या भूषणरूपः स्वर्णपर्वतोऽस्ति, यत्कान्तयो नीलकमलसदृशाकाशे केसराणीवाचरन्ति। ततः पूर्वदिशि सज्जनानां प्रियं "पूर्वविदेहे" तिनाम क्षेत्रमस्ति, यत्र जिनेश्वराणां वचनरूपसुधासेचनात् मोक्षरूपिणो वृक्षा जायन्ते। तत्क्षेत्रे सीतानाम्न्या नद्यास्तरङ्गैः सिञ्चितवनभूमिर्विस्तारयुक्तमङ्गलवान् "मङ्गलावती" नामा विजयोऽस्ति। यत्र रात्रावपि जना रात्रीयशरीराभूषणैर्ध्वस्तसकलान्धकाराः सन्तः समीपमार्गेषु गच्छन्ति॥

यत्र शून्येऽपि पथि पतितामिन्द्रनीलमयमालां जनाः सर्पबुद्ध्या न गृह्णन्ति। तत्र सुवर्णानां पात्रं, पृथिव्यास्तिलकं शत्रुरहितपुरुषरूपरत्नैः शोभि "रत्नपुरं" नाम नगरमस्ति। यत्र नगरे गृहे लक्ष्मीर्धर्मेण स्वचापल्यं तत्याज, यल्लक्ष्म्याश्चापलं कोटिपतीनां गृहोपरिस्फुरन्तीनां वैजयन्तीनां व्याजान्मूर्त्तिवदिव जनैः दृश्यते। तत्र नगरे प्रजानां पालको दोषाणामभूमिः "पद्मोत्तर" नामा राजाऽभूत्। आकाशमण्डलस्य श्यामताव्याजाच्छ्यामामालिनो यस्य तेजोरूपप्रदीपस्य च्छाया इव शत्रूणां दुर्यशो वभौ। यस्य राज्ञस्तरवारिः शत्रुस्त्रीणां स्मितामृतमापीयोद्गारवद् यशांसि चकार। स्वशरीरकान्तिसमूहेनाभूषणस्य सन्देहोत्पादकः स राजा एकदा सभायामागत्य भद्रासनं शोभयामास। यथा लक्ष्मीक्रीडावापी हंसैः शोभते तथा सा सभा राजचरणसेवनेच्छावद्भिर्जनैः शुशुभे। तत्र सभायां श्वेतकेशव्याजादन्तः परिमाणत्वाभावात्वहिः प्रकाशयन्त्या धवलया बुद्ध्या शोभमाना विमलबोधाद्या मन्त्रिण आसन्॥ तत्र सभायां सभ्यजनैः कथितानि सुष्ठुवचनानि स्वहृदये निविडतया जनाः कर्णेषु धारयामासुः। तत्र शरीरकान्तिया-

चक्रैरिव परस्परसंघर्षमुखरै रत्नैर्भूषिता व्यवहारिका उपविष्टा आसन्। येषां राज्ञां सैन्यगमनोद्धतधूलिमलिने गगने सूर्यः शत्रुस्त्रीभिरश्रुपूर्णनेत्राभ्यां दृष्टः। येषां यशः खद्योतपोतस्य शोभां दधौ। येषां तरवारिरुदेष्यतः प्रतापरूपाग्नेर्धूमदण्ड इव युधि शत्रुदुर्यशोरूपकृष्णाङ्गारसङ्घात्कर्पूरसमूह इव बहुकालपर्यन्तं स्थिरं तस्थौ। तेऽपि राजानस्तत्र सभायां स्वाम्यादेशरूपमेघस्य रसपानाय लालसावन्तश्चातकपक्षिण इवोर्द्धमुखाः सन्तो यथास्थानं तस्थुः। अथ तान्नृपान् स्वभुजौ चाहङ्कारेण मुहुः पश्यन् स पद्मोत्तरराजा महामन्त्रिणमुवाच। राजा बाहुबलेन दिक्चक्रमाक्रामति, इति नाश्चर्यं, यतो बाहुबलमेव सर्वबलेभ्यो महदस्ति॥ हे सामर्थ्यवन्? यदीदमनुचितं वच्मि तर्हि नीतिशिक्षान्देहि यतो भवान् मत्पितामहस्यापि शिक्षागुरुरस्ति। अथ मन्त्री—"अयं नृपो बाहुबलेनोन्मत्त इति हेतोर्विदुषां हास्यं वचनं वदति" इति विचारयामास। राजा च विचारयन्तं तमब्रवीत्, कथं न-भवान् मद्वचनस्योत्तरं ददाति? इत्थं राजवचनं श्रुत्वा स्वदन्तरूपचन्द्रकान्त्या नृणां मोहरूपान्धकारं हरन् स मन्त्री नृपमुवाच। हे प्रभो! त्वया यत् सर्वबलेभ्यो बाहुबलं महदुक्तं तदयुक्तम्, यतो येन तद्बाहुबलं सफलं स्यात्तत्पुण्यं किं प्रबलं न?। राजो-वाच, हे मन्त्रिन्! राज्ञां बाहुबलमर्थसाधकं यत्पुण्यं भवानादिशसि तत्पुण्यं किम्?। इत्थं राज्ञि वदति स मन्त्री वदतिस्म, पूर्वधर्मस्य फलरूपमर्थसाधकं पुण्यमेवोच्यते पण्डितैः। हस्तिनां तेजोबलं राजापेक्षया महच्छोभते तथापि यद्राज्ञां हस्तिनो यानं-तदत्र पुण्यमेव कारणम्। यतः शक्तिवंशशरीरहीनमपि, राजानं श्रेष्ठराजानोऽसेवन्त तेन पुण्यं प्रमाणभूतम्। तथाहि—

॥ अथ पुण्याढ्यनृपकथा ॥

संसारस्य हृदयग्राहि, महत्त्वशालि, लक्ष्मीपूर्णं पद्मपुरं नाम नगरमस्ति। तत्र क्षत्रियसंग्रामरूपयज्ञकारी भुवनरूपकमलविकसन-

सूर्यः "तपननामा" राजाभूत् । अथ कदाचिद् "धनावह" नामा व्यापारी श्रेष्ठं हस्तिरत्नमादाय तत्राजगाम। राज्ञां भृशं भाग्येनैतद्रत्नमेति, इत्थं निपुणजने कथयति स राजा हस्तिसम्मुखं ययौ। राजानं दृष्ट्वा स हस्ती मेघवन्ननाद। येन राज्ञो देहे रोमाञ्चता जाता । शिरःकम्पनव्याजात् स राजा तस्य गजस्य सर्वाङ्गं पश्यन्नचिन्तयत् । अयं हस्ती ऐरावतं द्रष्टुं मेघ इव गर्जति । अयं हि शक्रगजं स्पर्धयन् शक्रसदृशभाग्यवतामेव यानतां याति इति विचारयन्स राजा व्यवहारिणं सम्मान्य गज-परीक्षकान् मूल्यं कर्त्तुमादिदेश । ते विशारदा हस्तिनो लक्षणानि दृष्ट्वा संजातरोमाञ्चाः सन्तो राजानमूचुः । राजन् ! शास्त्रोक्तदोषरहितो गुणयुतश्चैक एव हस्ती अद्यपर्यन्तं दृष्टः । अयं गजो यस्य राज्ञो द्वारि स्थास्यति, अनायासेनैव स राजा दुःसाध्यानपि शत्रूञ्जेष्यति । अयं गजो यस्य राज्ञो गृहे भविष्यति तस्य राज्ञो देशः सत्ययुग इव पुण्यमयो निर्भयश्च शोभते । हे राजन् ! अस्य गजस्य मूल्यं नास्ति वणिक् यद् याचते तद्देयमेव। अथ किन्ते हस्तिमूल्यं ददामीति राज्ञा पृष्टः स व्यवहारी उवाच । राजन् ! विन्ध्याचलरूपराज्ञो युवराज इवायं हस्ती सर्वहस्तिषु श्रेष्ठः साम्प्रतं हस्तिवन्धिषु विख्यातोऽस्ति । स्वदा-रिग्र्यरूपवृक्षोत्पाटयितुकामाः के के नास्य वन्धने मारम्भं चक्रु ?। यथाकिमपि साम्यं वैषम्य वा विस्तारयन्तीभिः स्त्रीभिर्मुनिर्नि वद्धुं शक्यते तथा वारिभिरयमपि वद्धुं न शेके । एनं गजं वायुमिव सम्यगग्राह्यं मत्वा करिवन्धिनां लक्षेण विलक्षेणावल्यत । ततः सुस्वप्नशकुनसमूहैरधिकोत्साही अहमस्य वन्धाय विन्ध्याद्रिं गत्वा वासमदापयम् । अथायं हस्ती कथं ग्राह्यः ? इति चिन्तायुतस्य ममानन्देन रोमाञ्चं रचयन्, असम्यक्त्वं मुक्तिस्पृहिनमिव मां हसतां सज्जनानां चित्ते चमत्कारं कुर्वन्, कोमल-गर्जनेन मत्तभ्रमरगानेन स्वक्रीडानर्त्तकीमिव शोभां पुरो नर्त्तयन्, वनदेवीभिः सकौतुकं दृष्टोऽयं गजः स्वयं शनैः वनान्मम वास-

स्थानमाजगाम। अथाश्चर्यान्वितेन मयायं गजः प्रत्यक्षं स्वभाग्यदैवतमिवापूजि। अतिप्रसन्नोऽयं गजो नमस्कारं कुर्वतो मम पृष्ठे गुरुस्वामीव कोमलं स्वशुण्डाग्रं स्थापयामास। अथासौ हस्ती शुण्डेन मां संकेतं कृत्वा यथा मुनिररण्यं याति तथा राजधानीं प्रति-संनचाल। अथ विवेकं सद्गुणा इव पृथिवीमध्ये क्रीडाकारिणमेनं गजं वयं प्रीत्याऽनुगच्छामः। राजधानीनां सामीप्यं दूरतस्त्यजन् राज्ञां क्रयोत्कण्ठितं संघमपि वलाल्लङ्घमानो मयाऽनुगम्यमानः सततं प्रयाणकारी गजराजोऽयं स्वगृहवदागत्यात्र-तस्थौ। अयं यां दृष्टिमन्येषु राजसु कोपरक्तामिव ददौ तां दृष्टिं त्वयि प्रमोददुग्धक्षालितामिव ददौ। तन्नूनं त्वद्भाग्यमेवैनं गजमानिनाय, गजानुगामित्वाच्च मद्भाग्यैस्त्वं दृष्टोऽसि। ततो हे राजन्! बहुपुण्यैः क्रय्यमेनं गजं गृहाण, भवन्मस्तकदर्शना-दहमद्य कृतार्थोऽस्मि। इत्थं तस्य व्यवहारिणो वचनं श्रुत्वा प्रीतो राजा मन्त्रिसम्मुखं दृष्टिं ददौ, उवाच च। एकतोऽयं वन्यं-गजमानिन्ये, एकतश्च प्रतारणारहितं वचनं जगाद। तदमूल्यद्वयं दातुरस्य सर्वां पृथिवीमपि दत्त्वाऽहमनृणी न भविष्यामि किं करोमि?। एवं राज्ञि वदति सति स व्यवहारी उवाच। स्वामिन्! अयं गजस्तवैवेति मयोक्तः, अतोऽस्य मूल्यं ध्रुवं न ग्रही-ष्यामि। एवं निश्चितवते तस्मै व्यवहारिणे मन्त्र्यनुमत्या बलेन स्वराज्यार्धं दत्त्वा राजा गजं जग्राह। ततो राजा हस्तिनं-सम्पूज्य तमधिरूढो दिशो वशीकर्त्तुमना युद्धयात्रां चकार ॥

ढक्कादिशब्दैर्बधिरं धूलिभिश्चान्धकारं कुर्वत् राज्ञोऽस्य सैन्यं भूगोलं संकटयुतमिव कुर्वत् प्रतस्थे। शत्रूणां नाशाय कोपा-ग्निरिव स गजः सर्वसैन्यानामग्रतश्चचाल। गर्वाद्ये राजानः पूर्वं नासुं राजानं नेमुस्तेषु स राजा दयां त्यक्तवान्। रणेषु स गजो-

वृक्षान् वायुरिव तृणसमूहमिव शत्रुसैन्यं विलोडयामास। सर्वसैन्यानां दर्शनीभूतः स गजराजो यथा वायुर्मेघान्नाशयति तथा-शत्रूञ्छीघ्रं त्रासयामास ॥

असौ गजराजः शत्रूणां दुर्गकपाटान्दन्तप्रहारैर्दलन् दुर्गस्थानपि शत्रुभटान्नाशयन्भयङ्करदशां चक्रे। इत्थमेष गजराजः शत्रूणा-मस्त्रैः स्वगतिं गोपयन् रणे स्वदन्तप्रहारैः शत्रूनजयत्। असत्यरीत्या प्रसिद्धान् दिग्गजान् दृष्ट्वा ताञ्जेतुमिव अनुचलत्सैन्यः स गजराजश्चतुर्दिक्षु विचचार। स्वशक्त्या दुर्जयशत्रून्यो जितवान्तस्मिन् गजराजे राज्ञो विस्मययुतं मनो रेमे। पदेपदे तं गजराजमेव पूजयन् स राजा विजयलक्ष्मीमङ्गलार्थमागतैः राजभिः सह स्वनगरमागमत्। तत्समये मन्त्रिणो राज-प्रवेशोत्साहे रम्यं तन्नगरमिन्द्रस्यापीच्छाविषयीभूतं चक्रुः। राजदर्शनार्थं गवाक्षेषूपविष्टनारीसमूहेन शोभितं केशरस्यासारक्षर-णेन व्याप्तभूमितलं गगनगङ्गां जयन्तीभिः पताकाभिरद्भुतमुच्चतोरणस्तम्भेषु बद्धमहागजं नानामनुष्यैरलङ्कृतं जनानां हासैः सहासमिव तत्पुरं दुर्जयशत्रुविजयेन प्रहृष्टमना राजा तद्गजेन सहैव प्राविशत्। प्रसन्नैः पुरवासिभिः पदे पदे स्तूयमानः स-गजराजः स्वशुण्डाग्रेण भूमिं लिखन् विलक्ष इवालक्ष्यत। क्रीडापूर्वकं खेलन् गजराजः कुतोऽपि हट्टात् धर्मवृक्षस्य बीजमिव निर्मलं खटीखण्डं शुण्डाग्रेणाग्रहीत्। शुण्डाग्रेण खटीखण्डं धारयनयं गजः स्वर्गदण्डस्याग्रभागे लम्बमानचन्द्रयुतमाकाश-मिव रराज। सम्प्रति गजोऽयं खटीखण्डेन किं करिष्यतीति विस्मययुतपुरवासिभिर्दृष्टः, स्थाने स्थाने नगरवासिभिः पूजितो गजरा-जो राजगृहस्याङ्गणे समागतः। महाश्चर्येण निश्चलैर्विद्याधरैरपि दृश्यमानः कृत्यविदयं गुणी गजः खटिकां गृहीत्वा राजभवनस्य भित्तौ संसारस्य चतुर्गत्या निर्गच्छन्मार्गमिव चतुष्पादं श्लोकं लिलेख ॥

"अविज्ञातत्रयीतत्त्वो मिथ्यासत्त्वोल्लसद्भुजः ॥ हा मूढ ! शत्रुपोषेण मित्रप्लोषेण हृष्यसि" ॥ १ ॥

अस्यार्थः-हा मूढ ! त्वं तत्त्वत्रयस्य ( धर्मतत्त्वस्य ) ज्ञानं विना व्यर्थबाहुबलेनाहङ्कारं कृत्वा शत्रूनानन्द्य मित्राणि
अपि प्रपच्छ । पण्डितराजैरपि
च विनाश्य हृष्टो भवसि । अथासौ राजा निर्दोषं श्लोकमिमं दृष्ट्वाऽर्थमजानन् अर्थज्ञान्मन्त्रिणः पप्रच्छ । पण्डितराजैरपि
तैर्मन्त्रिभिः स श्लोको न ज्ञातः, अतिदीर्घशरीरवानपि मनुष्यः समुद्रं चरणाभ्यां न लङ्घते । अथ मुखाग्रे
दन्तकिरणैस्तोरणीरूपं कुर्वन् राजा सरस्वतीं स्वजिह्वारूपासने उपवेशयामास (अर्थादुवाच ) । ममेष्टदेवता कापि मयि-
संसारविजयं दत्त्वा शिक्षां दातुं गजरूपं धृत्वा श्लोकं लिखतिस्म । अहमस्य श्लोकस्यार्थमविज्ञाय स्वगृहं न प्रवेक्ष्यामि। यतः शत्रुः
कः ? मुहृत्कः ? इति सन्देहे जाते शरीरे सुखं कुतः ?। एवं कथयित्वा श्लोकार्थं ज्ञातुमिच्छुः स राजा तत्रैवासनं निधायोपवि-
वेश । अथ स्वबुद्ध्या बृहस्पतिमपि हसन्तो विद्वांसः समागताः, परन्तु यथा टङ्कैर्वज्रमणिर्भेत्तुं न शक्यते तथा तैर्विद्वद्भिरपि स-
श्लोको न ज्ञातः। अथ राजा जनसमूहेषु स्वबुद्ध्या गर्ववन्तो ये धर्माचार्या आसन्, तानाहूय श्लोकस्यार्थं पप्रच्छ। तेऽपि समीचीन-
मर्थं न कथयामासुः, ततो राजा किंकर्त्तव्यविमूढ इवाब्रवीत् । यथा सुमेरुपर्वतेन वायवो गर्वरहिताः कृतास्तथानेन श्लोकेन पण्डिता
गर्वरहिताः कृताः । अद्यापि क्वापि कोऽपि पण्डितोऽस्ति ? नवा ? यो यथार्थं श्लोकार्थं वदेदिति राजनि वदति सति मुख्य-
मन्त्री कथयतिस्म । राजन् ! महाबुद्धिमान् जैनशासनस्य तत्त्वज्ञ एक आनन्दचन्द्रसूरीन्द्रोऽस्ति, योऽद्यापि नागतः । अथ-
राजोवाच, यदन्ये विद्वांसो न ज्ञातवन्तः; तत्स कथं ज्ञास्यति ? तथापि तमाकारय, सोऽपि मम संशयं दूरीकरोतु । अथ मन्त्री स्वयं-
गत्वाऽऽचार्यश्रेष्ठं तं नत्वा कार्यं कथयित्वा प्रसन्नं कृत्वाऽऽनीतवान् । अथ तीर्थङ्करप्रभोः शासनं शोभयितुमनांसस्ते नीतिनिर्मला-

विद्वांसो राजसभायामागताः। मूर्त्तिधारिणं शान्तरसमिवायान्तं मुनिं दृष्ट्वा स गजः स्वदन्तौ भूमौ संन्यस्य मुदा शब्दं कुर्वन् नमस्कारमकरोत्। मोहरहितो देवांशवानयं हस्ती यं मुनिराजं ननाम तं वयं कथं न नमस्कुर्मः?। एवं विचार्य राजा स्वासनादुत्थाय सपरिवारः संसारादुद्धारकं तं मुनिराजं नमश्चकार। ततः श्रेष्ठासने तं मुनिमुपवेशयित्वा स्वयं राजा तदग्रेऽतिभक्त्योपविश्य भित्तौ लिखितं श्लोकं दर्शयनर्थं पप्रच्छ। अथ स मुनिराजो दन्तकान्तिव्याजाद् भक्तेभ्यो मोक्षरूपशिलायाः किरणानां वर्णिकां दर्शयन्नुवाच। यो देवगुरुधर्माणां त्रयीं यथार्थत्वेन जानाति, तस्य बुद्धिः सदा सत्त्वगुणे रमते, स मित्रं शत्रुश्च भेदतो जानाति। यदुक्तम्—

"वीतरागप्रभुर्देवो गुरुस्तत्त्वोपदेशकः। धर्मश्च करुणारम्यस्त्रयीतत्त्वमिदं विदुः॥"

अस्यार्थः—रागरहितः प्रभुर्देवः, यथार्थोपदेष्टा गुरुः, दयया रमणीयश्च धर्मः, इदं त्रयीतत्त्वं विद्वांस आहुः॥

यत् संसाररूपं महासमुद्रं क्रममात्रेणोल्लङ्घयति तदुत्तमं सत्त्वम्, यत्तु स्वकर्मणा मरिष्यत्शत्रुनाशकं च तन्मिथ्यासत्त्वमुच्यते। रागद्वेषादयः शत्रवो वारम्वारं शरीरं दहन्ति, अतो विद्वद्भिस्ते रागद्वेषादयः शत्रवः समूलं समतारूपास्त्रेणोन्मूलनीयाः। सर्वे प्राणिनो मित्राणि सन्ति, योहि शत्रुरपि स्वकर्मनाशकः—क्रुद्धश्चास्ति स शान्तिरूपामृतैः शान्तः कर्त्तव्यः। मूर्खाः कषायविषयरूपान् शत्रून्मित्रवत्पालयन्ति, प्राणिनो मित्राणि शत्रूकृत्य निघ्नन्ति, अतस्तान् धिक्। हे राजन्! अवधिज्ञानी तव पूर्वजन्मनो मित्रमयं गजः सुष्ठु श्लोकेन भुक्तराज्यस्य तव संयमे शिक्षां ददौ। इति गुरोर्वचनेन श्लोकार्थं ज्ञात्वा स राजा परमानन्द-

प्राप्त्या संजातरोमाञ्चोऽब्रवीत् । अद्य मे जन्म सफलम्, यत् संसाररूपमहासमुद्रादुद्धाराय पोतसदृशं भवन्तं गुरुराजं प्राप्तवानस्मि । तत्प्रसादेन संसारमसारं ज्ञात्वा योगं कर्तुमनाः पृथिवीभोगं त्यक्तुमिच्छामि । हे प्रभो !—अमृतमयदृष्ट्या मां वीक्ष्य, दीक्षां देहि, संसारोत्थिताः शरीरे दाहज्वररूपास्तरङ्गाः भवद्भिर्विलीयन्ताम् । इत्थं राजोक्त्वा स्थिरमना भूत्वाऽऽनन्दचन्द्रसूरीणां चरणद्वयमग्रहीत् । अन्येऽपि जनाः श्लोकार्थं ज्ञात्वा लब्धज्ञानाः सन्तस्तं मुनिं प्रणम्य दीक्षामयाचन्त । "अयं गजराजः स्वशुण्डाग्रेण कलशं गृहीत्वा यमभिषिञ्चति स मम राज्यासने उपविशतु" । इति राजा मन्त्रिसमूहमादिश्य मोक्षमार्गप्रदर्शिनीं दीक्षां स्वीचकार ॥

निर्मलबुद्धिमन्तस्तेऽपि विद्वांसः संसारादुद्धारकारिणीं दीक्षां तेभ्यो नगरवासिभ्यो ददुः । अनन्तरं शिष्यगणसहितः स मुनिराजो जिनशासनस्य प्रभावं विस्तारयन्विहारं कृतवान् । ततो मन्त्रिणो मङ्गल्यकलशं गजराजस्य शुण्डे निवेश्य प्राञ्जलयो भूत्वा तमूचुः । हे गजराज ! यः शौर्यादिगुणैः राजत्वं शोभयति तस्मै कस्मैचिद्राज्यलक्ष्मीं दत्त्वा विजयी ( त्वं ) भव । अनन्तरं सुवर्णभूषणभूषितः स गजराजो गम्भीरशब्दं कुर्वन् मत्त इव प्रचचाल । मह्यं राज्यं दास्यतीति बुद्ध्याऽग्रे समागतान् दरिद्रान् राज्ञश्च तुल्यदृष्ट्या पश्यन् स गजराजो मार्गे विघ्नरूपांस्तानमन्यत । वायुरिव चञ्चलत्वेन गच्छन् स गजराजो ग्रामे, उद्याने, पृथिवीष्वपि न तिष्ठतिस्म । अयं गजः कुत्र गच्छतीति चिन्तया व्याकुला मन्त्रिणः प्रभावा मन्त्रिपानुजग्मुः । यथा रत्नार्थी समुद्रं गच्छति तथा राज्यभारधारणयोग्यपुरुषार्थी स गजो दुर्गमं वनं प्रविवेश । तत्र वृक्षमूले सुप्तं वृक्षत्वचाऽऽच्छन्नशरीरं कंचन पुरुषं स गजः कल्याणकलशजलैरभ्यषिञ्चत् । ततो बन्दिगणा जय जय शब्दं चक्रुः,

तेषां शब्देन पूर्णे जाते दिक्चक्रे मन्त्रिणो यावदिमं पुरुषमुत्थापयामासुस्तावत् संकुश्चितसकलशरीरं तं पुरुषं ददृशुः। यद्यपि हा ! एष पुरुषः प्रत्यक्षराजलक्षणेन युक्तोऽस्ति, तथापि न पद्भ्यां गन्तुं समर्थो न च हस्ताभ्यां तृणानपि गृहीतुं समर्थोऽस्ति। किमीदृशोऽपि राज्यधारणे समर्थः स्यात् ? इति मन्त्रिषु चिन्त्यमानेषु स गजस्तं पुरुषं शुण्डाग्रेण पृष्ठे समारोप्य नगरं गन्तुं प्रययौ। अयं गजो ज्ञानीति नूनम् अनेन पुरुषेण राज्यं वर्धिष्णु दृश्यते इति विचार्य मन्त्रिणो विचित्रंग्रामप्रवेशोत्सवं चक्रुः। यस्य कुलं शीलं चाज्ञाते स्तः परमेतस्य भाग्यं मनोहरमिति तस्य राज्याभिषेकोत्सवं पुरवासिनो विस्तारयामासुः। राज्ये ये प्रधाना आसन् ते तं नमश्चक्रुस्तथा "पुण्याढ्य" इति तस्य नाम कृतवन्तः। राज्यार्धमाप्त्याऽहङ्कारी धनावह नामा श्रेष्ठी पङ्गुममुं न नमामीति विचार्य नगराद्बहिर्निर्ययौ। तद्राज्यस्यार्धसैन्यान्यपि मण्डलेशा अपि पङ्गुराज्ञा विरक्ता भूत्वा धनावहमनुजग्मुः। हस्तिसहिता हस्तिपका अश्वसहिता अश्वपकाः सेनापतयश्चापि धनावहमनुजग्मुः। बलवान् जयतीति विचार्य नगरवासिनोऽपि धनावहमेवानुजग्मुः। केवलमेक एवायं गजो हस्तिपकेन प्रेरितोऽपि न ययौ, यतो भाग्यहीनेषु तेषु महारत्नं गजः कथं यातु ?। एवं पुण्याढ्यभूपस्य केवलं राजगृहमेवाभूत्। सर्वं तु राज्यार्धभागिनं धनावहमनुजगाम। राज्यसिंहासनस्य भक्तेषु दुष्टगुणवानयं गज इति विचार्य धनावहः श्रेष्ठी सैन्यं संनद्धं कृत्वा चलतिस्म। तदा तस्य गजस्य यो हस्तिपक आसीत्स प्राञ्जलिर्भूत्वा पुण्याढ्यं राजानं निवेदयतिस्म। हे राजन् ! रणे निपुणोऽयं गजः सदा जयत्येव, अतः शीघ्रं भवान् आरोहतु, शत्रूणां शंकां मा करोतु। एवमस्तु, इति वदन्तं पुण्याढ्यनृपं हस्तिपकः यथा प्रभातकालः सूर्यं पूर्वपर्वते आरोपयति तथा गजे आरोपयामास ॥

अधन्या जनाः विरुद्धकार्यैर्धर्ममपि विरोधयन्ति ॥

जन्तुर्धर्माराधनाच्छुभं धर्मविरोधाच्चाशुभं लभते, अन्यत्किञ्चिदपि कारणं नास्ति। एवं निश्चित्य शुभात्मना सत्कृत्यं कृत्वाऽतुल्यकल्याणोत्पादको धर्मः सदा सेवनीयः। इत्थं मुनिराजस्य वचनं सर्वे धर्मात्मानः शिरं व्याधूयावृता इव शुश्रुवुः ॥

अथ पुण्याढ्यनृपः परं खेदमापन्नो हृदये विचारयामास, यदहं पूर्वजन्मनि किं युगपद्धर्माधर्मौ कृतवान् ?। येनैवं रीत्या तत्क्षणमिन्द्रगजं तथा परमसुखजनकं राज्यं लब्धवान्। इत्यधिकं विचार्य राजा शरीरसंकोचं भाग्योदयं च मुनिराजं तमपृच्छत्। ततः स्वदन्तकान्तिव्याजाद्धर्मरूपवृक्षस्य पुष्परूपया समीपमुक्तिरूपफलरूपया वाचा जनं मुनिरानन्दितवान्। रक्तकृष्णपाषाणमयगृहैः प्रकाशान्धकारयोर्मेलकं धर्ममुनेः स्थानं लक्ष्मीपुरनामकं नगरमस्ति। तत्र क्षत्रियवंशजाः प्रीतिपात्राणि राम–वामन–संग्रामनामानो मित्राणि त्रय आसन्॥ चतुर्दशवार्षिका विरहमसहमानाः पुरवासिनां प्रियास्ते सहेलं पुरि खेलन्ति स्म। सज्जनानां मनःसन्तोषकारकास्ते त्रयः साधूनां मनो–वचः–शरीराणां प्रपञ्चरूपा इव शुशुभिरे। कदाचित्ते त्रयः क्रीडनार्थमुद्यानभूमौ गतवन्तस्तत्र शरीरत्यागे स्थितं कमपि मुनिं ददृशुः। परमप्रसन्नास्ते मुनेश्चरणयोरग्रे शरीरं निधाय प्रणेमुः, यावत्पुण्येन लोकाग्रमुन्नमन्ति स्म। नमस्कारं कुर्वतो वामनस्य पृष्ठे मुक्तिरूपस्त्रिया संकेतरूपः क्षिप्तः सलिलविन्दुः पपात। चातक इवोर्ध्वं पश्यन् स साधोः सलिलमोचकमेकं नेत्रं ददर्श। स सम्यक्तया निरीक्ष्य स्वमित्रे जगाद, पश्यताम् ? एष कण्टकोऽस्य मुनेर्नेत्रं पीडयति ॥

अथायं निसर्गशोभावान् गजराजो योध्धुमचलत्। राजभक्ताः केऽपि वीराः पुरतोऽचलन्। अनन्तरं शौर्यलक्ष्मीरूपनट्या नाटकस्यारम्भे त्वराशालि कोलाहलशब्दं कुर्वत्तत्सैन्यद्वयं तत्रामिलत्। शौर्यलक्ष्मीच्छवो वीरा हाराणामिव पातिनां शत्रुतरवारिप्रहाराणां धर्तुं शरीराणि सज्जीचक्रुः। धनुःशब्देन शब्दायमानः हस्तिरूपमृदङ्गवान् वीराणां कवन्धेन नृत्यशाली एवं मनोहरः संग्रामः नाटकमिवाभूत्। अथ पुण्याढ्यराजभटान् वृक्षानिव समूलं नाशयद्भिः शत्रुसमूहैः नदीप्रवाहैरिव प्रसृतम्। अरे!-एष हस्ती न हन्तव्यः, एष पङ्गुरेव हन्यताम्, इति धनावह ऊर्ध्वपाणिं कृत्वा वीरानब्रवीत्। अथ स्वसैन्ये हतेऽपि दुर्धर्ष-एष गजराजो यथा मन्थानको दधि मथ्नाति तथा शत्रुसैन्यं ममन्थ। ततो यथा रात्रिभवैरन्धकारैराकाशमार्गो रुद्धो भवति तथा शत्रुसैन्यैः स गजराजो रुद्धोऽभूत्। एवमस्मिन् संकटे तिष्ठन् पुण्याढ्यराजा जनैरित्थं शोचितो यदुत गजराजोऽमुं कथं राज्यसिंहासनेऽध्यासितवान्?। आत्महस्तेन तृणमपि शस्त्रं कुरु, शत्रूञ्जय, इति भाग्यदेवताऽदृश्या भूत्वा पुण्याढ्यनृपमुवाच। तदैव भाग्यवशाद् वायुप्रेरितं तृणं तस्य राज्ञः करे समागतं शस्त्रमिति च मत्वा राजा शत्रूणामुपरि चिक्षेप। अथ शीघ्रं विकस्वरतेजःशालि स्वशब्देनाकाशमपि विद्रावयत्, दिङ्मण्डलमपि दहत्, पर्वतानपि कम्पयत्, जगत्त्रयमपि भस्मीकुर्वत् तत्तृणं, पुण्याढ्यनृपस्य पुण्यप्रभावाद् वज्रं गगनेऽभूत्। यो जनः पुण्याढ्यनृपं न नमस्करिष्यति तत्र शीघ्रं वज्रं पतिष्यति, इति राज्ञो भाग्याधिदैवतात् आकाशवाण्यभूत्। इति वृत्तान्तेन राजानो दन्तेषु तृणानि धारयामासुः, पुण्याढ्यनृपं च नमश्चक्रुः। अहो! पुण्यस्य महान्फलोदयः?। तव दासोऽस्मि, इति पुनः पुनः स्तुतिं कुर्वन्तं भूतले लुठन्तं धनावहं राजाऽनुजग्राह। अथ पुरं प्रविशतस्तस्य राज्ञो महानपि शत्रुसमूहः परिवार इवाभवत्। ये हि पुण्याढ्यनृपस्याज्ञां न स्वीकरिष्यन्ति तेषां विनाशायेदं

निश्चितं वायुना प्रेरितोऽयं कण्टको मुनेर्नेत्रेऽपतत्, परन्तु शरीरेऽपि ममतारहितोऽयं मुनिर्न दूरमकरोत्। शरीरस्याल्पत्वाद्यं मम करो मुनिराजस्य नेत्रपर्यन्तं न गच्छत्यतः कथमयं कण्टको दूरीकर्त्तव्यः। रामो वामनमुवाच, हे मित्र! खेदं मा कुरु, अहं हस्ताभ्यां पृथिवीं स्पृष्ट्वा चतुष्पद इव भवामि। त्वं मत्पृष्ठमारुह्य दीर्घशरीर इव भूत्वा हर्षं कृत्वा मुनेर्नेत्रात्कण्टकं दूरीकुरु। अथ संग्रामो गोब्भनाशकं वचनमुवाच, हे मित्र! मम हस्तं गृहीत्वा निश्चिन्तः सन् कार्यमिदं कुरु। ततः चतुष्पदीभूतरामस्य पृष्ठमारुह्य संग्रामस्य हस्तं वामेन पाणिनाऽवलम्ब्य स वामनः, अहो! अयं मुनिः कियान्मलिनोऽस्ति? इति कृशतीक्ष्णाग्रेण संकुचन् दक्षिणेन हस्तेन मुनेर्नेत्रात्कण्टकं चकर्ष। ते त्रयः सुखेन चलनार्थं स्वस्य मोक्षमार्गमिव मुनेर्नेत्रं निष्कण्टकं कृत्वाऽत्यन्तं प्रसन्ना बभूवुः। अस्मान् क्षत्रियान्विनाऽन्यः कोऽप्युपकारकर्त्ता नास्तीति मुग्धस्वभावाद् वामनो जातीयाहङ्कारं चकार॥

अथ कृतकृत्यास्ते त्रयो मुनिं प्रणम्य स्वनगरं चेलुः, मार्गे वामनो वचनमुवाच। येन मुनीनामिवास्माकं हर्षं उत्पादितस्तस्य कर्मणोऽग्रे कियत्फलं भविष्यति?। ततो रामो हसन्नुवाच। अत्रास्माकं कर्मणः फलं पशुसदृशमभूत्। ततः संग्रामोऽब्रवीत्, हे राम! इत्थं मा ब्रूहि, हास्ययुक्तवचनोच्चारणेनापि पुण्यस्य फलमल्पं भवति। यदस्य मुनिराजस्य नेत्रं निष्कण्टकं कृतं तेन जन्मान्तरेऽस्माकं निष्कण्टकं राज्यं भवति। अथ वामनो विशेषेच्छुः सन् तावुवाच, एतत्कर्मणः फलस्य प्रमाणं वक्तुं न शक्यते। इत्थं परस्परं वार्त्तालापं कुर्वन्तः प्रसन्नमानसास्ते त्रयोऽद्भुतं तत्कर्म विचारयन्तो गृहं जग्मुः॥

पुरवासिनां दुःखं मा भवत्विति परस्परं क्रीडन्तस्ते त्रयो वयस्याः धर्मकार्यकरणेन दिवसान्व्यतीतांश्चक्रुः। अथ हे राजन्! पापरहितास्ते त्रयो वयस्याः स्वायुषः पूर्णभूतत्वात् यथायथा समुत्पन्नास्तथातथा शृणु। "मम फलं पशुसदृशं स्यादि"

ति हास्यवचनोच्चारणेन रामो गजोऽभूत्, परन्तु पुण्यप्रभावादयं ज्ञानवानस्ति । " मुनेर्नैत्रात्कण्टकदूरकरणेनास्माकं निष्कण्टकं राज्यं स्यादि " ति कथनेन स संग्रामस्य जीवोऽहं तादृशं फलं प्राप्तवान् । पूर्वजन्मनि मित्रत्वादयं गजो मम समीपमागतः, आगत्य च मां बोधितवान्, इत्थं पूर्वजन्मनः फलं मिलितम् । हे राजन् ! यस्तु वामनो वंशगर्वात्किञ्चिद्वामन आसीत्तस्य शेषं स्वरूपं विशेषप्रकारेण श्रृणु । समस्तपदार्थानां रक्षाकारिणी "अवन्ती" नाम्नी नगरी वर्त्तते, यस्यां नगर्यां सरस्वती लक्ष्मीश्च जनानां मुखकमले सुखपूर्वकं क्रीडतः । तस्यां नगर्यां शस्यांसरूपपर्वतस्य शिखरात् पराक्रमरूपजलस्य वृष्टिकर्त्ता शत्रूणां रोधकारक बाहुवान् "सुबाहु" नामा राजास्ति । तस्य राज्ञः किन्नरनामा छत्रधारी तस्य हरिणीनयना "हरिणी" नाम्नी स्त्री बभूव । पुण्यवान् वामनस्यात्मा तस्या गर्भे ययौ, तदा गर्भप्रभावात्साऽद्भुतं स्वप्नं ददर्श । तत्कालं सा चन्द्रमुखी हरिणी सुखपूर्वकं शय्यात उत्थाय सावधाना सती पतिमुवाच । अद्य मया स्वप्ने, ममोदरे तेजःसमूहस्याभिषेकं विस्तारयन्ती सुमेरुपर्वतस्य शृङ्गे महालक्ष्मीर्दृष्टा । अथ किन्नरः स्त्रियमिदं कथयामास, हे सुन्दरि ! श्रृणु, एप तव स्वप्नः श्रेष्ठपुत्रोत्पत्तिं सूचयति । ततः सा हरिणी प्रसन्ना सती स्वामिनमाह, हे स्वामिन् ! अमृतमपि तिरस्कारकारकं तव वचनं सत्यं भवतु । इत्थं परस्परमालापं कुर्वन्तौ सुखपूर्वकं तौ दम्पती प्रसन्नतया देवपूजादि सत्कार्यं चक्रतुः । अथ गर्भप्रभावात्तस्य गृहे कान्ति–कीर्त्ति–सौख्य–समृद्धयः परस्परं स्पर्धां कृत्वाऽऽनन्देनैधाञ्चक्रिरे । तृतीये मासे पूर्णे सति हरिण्याः समुद्रस्यपाने पुण्यगर्भस्य स्थानं हृदये चिन्ताजनकं गर्भचिह्नं समुत्पन्नम् । दोहदेऽपूर्यमाणे हरिण्या आनन्दनाशकः शोषो बभूव (अर्थात्सा दुर्बलाभूत्) तेन किन्नरोऽपि महाखेदस्य पात्रमभूत् । स सहस्रशो मन्त्रशास्त्रज्ञान् पप्रच्छ, परन्तु कोऽपीदृशदोहदस्य

सम्पूर्णकरणे शक्तो नाभूत् । भाग्यवशात्कदापि सुबाहुराज्ञोऽग्रे विस्मयदर्शकः कोऽपीन्द्रजालकर्त्ता किन्नरेण दृष्टः । स किन्नरः तं पप्रच्छ, स आह, अहं दोहदं पूरयिष्यामि किन्तु तव पुत्रः संसारे विलक्षणो भविष्यति । अथ बुद्धिमान् स ऐन्द्रजालिकः तत्र गृहस्याङ्गणे छत्रधरस्य स्त्रियं निवेश्य समुद्रं दर्शयामास । उच्छलद्रक्तरत्नकिरणस्य श्रेणौ मग्नसूर्यं ( यत्र सूर्यो मग्नः ) तथोर्ध्वोच्छलज्जलकणानां समूहेन यत्र पक्षिणः शान्ता बभूवुः, अतिमधुरदुग्धवत्तरङ्गस्य रसेन यत्र देवाः प्रसन्ना बभूवुस्तं समुद्रं पातुमैन्द्रजालिकस्याज्ञया सा समुद्यताऽभूत् । ऐन्द्रजालिकस्य विज्ञानप्रभावेन सा एकेनैव श्वासेन समुद्रं पीतवती मुदा । पूर्णदोहदा सा शीघ्रमन्तःप्रेमवती भूत्वा मुहुरानन्दोद्रेकेण रोमाञ्चिता बभूव । अथ प्रसन्नमनाः स छत्रधारी सर्वस्वं दत्त्वैन्द्रजालिकं कृत्यकृत्यं चकार । अथ समुद्रपानकारिणी सा हरिणी कियता कालेन सकलसामुद्रिकसुलक्षणेन समन्वितं पुत्रमजीजनत् ॥

अथ तौ महोत्सवं कृत्वा शुभे दिने स्वप्नं स्मरन्तौ तद्रूपमेव तस्य "श्रीदत्त" इति नाम कृतवन्तौ । यस्य हस्तपादौ रक्तकमलसदृशौ, निर्मलचन्द्रस्य कान्तिहारकं मुखम्, एवमनुपमं सकलावयवं, स पुत्रो मातापित्रोरानन्दवर्द्धकोऽधिकं शुशुभे । अक्रमेणैव प्रकटाप्रकटगुणसमूहः स श्रीदत्तः क्रमशो बाल्यावस्थातः परं स्त्रीणां प्रियां युवावस्थां प्राप्तवान् । "ईदृशलक्षणवान्तु राजा स्यात्" इति लौकिकी श्रीदत्तस्य कथा राज्ञां सभायामपि समुपस्थिता । "गुप्तरीत्या श्रीदत्तो वध्यः" इति राजा स्वभटानाह, भयात्कस्य बुद्धिः पापे न रमते ? । (अर्थात्सर्वेषां बुद्धिः पापे रमते ) । पुण्ययोगेनैकतो भटाद्राजादेशं श्रुत्वा श्रीदत्तो रात्रौ गुप्त एवैकाकी नगरान्निर्ययौ । रात्रिन्दिवं निराहारं विहारं कुर्वन् क्षुधातृष्णाव्याकुलः स सप्तभिर्दिनैः किञ्चिद्वनं प्राप्तवान् । अज्ञातवृक्षनामा स संकोचनवृक्षस्य फलानि ( यस्य फलानां भक्षणेन शरीरं संकुचितं भवति ) चखाद, ततो वस्त्रेण शरीर-

माच्छाद्य क्वापि च्छायायां सुष्वाप। तद्वृक्षस्य फलमाहात्म्यात् सद्यः शरीरं संकुचितम्, स एवं भवाननेन गजराजेन राजा कृतः। यत्साधोरग्रे स्ववंशाहङ्कारो कृतस्तेन हे पुण्याढ्य! नीचकुले जन्म प्राप्तवानसि। यत्त्वया मुनेर्नेत्रात् कण्टको दूरीकृतः, तत् एकदैव शरीरसंकोचो राज्यं च प्राप्तम्। हे राजन्! यत्त्वया तस्य कर्मणः फलं प्रमाणरहितमुक्तमतः प्रमाणरहितमहत्त्वशालि तव राज्यं शुशुभे। हे राजन्! पुण्यप्रभावादद्भूतकर्मणस्तवेदृशमैश्वर्यं कदापि क्वापि कस्यापि नाभून्न भविष्यति च। तस्मात्कारणादस्माद् दृष्टप्रमाणात् संसारस्य भेदकारकसामर्थ्ययुक्ता जना नित्यं निर्मले कर्मणि तिष्ठेयुः ॥

## ॥ इति पुण्याढ्यनृपपूर्वजन्मकथा ॥

अथ राजोवाच, हे प्रभो! संसाररूपसमुद्रस्य सेतुरूपं धर्मराजस्य विजयपताकारूपं धर्मं कथय। अथ गुरुरुवाच, हे राजन्! प्रतिलेखादिकर्मसु त्वमशक्तोऽसि, अतस्तव व्रतं कुतोऽस्तु। हे विशिष्टपुण्यस्याश्रय! कष्टसाध्येन व्रतेन तव किं प्रयोजनम्? भवतोऽस्मिन्नेव जन्मनि मोक्षप्राप्तिर्भविष्यति। इत्थं गुरुणा कथितो गर्वरहित आश्चर्ययुक्तः स राजा किञ्चिद्विहस्य गुरूनुवाच, हे गुरो! कथं गृहवासिनो मम मोक्षप्राप्तिः?। तपनो मुनिरुवाच, हे पुण्याढ्य नृप! अत्र पञ्चदशभेदैस्ते सिद्धा भवन्ति। सिद्धस्तीर्थकरोऽतीर्थकरः प्रत्येकबुद्धकः। स्वलिङ्गः परलिङ्गश्च नरलिङ्गो नपुंसकः ॥ १ ॥ तीर्थसिद्धोऽतीर्थसिद्धः स्त्रीलिङ्गः बुद्धबोधितः। एकसिद्धोऽनेकसिद्धः स्वयंबुद्धो गृही तथा ॥ २ ॥

अस्यार्थः स्पष्ट एव। सार्धद्वयद्वीपेऽपि तु एकस्मिन्नेव समये एकमारभ्याष्टोत्तरशतं यावज्जीवाः सिध्यन्ति। सिद्धत्वे

जिनैः कथितं केवलज्ञानमेव कारणम्, तज्ज्ञानं तु सकलकर्मक्षयाद्भवति, कर्मक्षयस्तु ध्यानाद्भवति। 'अन्तर्मुहूर्त्तमेकाग्रेण यश्चिन्तनं तद्ध्यानम्" इदं ध्यानं चतुर्विधम्, आर्त्तम् १ रौद्रम् २ धर्म्यम् ३ शुक्लञ्च ४ इति। ऋतमिति दुःखं कथ्यते, तस्मादिदमुत्पन्नं भवतीतीदमार्त्तं ध्यानं कथ्यते, तदपि चतुर्विधम्। इन्द्रियानभिलषितवस्तूनां प्राप्तौ दुःखाद्याऽतीव विरहचिन्ता-ऽतीवोच्छेदचिन्ता भवेत्तत्प्रथम "आर्त्तध्यानं" कथ्यते। रोगे सति तत्प्रतीकारे एकाग्रमानसस्य रोगस्य वियोगचिन्तन मसंप्रयोगचिन्तनं वा तद् द्वितीय "आर्त्तध्यानम्" कथ्यते। अभिलषितवस्तूनां प्राप्तौ सत्यां प्रसन्नमानसस्य तद्वस्तूनां वियोगेचिन्ता तत्संगे च महतीच्छा इति तृतीय "आर्त्तध्यानम्" कथ्यते। लेशमात्रेणापि ज्ञानमप्राप्तवतो मनुष्यस्य चक्रवर्त्तिगुणस्येन्द्रादि गुणस्य तत्समृद्ध्याः प्रार्थनामयमधमं निदानं चतुर्थं "आर्त्तध्यानम्" कथ्यते। हिंसादिक्रूरकर्मयुक्तं रौद्रमाहुः, तेनोत्पन्नं ध्यानमपि रौद्रमुच्यते, तदपि चतुर्विधं कथितम्। निर्दयमनुष्यस्य जीवान् प्रति यत् वध-बन्धन-दाह-चिह्नन-मारणकर्मणां चिन्तनं तत्प्रथमं "रौद्रध्यानं" कथ्यते। अतिव्यसनासक्तस्य मायावतोऽसद्भूतजीवहिंसाकारकवचनप्रपञ्चस्य चिन्तनं द्वितीयं "रौद्रध्यानं" कथ्यते। अतिदुष्टस्यात्यन्तलोभासक्तमानसस्य, जीवघातस्य परद्रव्यापहारस्य च यच्चिन्तनं तत्तृतीयं "रौद्रध्यानं" कथ्यते। शब्दादिविषयानां पूर्णकरणाय धनस्य यत्प्राप्तेः संग्रहस्य रक्षणस्य च चिन्तनं तच्चतुर्थं "रौद्रध्यानं" कथ्यते। उत्तमविचारवद्भिरिदं द्वयं ध्यानं त्यक्तव्यम्, कदाचित्प्रमादादुपेक्षितं चेत्तदा महद् दुःखं करोति। यद्धर्माद्रहितं न स्यात्तद्धर्म्यं ध्यानमुच्यते, तदपि चतुर्विधं ज्ञेयम्। तत्र तत्त्वनिश्चयपूर्वकं जिनेश्वरस्याज्ञायाः पालनं यत्तत्प्रथमं "धर्म्यध्यानं" कथ्यते। विषयरूपशत्रुभ्यो रक्षणस्य चिन्तनं द्वितीयं "धर्म्यध्यानं" कथ्यते। शुभाशुभकर्मणां

विपाकस्य चिन्तनं तृतीयं " धर्म्यध्यानं " कथ्यते। उत्पत्तिविगमध्रौव्यस्थितिवतः पुरुषाकृतेराद्यन्तरहितस्य लोकस्य चिन्तनं चतुर्थं " धर्म्यध्यानं " कथ्यते। अथवा पण्डितैरिदं धर्म्यध्यानमन्यप्रकारेण चतुर्विधं कथितं, यथा, पिण्डस्थम् १ पदस्थम् २ रूपस्थम् ३ रूपरहितं च ४। यत्र विद्वान् शरीरस्थं नष्टकर्माणं चन्द्रवन्निर्मलं ज्ञानिनं परमैश्वर्ययुक्तमात्मानं पश्येत्तत् "पिण्डस्थं" कथ्यते। योगी गुरूणामाज्ञया शरीरसम्बन्धिकमलपत्रेषु यन्मन्त्राक्षराणि विचारयेत्तत् "पदस्थं" कथ्यते। प्रतिहारसहितं समवसृतिस्थितं ज्ञानिनं जिनेश्वरं तत्प्रतिमां वा यद् योगी स्मरेत्तद् " रूपस्थं " कथ्यते। निराकारं महानन्दमयं सिद्धं निरञ्जनं परात्मानं यद्योगी ध्यायेत्तत् "रूपरहितं" कथ्यते। हे राजन्! एवं संक्षेपेण धर्म्यध्यानं मया कथितं। सज्जनानामस्मिंल्लोकेऽप्यस्य माहात्म्यमनन्तं भवति। दुष्टकर्म्मोत्पन्नं शोकं यन्नाशयति तत् " शुक्लध्यानं " कथ्यते, तदपि चतुर्विधमस्ति। अनुभवेन विचारणात् पदार्थानां पृथक्त्वेऽपि पदे श्रुतेऽदृष्टस्यापि पदार्थस्य स्वरूपज्ञानं भवति, पदार्थे दृष्टेऽश्रुतस्य पदस्य यज्ज्ञानं भवति, तत्प्रथमं " पृथक्त्ववितर्केण विचारसहितं " भवति। वितर्कतः शब्दार्थयोरैक्यज्ञानं ददत् अपृथक्त्वविचारेण मनसो निश्चलतायाः कारणं, पूर्वश्रुतस्यानुसारेणोत्पन्नं केवलज्ञानस्य कारणरूपं, तद् द्वितीयं शुक्लज्ञानं "एकत्ववितर्काविचार" नामकं ज्ञातव्यम्। केवलज्ञानवतः प्रभोर्मोक्षकाले वचनमनोयोगयुगे निरुद्धे शरीरयोगेऽर्द्धनिरुद्धे यद्भवति, यत्र श्वासोच्छ्वासक्रिया सूक्ष्मरूपा भवति, यस्मात्पश्चान्न निवर्त्तते, तत्तृतीयं शुक्लध्यान " अनिवर्त्तकसूक्ष्मक्रिय " नामकं ज्ञातव्यम्। शरीरत्यागेऽपि यत्रात्मा शैलेशीकरणे स्थितः पर्वत इव समर्थः स्वीयं शरीररूपं न त्यजति, तथा श्वासोच्छ्वासादिका क्रिया यत्र न भवति यच्चानिवर्त्ति स्यात्तच्चतुर्थं " व्युपरतक्रिय " नामकं शुक्लध्यानं कथ्यते। केवलमात्मज्योति-

र्यं कर्मणां नाशादुत्पन्नं शुक्लध्यानं तु योगिनां केवलज्ञानसमये भवति। स्वतः सद्गुरूपदेशतो वा समुत्पन्नमिदं ध्यानं वज्रऋषभनाराचशरीरस्यैव स्थिरं भवति। स्थिरतां प्राप्तं कल्याणप्रदमिदं शुक्लध्यानं क्षणात् कर्मणां नाशं कृत्वा योगीन्द्रस्य केवलज्ञानं जनयति। हे पुण्याढ्य नृप! गृहस्थोऽपि समस्य ध्यानस्य योगेन केवलज्ञानं प्राप्य शिघ्रं सिद्धो भविष्यसि। तत्राभिज्ञजनानां शोभि तदभिज्ञानं त्वं शृणु, तव शरीरसंकोचरूपदोषः सर्वथा शरीराद् दूरीभविष्यति। तर्हि "हे प्रभो! मम गृहस्थानामेव धर्मं देहि" इति राज्ञा पृष्टः स सूरिस्तस्मिन्नेव समये प्रकाशितमहोत्सवे तस्मिन् राज्ञि द्वादशव्रतालङ्कृतं सम्यक्त्वं सविधि समर्पितवान्। सः सद्गुरुः कार्यक्षमाय तस्मै व्रतानां सेवने शिक्षां दत्त्वा विशेषप्रकारेणेत्थं ज्ञापयामास। सम्यक्त्वस्य तत्त्वज्ञोऽवधिज्ञानस्य निधिर्धर्मात्मा तथा तव वान्धवरूपोऽयं गजराजः कदापि न वन्धनीयः, अबद्धोऽप्ययं गजराजः किञ्चिन्न पीडयिष्यति, यतो द्वितीये जन्मनि देवोऽयं भविष्यति तथा सप्तमे जन्मनि मोक्षं प्राप्स्यति। अतः हे राजन्! पुण्यकार्येषु समस्तनिजदोषहर्त्ता पशुरूपोऽपि महाज्ञानवानयं गजः कथमपि न शोचनीयः। अथ धर्मात्मा स राजा कर्मणां नाशिनीं कथां स्वीकृत्य गुरुं प्रणम्य स्वगृहं जगाम। गुरोराज्ञया शोभमानः स राजा ततो गजराजस्य वन्धनारोहणयुद्धादिकष्टं सर्वं निवारयामास। स्वस्येव सततं भोगभृतस्यास्य गजराजस्य राजा स्वयमेव वारत्रयमारात्रिकक्रियां (आरती) चकार। स गजः प्राणिषु कृपया पद्भ्यां शनैःशनैरचलत्, अतोऽद्यापि तदनुसारेण गजा मन्दगतयो भवन्ति। मर्यादया नियन्त्रितभोजनविहारः, शान्तिपूर्णहृदयशीतलः स गजराजः प्रतिदिनं जिनेश्वरमन्दिरे जगाम। अहङ्काररहितो धर्मकर्मवान् स गजः साधुश्रावकयोर्मध्यस्थो भूत्वा पर्वसु जिनेश्वरयात्रोत्सवं चकार। कृपायुक्तमानसो राज्ञा वहुमानीकृत एष गजराजो वहून्समया-

न्नमयामास । अनन्तरं गजवैद्य एकदोद्यमरहितं तं गजं ज्वरपीडितं दृष्ट्वा शीघ्रं राज्ञे निवेदयामास । हे राजन् ! यो गजो भवतां प्राणेभ्योऽप्यधिकं मियो यश्च शत्रूणां यशोनाशकः स गजोऽद्य ज्वरपीडितोऽभूत् । ततः पितुरिव मातुरिव भ्रातुरिव गजस्य ज्वरं श्रुत्वा व्याकुलः स राजा शिघ्रं समीपं जगाम । अथ राजोवाच, यः कोऽप्यमुं गजराजं रोगरहितं कुर्यात्तस्मै स्वराज्यार्धं सम्पूर्णराज्यं वा दास्यामि । राज्यैः किं प्रयोजनं तव कृपया किमल्पमस्माकमस्ति ? इति कथयन्तो वैद्या गजराजस्य रोगशान्त्यर्थ्यमुपायं चक्रुः ॥ ३७२ ॥

परिपूर्णायू रोगयुक्तः स गजराजः: कर्माभिधान् शत्रून् जेतुं जलमन्नं च तत्याज । अस्मिन् रोगेऽहं न जीवाम्यतोऽहमनशनं गृहीतवानिति पृथिव्यामक्षरं लिखित्वा स गजो राजानमकथयत् । पुरस्य मध्ये गजानां मरणं न कल्याणकरमिति विचार्य स गजराजः शनैः शनैर्वनं जगाम । प्रतिमल्लवत् कर्माणि अधःक्षिप्त्वा चूर्णयितुमिव वक्षःस्पृष्टनेत्रेण भूतलं पवित्रं कुर्वन्नसौ गजराज उपाविक्षत् । राजा च तस्य गजराजस्योपरि स्वर्गलक्ष्म्याः कटाक्षसदृशं पुष्पाणां स्तवकेन शुभ्रकान्ति मण्डपं कृतवान् । अशुभनाशकस्य गजराजस्योभयपार्श्वे राजा सुगन्धिद्रव्यस्य जलेन सेचनं कारयामास । गजस्य समीपे श्राविका, वन्दिनः, तथा गाथका उच्चस्वरैर्धर्ममयान्गुणान् जगुः । बहवो विद्वांसश्च गजस्योभयपार्श्वे स्थित्वा पूर्वाचार्याणां यशोरूपामृतवर्षिणीं सत्यवचनयुक्तां कथां कथयामासुः ॥ २८० ॥

इत्थं शान्तिसुखरूपमहासमुद्रे मग्नः स गजराजो ज्ञानरूपामृतं पिवन् स्वमिन्द्रादपि धन्यममन्यत । एकदा गजस्य पार्श्वे स्थितो लोकसमूहो मध्यरात्रे सुप्त आसीत्, एको राजैव स्नेहात्प्रदीप इव जागरित आसीत् । तदा रोगस्याधिक्याद्वर्धमान-

व्यथया धैर्यरहितः स गजराजः परिमीलितनयनो भूत्वा दीनस्वरेण शरीरभङ्गमकरोत् । अथ राजा तमाह, हे वन्धो ! रोगस्य मवलत्वाद् धैर्यं मा त्यज, स्तम्भ इव धर्ममवलम्बय । शरीरात् क्लेशश्रेणीं दूरीकृत्यानन्देन नमस्कारगणनायां मन आधेहि, ततो व्याधेरुत्पत्तिः कुतः स्यात् । अनेन प्रकारेण गजस्य व्याधिचञ्चलं मनः स्थिरं कृत्वा विद्वान्स राजा पञ्चपरमेष्ठिनां नमस्कारम- कथयत् । अश्रुपूर्णनेत्रे सरोमाञ्चं शरीरं च धारयन्स गजराजः शुभभावनां भावयन्प्रसन्नः स नमस्कारान् श्रृणोत् । धर्मेण शोभमानः स गजराजः स्वप्न इव सुखेन प्राप्तया दीर्घनिद्रया सौधर्मस्वर्गे गतवान् (अर्थात् मृतः) । शोकजन्याश्रुपूर्णनयनः स राजा दिवसे चन्दनागुरुकर्पूरकस्तूरिकाणां समूहैर्गजराजस्याग्निसंस्कारं चकार । वन्धोरिव तस्य गजराजस्य समयोचितां धार्मिकीं क्रियां कृत्वा दुःखी दीनश्च राजा स्वस्थान जगाम । अथ राजा दुःखेन दीर्घ तद्दिनं यथा कथञ्चिद् गमयित्वा रात्रौ चन्द्रशालायां शय्यामशिश्रियत् । श्वासोच्छ्वासेनोच्छलच्छोकरूपशङ्कुसंकुल्यमानमानसः स राजा निद्रामलभमानो हृदि चिन्तयामास । अनेकदेशानां विभवशालिन्या लक्ष्म्या मम किं प्रयोजनम् ? यतोऽस्मिन्गजे मृते या लक्ष्मीश्छिन्नसंयतकेशा इव बभूव । कनीनिकां विना दृष्टिरिवात्मानं विना शरीरमिव तं गजराजं विना मम पृथिवी कीदृशी शोभते ? । येन नेत्रेण गजराजस्य रूपं न दृश्यते तेन नेत्रेणाथ मम किं प्रयोजनम् ?, येन कर्णेन तस्य शब्दो न श्रूयते तेन कर्णेन किं प्रयोजनम् ? । यत्र तत्र भ्रमणं कुर्वती इमे नेत्रे खिन्ने तप्ते च सती गजराजस्य दर्शनरूपामृतपानं विना कुत्र शान्ते स्याताम् ? । यदि मम पुरातनानि कानिचित्पुण्यानि सन्ति तर्हि स गजराजस्तैः पुण्यैरेकवारं दृष्टिपथे आगच्छतु । एवं प्रकारेण ध्यानं कुर्वन् स राजा नेत्राग्रे गजराजं ददर्श, यतः पुण्यवतां पुण्यं कल्पवृक्षादपि महत्त्वशालि ॥

अथ शोकाश्रूणि हर्षाश्रूणि च कुर्वन् स राजोत्थाय तस्य गजराजस्य शुण्डमानन्देन हस्तेन गृहीत्वा स्ववक्षसि स्थापितवान्। विचारयामास च किं मयाऽसौ गजः स्वप्ने मृतो दृश्यते, उत च मृत एवैष स्वप्नाज्जीवन् दृष्टः। हहा! हे महात्मन्! सूर्यमन्धकार इव त्वां मोहोऽविशत्?। यतो जिनशासनग्रन्थोक्तमप्यन्यथा शङ्कसे। हे कमलनयन! अहं मृत एवास्मि, न तु जीवन्नस्मि, चन्द्रशालाया मध्ये गजानामागमनं कुत इति विचारणीयम्। यत्त्वं मामपश्यः, यच्चैतद्रूपमस्वप्नतुल्यं पश्यसि, इमौ स्वप्नौ न स्तः, यतो जाग्रत्पुरुषस्य स्वप्नः कुतः। अस्मात्कारणात् हे श्रेष्ठयशस्विन्! त्वमिमां शय्यां शोभय, हे राजन्! अहं स्ववृत्तान्तं कथयामि, शृणु। इत्थं गजराजस्य वचनं श्रुत्वा स राजा प्रसन्नो भूत्वा तस्य वृत्तान्तं श्रोतुं सावधानो भूत्वा शय्यायामुपाविशत्। स्वहृदयस्थपुण्यरूपमहासमुद्रस्यामृतरूपतरङ्गसदृशवचनस्य वक्ता स गजराजो मत्तभ्रमरस्य कण्ठशब्दं कठिनं कुर्वन्नुवाच। हे राजन्! अहं मृत्युसमये जन्मपर्यन्तं निष्कपटरूपेण कृतस्य धर्मस्याच्छादकेन व्याधिसमूहेन मूर्च्छितः सन्नचिन्तयम्। यद् ये हि वैद्याः सर्वदा राज्ञो धनं गृहीतवन्तस्ते मम व्याधिं न नाशितवन्तः, अतो यदि तान्वैद्यान्पश्यामि तर्हि तान्मारयिष्यामि। एवं प्रकारेण चिन्तयन्तं मां तस्मिन्समये तव वचनद्वारा श्रीधर्मो नरकादुद्धारं कृतवान्। तस्मिन्समये तत्र मुखरूपचन्द्रेण प्रकाशितः (कथितः) परमेष्ठिनमस्काररूपामृतसमुद्रस्य तरङ्गसमूहो मां सौधर्मदेवलोके निक्षिप्तवान्। तत्र देवभावत्वं लब्ध्वा "ममेदृशी समृद्धिः कुत" इति चिन्तयन्नहं त्वामाशु दृष्टवानस्मि, तदनन्तरं हस्तिनो विरहेण दुःखितस्य तव शीघ्रं प्रसन्नतार्थं देवसम्बन्धि शरीरं त्यक्त्वा हस्तिस्वरूपं धृत्वा तव समीपमागतोऽस्मि। त्वं च मद्विषये कृतस्यानुग्रहस्य सामर्थ्यं पश्येत्युक्त्वा स गजः सूर्यसदृशतेजस्वि स्वीयं रूपं दर्शयामास। एवं रूपं दर्शयित्वा राजानमुवाच, हे राजन्! जीवतो मम भोग-

प्रदस्त्वमासीः, म्रियमाणस्य च मम धर्मप्रदोऽभूः, अस्मात्कारणात्त्वं प्रभुर्गुरुश्च ममासि। अत एव च त्वां शून्यहस्तो भूत्वा न पश्यामि, यतः रिक्तपाणि र्न पश्येच्च राजानं भिषजं गुरुम्।" इति वचनात्तव शून्यहस्तेन दर्शनं नोचितमिति विचार्याहं स्वर्गलक्ष्म्या दर्शकं कल्पवृक्षस्य रसैरमृतमपि तिरस्कर्तृ फलमिदमानीतवानस्मि, त्वं च गृहाण। शीघ्रमिदं फलं भक्षणीयम्, अस्य फलस्य रससधाराभिस्त्वद्भाग्यचन्द्रस्य शरीरसङ्कोचोपद्रवरूपकर्दमः प्रक्षालनीयः। इत्थं वदन्स देवस्तत्फलं दत्तवान्, राजा च प्रसन्नो भूत्वा फलं गृहीत्वा च हसन् तमुवाच। हे विवेकिन्! शीघ्रं त्यक्तपशुत्वस्य सदृशं मोहं धारयन्त्वं स्वयं रात्रौ फलखादनं कथमुपदिशसि?। हे देवप्रधान! मम शरीरस्य साम्प्रतं पटुत्वेन किं प्रयोजनम्? इन्द्रपदप्राप्तावपि रात्रौ भोजनं न कर्तव्यम्। श्रूयताम्॥

## ॥ अथ रात्रिभोजनत्यागे हंसकेशवकथा ॥

पृथ्वीरूपस्त्रियाः कर्णभूषणसदृशं मणिमौक्तिकादिविविधरत्नयुक्तं मुक्तालङ्कृतप्रासादं "कुण्डिनपुर" नामकं नगरमस्ति। तत्र महायशस्वी नूतनद्रव्योपार्जने सर्वश्रेष्ठो यशोधननामा वणिगासीत्। तस्य वणिजो रम्भानाम्न्यां भार्यायां जगत्त्रयस्यानन्दकारकौ परमसुन्दरौ "हंस-केशव" नामानौ द्वौ पुत्रावास्ताम्। तौ द्वौ वनं गतौ, तत्र धर्मोपदेशकगुरोर्मुखाद्रात्रिभोजने दोषं श्रुतवन्तौ। ततो ज्ञानं प्राप्य तौ गुरुं साक्षीकृत्य प्रसन्नौ भूत्वा रात्रिभोजनं त्यक्तवन्तौ। अथ तौ मध्याह्नसमये भोजनं कृत्वा स्वस्थानं जग्मतुः, तथा दिवसस्याष्टमे भागेऽवशिष्टे मातुः सकाशादपराह्नभोजनं (वालु) याचितवन्तौ। हे पुत्रौ! इदानीं किं भोक्तव्यम्? यतो युवां दुग्धप्रियौ स्थः, तस्मात्कारणान्निश्चितसमये रात्रौ तत्पुनः स्यात, अतो युवां कथमुत्सुकौ स्थः?। इति मातुर्वचनं श्रुत्वा

तावूचतुः, हे मातः! आवां नियमाद्रात्रिभोजनं त्यक्तवन्तौ। एवं प्रकारेण तयोर्वचनं श्रुत्वा यशोधनः क्रोध-
पूर्वकं विचारितवान्। कोऽपि धूर्त्तो मम पुत्रौ द्वौ प्रतारितवानिति निश्चितम्, अत एवेमौ द्वौ वंशपरम्परागतं रात्रिभोजनं
त्यक्तवन्तौ। अतो द्वित्रैर्दिनैरवश्यं बुभुक्षापीडितौ कृत्वा रात्रिभोजनत्यागरूपं दुराग्रहं त्याजयिष्यामि। एवं विचार्य
स्वस्थानमागतां रम्भामुवाच, यत् सुतयोर्भोजनं न देयमिति। अथ स्वामिन आज्ञावशात्सा पुत्रावुवाच, हे पुत्रौ! इदानीमन्न-
पाको भावी, पक्कान्नादि वस्तु किञ्चिन्नास्ति। किञ्च रात्रौ युवाभ्यां पित्रा सहैव भोक्तव्यम्, यतो ये पुत्राः पितुर्मार्गानुसारिणस्ते
कुलीनाः कथ्यन्ते। एवं मातुर्वचनंश्रुत्वा तावूचतुः, हे मातः! सुपुत्रा अपि सन्मार्गगामिनं पितरं सेवन्ते, परन्तु नीचमार्ग-
गामिनं पितरं किमनुगच्छन्ति?। अथ "तर्हि युवामिदानीं भोजनं न प्राप्स्यथ" इति मातुर्वचनं श्रुत्वा तौ बहिर्गतौ। अथ
यथा ज्वरपीडितस्य घृतं दोषं करोति तथा पुत्रयोर्जगत्प्रियमपि वचनं यशोधनस्य दोषोत्पत्तिं चकार। स यशोधनो रम्भां
कथयामास, यत्, रात्रावेव पुत्रयोर्भोजनं देयमित्यनेन प्रकारेण विविधशपथं च दत्तवान्। अथ रात्रौ मात्रा कथितावपि तौ
भोजनं न चक्रतुः। अथ द्वितीयदिने स यशोधनस्तौ पुत्रौ महाक्रयविक्रयकार्येषु नियुक्तवान्। एवं व्यापारजन्यलाभरसेन
विलासं कुर्वतोस्तयोर्दिनं व्यतीतमभूत्। रात्र्याः प्रथमे प्रहरे तौ गृहमागच्छताम्, रात्रौ स्वनियमं पालयन्तौ तौ भोजनमकृत्वैव
शयनं चक्रतुः। एवं प्रकारेण पितुर्व्यापारं कुर्वतोरभुक्तवतोस्तयो पञ्चरात्रयो व्यतीताः। षष्ठे दिने पुना रात्र्याः प्रथमे प्रहरे
तावागच्छतां तदा यशोधनो विनयेन मधुरं वचनमुवाच। हे पुत्रौ! यन्मम सुखप्रदं स्यात्तदेव पुत्रयोरिष्टमिति विश्वासेन कि-
ञ्चित्कथयामि, युवां च कुरुतम्। निश्चयेन युवयो रात्रिभोजनत्यागं न जानामीति हेतोर्युवां महत्कार्ये नियोजितवानस्मि। युवां

यत्र भुञ्जाथेऽत एव युवयोर्मातापि न भुङ्क्ते, तेन तस्या अद्यापि प्रयत्नेन षष्ठ उपवासोऽभूत्। तेन षण्मासावस्थावर्तीयं त्वं अस्या बालिकाया म्लानिं दृष्ट्वा तत्कारणं पृच्छतो मम भगिनी दुग्धान्यलभमाना कीदृशीं म्लानतां गतेति युवां पश्यथः। अस्या बालिकाया म्लानिं दृष्ट्वा तत्कारणं पृच्छतो मम युवयोरभोजनमेव सा कथयामास। अत एव युवां भुञ्जाताम्, ततो युवयोर्मातापि भोक्ष्यते, कृपां कुरुतम्, यथास्याः शिशोः पित्तादिजन्यपीडा न भवेत्। रात्रेः पूर्वं प्रहरार्धं "प्रदोष" कथ्यते, अन्तिमं प्रहरार्धं च "प्रत्यूषं" कथ्यते, अत एव रात्रिस्त्रियामा कथ्यते॥

इदानीं युवयोः कृतं भोजनं रात्रिभोजनं न भविष्यति, यतो रात्र्याः घटिकाद्वयं न व्यतीतमस्ति। इत्थं पितुर्वचनं श्रुत्वा क्षुधा-पीडितोऽतिक्लेशवान् हंसः केशवस्य मुखं ददर्श। केशवस्तु स्वज्येष्ठभ्रातरं हंसं क्षुधापीडितं दृष्ट्वा दुःखप्रदं पितरमुवाच। हे पितः! यत्कार्यं तव सुखकरं स्यात्तदेवाहं करोमि। मम यत्पापनाशः स्यात्तत्किं तव न सुखप्रदः?। यन्मात्रादिस्नेहं कथयसि तद्धर्मस्य विघ्नकरम्, सर्व एव जनः स्वकर्मफलं भुङ्क्ते, अतोऽन्यस्यार्थे कः पापं करोतु?। दिनस्य प्रारम्भसमयोऽन्तसमयश्च, उभौ रात्रितुल्यावेव, अत एव तत्रापि न भोक्तव्यम्, अधुना तु रात्रिरेवास्ति। अतो हे पितः! वारम्वारमित्थं न त्वं कथय, यतः संसारजन्यदुःखपीडितोऽहमस्मिन्कार्ये (रात्रिभोजने) कृते कुत्र शान्तिं प्राप्स्यामि?। अथ पापी तत्पिता कुपितो भूत्वा केशवमुवाच, यदि मम वचनं लङ्घसे तर्हि मम नेत्रपथाद् दूरं गच्छ। अनन्तरं संसारस्य कारणं ममतां त्यक्त्वा स केशवः सर्पपूर्ण-कन्दरादिव गृहान्निर्जगाम। तमनुगच्छन्तं हंसं तु बलाद् धृत्वा स यशोधनो विविधवचनैः प्रतार्य्य भोजनायोपवेशयामास। अथ षष्ठे दिनेऽपि व्यतीते सप्तमे दिनेऽपि स केशवः पुरग्रामपर्वतारामादिषु विचरन्व्याकुलः पथि गच्छन् वनं गतः, तत्र विच-

रन्सः रात्रौ कुत्रापि यात्रार्थमेकीभूतजनयुक्तमेकं यक्षस्य गृहं ददर्श । तत्र यक्षगृहे भोजनं संपाद्य यात्रिकजनाः प्रसन्ना भूत्वाऽतिथिं केशवमूचुः । हे पुण्यात्मन् ! आगच्छागच्छ, भोजनं कुरु, पुण्यानि देहि, वयं पारणां संपाद्यातिथिमेव पश्यामः । अथ महापुण्यवान्स केशवस्तानुवाच, हे जनाः ! यद्व्रतस्य रात्रौ पारणा भवति, तद्व्रतं किन्नाम ? । ते जगदुः, हे महात्मन् ! संसारस्यानन्दजनकोऽयं मागवनामा यक्षः, अद्यास्य महापुण्यमयी महायात्राऽस्ति। दिनेऽद्योपवासं कृत्वा रात्रावतिथिं भोजयित्वा पुण्यस्य कारणरूपं पारणं कर्त्तव्यमिति हेतोर्वयं व्रतं कृत्वाऽतिथिमन्वेषयन्तस्त्वां दृष्टवन्तः स्मः, अतस्त्वमस्माकमतिथिर्भव। इत्थं तेषां वचनं श्रुत्वा स केशव उवाच, अहं पापमयेऽस्मिन्पारणे न भोक्ष्ये, यतो रात्रौ कथमपि न भोक्तव्यम्, इदं च वचनं सत्यं जानीथ । अस्मिन्नुपवासे यद्यपि किञ्चिद् गुणो न स्यात्परन्तु दोषस्तुमहान्स्यादेव । यस्मिन्नुपवासे रात्रौ भोजनं स्यात्तदुपवासं न, यतोऽहोरात्रभोजनाभाव एवोपवासो धर्मशास्त्रेषु कथ्यते । अतो ये धर्मशास्त्रविरुद्धं तपः कुर्वन्ति ते मूर्खा नरकमेव गच्छन्ति । तेऽपि यात्रिका ऊचुः, अस्य देवस्य व्रतेऽयमेव नियमः, अत एव युक्तैरपि शास्त्रवचनैरस्मिन्विषये विचारो न कर्त्तव्यः । अद्यावश्यं कंचनातिथिं भोजयित्वा भोक्तव्यमिति हेतोरतिथेरन्वेषण एव महती रात्रिर्व्यतीता ॥

अतस्त्वमस्माकमस्मिन्पारणे शीघ्रमग्रसरो भवेत्युक्त्वा ते सर्वे तस्य हस्तचरणौ धृतवन्तः। परन्तु पुण्यात्मा स केशवस्तेषां तिरस्कारं चकार, भोजनं च न कृतवान्, तदैव महाभयङ्कराकारवान्नेको नरो यक्षस्य शरीरान्निर्जगाम। निर्गत्य च स केशवमुवाच, रे शठ ! त्वं मम धर्मं दूषयसि ? मद्भक्तांश्च तिरस्करोषि, शीघ्रं भोजनं कुरु, न चेत्तव शिरः खण्डयिष्यामि। इत्थं वाचा केशवमाक्षिप्य भयङ्करलोचनो भूत्वा मुद्गरं बभ्राम। अथ हसन्केशव उवाच, हे यक्ष ! किं मां क्षोभयसि, जन्मान्तरे समुत्प-

गमनं श्रुत्वा सुखोचितदेवरूपत्वेऽपि जन्मनः प्रभृति तादृशस्वभावत्वादन्यप्रशंसावचनेन दुःखितो महासमृद्धिवान् सर्वत्र गमन-
शाली वह्निनामाहं देवो भवन्तं परीक्षितुमत्रागतो-स्मि। त्रिभुवनमपि स्वशक्त्या त्रिचालको-हं तव रोमापि नियमाच्चालयितुं न
प्रभवामि स्म, अतः कोऽस्यां पृथिव्यां भवादृशः ? (न कोऽपीत्यर्थ)। हे भ्रातः! भवान्सुवर्ण इव वह्निना परितापितोऽपि स्वाभाविक
गुणानामग्रेसरः सन्नुत्तमवर्णस्थानमभूत्। ( अर्थात् यथा सुवर्णोऽग्नितप्तोऽप्यधिकं गुणं धत्ते, तथा भवान्मया तापितोऽप्यधिकं
शुशुभे )। हे महात्मन्! अहं यत्किञ्चिद्यक्षादिक्षोभमकार्पं तन्मयि कृपां कृत्वा क्षमस्व क्षमस्व! किञ्च—मां किञ्चिद्याचस्व,
अथवा भवादृशां याञ्चा न भवति, अतः स्वयमेव किञ्चिद्ददामि, तव शरीरस्पर्शजलेन सिक्तो रोगी रोगरहितो भविष्यति।
तथा त्वमातुरो भूत्वा कदाचिद्यत्किञ्चिच्चिन्तयिष्यसि तच्छीघ्रं प्राप्तं भविष्यति, यतः पुण्यात्मनां भुवि किं दुर्लभम् ?। इदानीं तु
त्वां कस्यापि नगरस्य समीपे त्यजामि, यतस्त्वादृशां चरणसेवापि सकलक्लेशनाशाय भवति। इत्युक्त्वा स वह्निदेवोऽन्तर्दधे
केशवस्तु स्वं कस्यापि नगरस्य समीपे ददर्श। अथ सूर्योदये जाते स केशवः प्रातःकालीनं कृत्यं कृत्वा नगरं द्रष्टुं प्राच-
लत्। अथ नगरे गच्छनयं वामभागे आरामे मेघसदृशशब्देन धर्ममयेन केनाप्याहूतः गतश्च "सुर" नामानं सूरिं ददर्श,
दृष्ट्वा च प्रणनाम। अथाचार्यमहाशयस्याज्ञया स केशवस्तत्र योग्यमासनं प्राप्योपविष्टः। अथ "साकेत" नाम्नस्तस्य नगरस्य
स्वामी धनञ्जयो मुनेरुपदेशकरणानन्तरं मुनिं प्रणम्योवाच। हे प्रभो! अहं वृद्धोऽभवम्, अतो व्रतादिकरणे महतीच्छा
वर्त्तते, पुत्रश्च नास्ति, अत इदं राज्यं कस्मै देयमिति चिन्ता हृदयेऽस्ति। अद्य रात्रेरन्ते स्वप्ने मम पुण्येनेव केनचिच्छन्नेन शान्तेन
दिव्येन पुरुषेणेत्यमुक्तं यत् " त्वं यः प्रातःकाले देशान्तरादागच्छति तस्मै तव गुरोरग्रे स्थिताय राज्यं दत्त्वा पूर्णमनोरथो

यक्षकिङ्करः सहासमाकाशं ययौ। अथानया माययाऽऽश्चर्ययुक्तं स्थिरचित्तं केशवं स यक्ष उवाच, हे मित्र ! सप्तदिनोपवासैस्त्वं खिन्नोऽभूः, तत्रापि च विहारं कृतवान्, अतो रात्रौ विश्राम्य प्रभाते यक्षैः सह पारणं कर्त्तव्यम्। इत्युक्त्वा स शय्यामदर्शयत्, केशवोऽपि शय्यायां विशश्राम। अथ यात्रिकास्तस्य चरणं संवाहयामासुः, स च सुखं सुष्वाप। अथ यक्षस्तमाह, मित्र ! रात्रिर्व्यतीता, निद्रां त्यजेति। केशवस्तु निद्रया मुद्रितनयनो भूत्वा विश्वं प्रकाशयुतं दृष्ट्वाऽऽकाशं च सूर्यसहितं दृष्ट्वा चिन्तयामास। नित्यकार्यनिष्ठितबुद्धिमानहं रात्रेरन्तिमप्रहरे सुप्तोऽपि प्रत्यहं ब्राह्मे मुहूर्त्ते एवोत्थितोऽभूवम्। अद्य त्वर्धरात्रे सुप्तोऽपि निद्रां न त्यजामि, अर्धप्रहरदिनमपि व्यतीतम्, किमिदमभूत् ?। अद्य दिवसेऽपि मम नेत्रे निद्राधीने भवतः किमर्थम् ? अन्तःश्वासवायावपि सुगन्धिः कथं नास्ति ?। अनेन प्रकारेण चिन्तयन्तं तं केशवं यक्ष उवाच, हे केशव ! आलस्यं त्यज। तथा शीघ्रं प्रातःकृत्यानि कृत्वा पारणं कुरु। केशव उवाच, हे यक्ष ! तव मायायां निपुणत्वेनाहं न वञ्चनीयः। विपुला रात्रिरिदानीमवशिष्टास्ति, दिवसप्रकाशस्तु तव माययोत्थितोऽस्ति। इत्थं वदतः केशवस्योपरि पुष्पवृष्टिः पपात। "जय त्वं जय त्व" मित्याकाशवाणी संजाता। अनन्तरं स केशवो महातेजस्विनमेकं देवं ददर्श, तथा वने न यक्षं न यक्षगृहं न च यक्षपूजकान् ददर्श। अथ प्रसन्नः स देव आगत्य किञ्चिद्विहस्य परमरमणीयं वचनमुवाच। हे पुण्यात्मन् ! भवान्पुण्यवतां रत्नस्वरूपः सकलगुणाकर एक एवास्ति, भवादृशां जनानां जन्मनैव पृथिवी "रत्नगर्भा" बभूव। हे सत्त्वसमूहाक्रान्तात्मन् ! हृदयस्थितं वृत्तान्तं शृणु, सभाया मध्ये इन्द्रस्तव महतीं प्रशंसां कृतवान्। अहो ! सुन्दरयुवा, पुण्यवान्, सुखेन लालितो, नरोत्तमः, पृथिवीसदृशधर्मस्थिरो यशोधनवणिजः पुत्रः केशवो देवैरपि विविधक्लेशद्वारापि रात्रिभोजनत्यागान्न विचलितो भवति। इत्थमिन्द्रस्य

तत्र पुण्यैस्त्वां दृष्टवानस्मि च । पृथिवीं पर्यटतो ममैको मासः पूर्णोऽभूत्, तत्र ज्येष्ठो भ्राता हंसो मृतोऽथवा मरिष्यतेऽथवा मृयते, जानामि, हा ! सर्वथा हतोऽस्मि ! । तदनन्तरं स राजा 'कथं भ्रातुर्मुखं द्रक्ष्यामि, अस्मात्स्थानात्तन्नगरं शतयोजनदूरें वर्त्तते, कथं गमिष्यामि शीघ्र' मिति चिन्तयन्स्वं पित्रासहितं परिवारसहितं च हंसस्य पार्श्वे स्थितमद्राक्षीत् । अथ स राजा कुथित-सर्वाङ्गं दुर्गन्धिशरीरं यस्य पार्श्वे परिवारा रोदन्ति तादृशं केवलं मात्रा सहितं समीपमृत्युं पृथिव्यां सुप्तं स्वभ्रातरं हंसं ददर्श । तं च दृष्ट्वा तद्दुःखेन दुःखी स केशवो विचारितवान्, अहं केन प्रकारेण शीघ्रमीदृग्दूरमार्गं समागतः ? इति चिन्तयन्स वह्निदेवं ददर्श । स वह्निदेवः "त्वमाश्चर्यं मा कुरु, अवधिज्ञानात्तव व्यथां ज्ञात्वा स्वदत्तवरं सत्यं कर्त्तुमना अहमागत" इत्युक्त्वा स्वर्गं जगाम । अथ केशवः प्रसन्नो भूत्वा जलमादाय हंसं सिक्तवान्, तेन सकलरोगरहितः स हंसः शीघ्रमुत्तस्थौ । पूर्वं यादृशं हंसस्य शरीरमासीत्ततोऽप्यतिसुन्दरं जातं, तेन बान्धवास्तद् दृष्ट्वा महोत्सवं चक्रुः । एवं राज्ञः केशवस्य प्रभावं दृष्ट्वा स्वस्वव्याधिनाशाय तस्य पादोदकं स्वे स्वे मूर्ध्नि के न दधिरे ? (अर्थात्सर्व एव धारयामासुः)। अहो ! स केशवः किं वर्णनीयः ? यस्य पादोदकं स्वस्वरोगनाशाय समुद्रपर्यन्तवासिनो राजानोऽपि स्वशिरसि धारयामासुः । अन्यच्च—भाविरोग-विनाशाय केशवस्य पादोदकं स्वर्णकलशे निक्षिप्य स्वप्राणानिव जना ररक्षुः । इत्थं राज्ञो धर्मोत्पन्नं प्रभावं प्राप्य पृथिवीस्था सर्वे प्राणिनो रात्रिभोजनं त्यक्तवन्तः । अथ स केशवो दिग्विजयं कृत्वा साकेतनगरमधिवसन् बहुकालपर्यन्तं पृथिवीं संरक्ष्येह लोके परमसुखं प्राप्तवान् ॥

॥ इति रात्रिभोजनत्यागे हंस—केशवकथा ॥

भवेति !"। अथास्तनिद्रोऽहं प्रातःकृत्यं कृत्वात्रागतोऽस्मि। तथा चागत्याकारेण सत्पुरुषलक्षणयुतमेनमागतमद्राक्षम्। अथ ज्ञानी स गुरुः शुभात्मनो रात्रिभोजनत्यागिनः केशवस्य सुन्दरं वृत्तान्तमकथयत्। अथ "ममायं केन कथितः" इति राज्ञा पृष्टः स गुरुः "अस्य सत्कर्मणा प्रसन्नेनाग्निना कथितः" इति कथयामास। इत्थं गुरोर्वचनं श्रुत्वा तं नत्वा प्रीतमानसो राजा केशवेन सहैव नगरं प्रविवेश। अथ राजा स्वराज्ये केशवमभिषिच्य स्वयं सूरगुरोः समीपमागत्य तत्समय एव दीक्षां जग्राह। अथ विचारवान् स श्रीकेशवो राजा मन्त्रिभिः सह चैत्यवन्दनां कर्त्तुं परमरमणीयेषु देवमन्दिरेषु जगाम। अनेकमङ्गलकार्यं कृत्वा शुद्धबुद्धिमान्स केशवो दानेन दुःखितानां तारणः स्वसौधे पारणस्थितिं चकार। स्वपराक्रमेण सीमासमीपस्थराज्ञो जित्वा चतुरमन्त्रिसमूहैः समेतो राज्यं विस्तारयामास। अथ कदाचित्स राजा पितुर्दर्शनोत्कण्ठां प्राप, ततो मार्गे गच्छन्तं परिश्रान्तं यशोधनं ददर्श। दृष्ट्वा च परिजनसमेतः स शीघ्रं सौधादुत्तीर्य पितुः समीपं गत्वा पादयोः पपात। दुःखितो भूत्वोवाच च। हे पितः! तादृशविभवशाली भवानधुनारङ्क इव कुतो याति ?। अथ पुत्रस्य राज्यप्राप्त्या प्रसन्नोऽपि यशोधनो दुःखेनाश्रूणि धारयन्सर्वं गृहवृत्तान्तमकथयत्। हे धीमन्! त्वयि गते हंसो भोक्तुमुपविष्टः, अर्धभोजनमेव कृत्वा मूर्च्छितो भूत्वा भूमौ पपात। एतत्किमभूत्? इति सम्भ्रान्ता तव माता दीपमानीय तत्रान्ने विषं तुलापट्टे च सर्पं ददर्श। तदुदाहरणं दृष्ट्वा त्वां बुद्धिमन्तं ज्ञात्वा कुटुम्बा महद्रोदनं चक्रुः। तदाक्रन्दनं श्रुत्वा विषवैद्य एको मान्त्रिकानानेतुं मामकथयत्। क्लेशलेशोऽपि न कर्तव्यः, अस्य सर्पस्य विषैरयं हंसो सटत्त्रुटद्दलच्छरीरः सन् मासानन्तरं जीविष्यति। अथागताञ्जनान्विसृज्य तव भ्रातरं शय्यायां शाययित्वा समागतोऽस्मि, पञ्चदिनानि व्यतीतानि च। प्रतिरोमणि छिद्राणि दृष्ट्वा तं हंसं मृतमेव ज्ञात्वा त्वां द्रष्टुं गृहान्निर्गतोऽस्मि,

स्वपुरं प्राविशत् । अथ मन्त्रिमुख्या जिनेश्वरस्य मन्दिरं कारयितुं निश्चयं कृत्वा तस्मिन्नेव समये पुण्याहमङ्गलं प्रारम्भं चक्रुः
( अर्थात्कार्यारम्भोऽभूत् ) । राजा च स्वहृदयात्संसारकार्यं दूरीकृत्य भोजनमकुर्वाण एवाष्टौ दिनानि निन्ये । ततः क्षणा-
वशिष्टायां रात्रौ ( प्रभाते ) स एव देवः प्रत्यक्षीभूय जातजागरं राजानमब्रवीत् । हे प्रसिद्धयशस्विन् ! हे निस्तीर्णसंसार-
सागर ! हे प्राप्तमनोरथ ! श्रीपुण्याढ्य ! राजन् ! सर्वथा जय ! हे राजन् ! नृणां कर्तुमशक्यं तवाग्रहं तथाद्यैव तव भावि
लोकोत्तरं स्वरूपं ( मोक्षमित्यर्थः ) अवधिज्ञानयोगाज्ज्ञात्वा, तथा शुभापुर्यां ज्ञानस्य सूर्यतुल्यात्तपनान्निश्चित्य, जिनेश्वर-
स्य प्रतिमां निर्माय, यथाविधि प्रतिष्ठाप्य च तव भाग्यभूमिरहं तस्मिन्नेव वने क्षणेनैव जिनेश्वरस्य मन्दिरमस्थापयम्,
अतो हे दयानिधे ! शीघ्रं गच्छ, चन्द्रसदृशमुखं जिनेश्वरं प्रणम्य परिपूर्णमनोरथः सन् जगतां नमस्यो भव ! । एवं तस्य
देवस्य वचनं श्रुत्वा स पुण्याढ्यनृपो विचारयामास । अहो ! अयं गजदेवो मम कियानुपकारकोऽभूत् ! । अथ नूतनतीर्थं-
करस्य दर्शनायोत्कण्ठितः स राजा तं देवं पुरस्कृत्य वनं प्रति जगाम । गत्वा च तत्प्रासादस्य शिखरमारुह्य नृत्यन्त्याः पुण्य-
लक्ष्म्याश्चञ्चलं हस्तमिव पताकां दृष्ट्वा प्रसन्नोऽभवत् । जिनेश्वरस्य गृहलक्ष्म्याः शिरसि कल्याणकलशं दृष्ट्वा मोक्षे प्रस्थानकर्त्ता स
राजा शुभशकुनं ज्ञात्वा मुमुदे । चन्द्रस्य कलाः शिलाभावं गमयित्वा निर्मितोऽसौ जिनालयो राज्ञो नेत्रकमलं प्रसन्नतां निनाय ।
ततो राजाऽग्रे लक्ष्म्याः स्वयंवरणमाल्यसदृशं लम्बमानं तोरणमद्राक्षीत् । ततोऽयं राजा श्रेष्ठधर्मरूपनगरस्य गोपुरमिव जिनेश्व-
रस्य मन्दिरस्य द्वारदेशमपश्यत् । यत्र स्थितानां जनानां भगवान् श्रीजिनेश्वरः सुलभदर्शनो भवति । पापं निर्जेतुमुद्योगशालिनः
संवररूपनृपस्य गम्भीरगुरुमिवात्युच्चं रङ्गमण्डपं ददर्श । स राजा श्रद्धया सह धर्मस्य विवाहे वेदिका इव रमणीयास्त्रिकाश्च-

इत्थं हंसस्य विपत्तिं केशवस्य सम्पत्तिं च गुरोर्मुखाच्छ्रुत्वा हे स्वर्गवासिदेव ! रात्रौ फलं केन प्रकारेण भक्षयामि ? । देव उवाच—हे पुण्याढ्यनृप ! देवाः सततं विरतिरहिता भवन्ति, श्रावकाश्च विरतिस्पृहिणो भवन्ति, तस्मात्कारणादावयोर्भेदो ज्ञातव्यः । हे धर्मात्मन् ! सूर्योदये जाते जिनेश्वरं सम्पूज्य स्वशरीररोगनाशायेदं फलं भक्षणीयम् । एवं कथयित्वा देवोऽन्तर्दधे, राजा च विचारयामास, अहो ! अयं हस्ती जीवन्मृतश्च कियदुपकारं मम करोति । अस्मात्कारणादस्य गजराजस्य नाम्नाऽभोजनस्थाने कैलाशपर्वतसदृशं जिनेश्वरस्य मन्दिरं निर्मापयिष्यामि । इत्थं मधुरालापं कुर्वन् स राजा तां रात्रिं गमयित्वा जिनेश्वरं च संपूज्य प्रातःकाले तत्फलमभक्षयत् । भक्षणादेव तस्मात्फलात्सूर्यात्कमलमिव राज्ञः शरीरं संकोच तत्याज । स्वभावेनैव मनोहरः स राजा शरीरसंकोचरूपरोगरहितो भूत्वा दिनान्ते चन्द्रज्योत्स्नेव संसारस्य दृष्टिपानयोग्यतामलभत । शरीरस्य सौन्दर्यप्राप्त्या प्रसन्नः स पुण्याढ्यनृपः कियन्ति दिनानि व्यतीतानीति न विवेद । अथान्तःपुरयुवतीभिः सह क्रीडां कुर्वन् स राजा प्रीत्या कत्यपि दिवसान् निनाय । अनन्तरं पुत्रजन्मत्वात्परमानन्दं लभमानः स राजा स्वसदृशान् देवानपि बहुवर्षपर्यन्तं न मेने । कदापि वने क्रीडां कुर्वन् स राजा गजराजस्य तदभोजनस्थानं दृष्ट्वा दुःखेन चिन्तयामास । हा ! स्वनाशेन भयवन्तः सांसारिकभावा मां विलोभयामासुः, येन मम कर्तव्यनाशं ते चक्रुः । परमोपकारकर्तुस्तस्य गजराजस्य नाम्नाऽभिलषितः प्रासादोऽपि हा ! मया मोहान्धेन न कारितः । एवं विचारयन्स राजा मन्त्रिणः प्रत्युवाच, हे मन्त्रिणः ! अत्र गजराजनाम्ना मन्दिरं कारयत । अत्र दिनेन, मासेन, वर्षेण, दशवर्षैरपि च प्रासादे प्रतिष्ठितं जिनेश्वरं दृष्ट्वा भोजनमहं करिष्यामि । "हे राजश्रेष्ठ ! अयं निश्चयरूपसमुद्रः कथमपि न तरीतुं शक्य" इति मन्त्रिणां वचनं श्रुत्वा तांस्तिरस्कृत्य स राजा

अतो हे पद्मोत्तर नृपश्रेष्ठ ! एवं पुण्याढ्यनृपस्य दृष्टान्तेन पूर्वपुण्यानां प्रभावमेव परं बलं जानीहि। हे नृपचन्द्र ! अयं संसारोऽवश्यं कर्माधीनः, अतो "मयेदं कार्यं कृत" मित्यहङ्कारः कदापि न कर्त्तव्यः। निर्विघ्नतया कार्ये सम्पन्ने सति "मयेदं कृत" मिति मूर्खा गर्वं कुर्वन्ति, कार्येऽसम्पन्ने च दैवाय दोषं ददति। ततः स राजाऽमृततुल्यं मनोहरं वचनमुवाच, स्वच्छन्दतया स्वच्छन्दं राजानं ये जना अनुरञ्जयन्ति ते धननाशकाः शत्रव एव न तु ते मन्त्रिणः। ये भृत्याः कुमार्गगतं राजानं हर्षाय स्तुवन्ति ते कुवैद्या यथा ज्वरिणं सर्पीषि पाययन्ति तथा नाशाय तं राजानं रञ्जकवचनं कथयन्ति। हे मन्त्रिश्रेष्ठाः ! राज्ञां भाग्येनैवास्वच्छन्दवादिनो नीतिनिपुणा भवादृशा मन्त्रिणो भवन्ति। युक्तं चैतत्, यथा पिता वालकं कुमार्गाद् वारयति तथा भवताऽहमपि गर्वात्कुमार्गे पतितोऽपवारितः। तथाच–भवता यत्पूर्वजन्मनि कृतानि कर्माणि प्रमाणमित्युक्तं तद्युक्तम्, अन्यथा सुखदुःखयोर्व्यवस्था कथं स्यात् ?। यदि कर्माणि न प्रमाणं तदा सर्वो राजा कथं न भवति ? अवश्यं कोऽपि कदापि स्वस्याल्पचिन्तको न स्यात्। अतः सदा बुद्धिमद्भिर्गर्वरहितैर्भूत्वाऽपारं संसाररूपसमुद्रं तरीतुं शुभे कर्मणि प्रयतितव्यम्। हे प्राज्ञ ! तेषां त्रयाणां मित्राणां यन्मुनेर्नेत्रात्कण्टकदूरकरणेन तादृशं फलमभूत्, तथा व्रते कृते पुंसां कीदृशं फलं स्यात् ?। हे महामन्त्रिन् ! मम तद्व्रतकरणे महतीच्छा वर्तते, हे सकलविधिज्ञ ! शीघ्रं तस्य व्रतस्य विधिं मयि कथ्यताम्। अथ विमलबोधनामा स मन्त्री पीयूषसदृशं परममनोहरं वचनं जगाद ॥

हे स्वामिन् ! सरहस्यं जिनागमं ये जना जानन्ति, निर्मलबुद्धिमन्तस्ते गुरव एव व्रतकार्ये पण्डिताः सन्ति। अथ राजोवाच, हे मन्त्रिन् ! शास्त्रज्ञाने निर्मलबुद्धिमान्भवतोऽन्यः को गुरुः संभाव्यते। अथ मन्त्री राजानमब्रवीत्, हे राजन् ! इत्थं

तुष्किका अद्राक्षीत्। अनन्तसुखप्राप्त्या नित्यानन्दपरमात्मसेवितो गूढमण्डपो राज्ञो हर्षाय साक्षान्मोक्ष इवाभूत्।

अथ कोटिसूर्यसमकान्तियुक्तां जिनेश्वरस्य प्रतिमां पश्यन्स राजा संसारोत्पन्नं स्वीयमज्ञानं दूरतश्चिक्षेप। अतिशयरूपशालिन्यां जिनेश्वरस्य मूर्त्तौ नेत्रद्वयस्य स्पर्धयेव पुण्याढ्यनृपस्य मनः स्थिरतामभजत्। आनन्दरूपमहासमुद्रे मग्नस्य राज्ञो मनस्तथालीनं यथा न जिनेश्वरं न संसारं न च स्वं बुबुधे। तुल्यभावेन कोमलीभूतः प्रभुत्वेनाद्भुतशक्तिशाली शुक्लध्यानेन निर्मलः स राजा क्षपकश्रेण्यामारुरोह। तस्य राज्ञो घातकरूपकर्माणि ध्यानरूपाग्निना दग्धानि जातानि, तेषां वियोगादिव संसारजन्यकर्माणि तत्क्षणमेव गतानि। तस्यां क्षपकश्रेण्यां सहायतां कुर्वन्त्यां कृतसंकेते इव ज्ञानमोक्षश्रियौ घनसंयोगादस्मिन् राजनि समं घटिते जाते। अथ राज्ञो ज्ञाननिर्वाणं ज्ञात्वा मूढत्वेनैवोत्सवं वज्रपातमिव मन्वानान् तथा, हा तात ! हहा स्वामिन् ! हा रक्षक ! इत्थं क्रन्दतो पुत्रस्त्रीनगरवासिलोकान्प्रतिबोध्य स गजराजस्तस्मिन्नेव काले प्रसन्नतयाऽऽगतैः सम्यग्दृष्टिभिर्देवैः सह पुण्यात्मनः स्वमित्रस्यौर्ध्वदेहिकं कृत्यं कृत्वा राज्ये च पुण्याढ्यभूपस्य पुण्यसारनामानं पुत्रमभिषिच्य तं च जिनेश्वरस्य पूजामनुशास्य स्वर्गं जगाम ॥

## ॥इति पुण्याढ्यनृपतिकथा॥

ततः पूर्वमागता

ननाम । तदा स्त्रीणां समूहः पुष्पवृक्षात्समुत्तीर्य तं मुनिराजं प्रणम्य प्रसन्नतया परितो मुनिं परिवेष्टयामासः । ततः पूर्वमागता
वनिता पवित्रे पृथिवीतले विस्मयजनकं सुवर्णमयं कमलं रचयामास । ततः स मुनिराजस्तत्कमले समुपविश्य मेघसदृशशब्देन
गर्जन् श्रवणसुखदं किञ्चिद् वचनमुवाच । ततश्च धन्या वन्याः कोलादयः स्वं धन्यं मन्यमानास्तद्वचनं श्रोतुं समीपमाजग्मुः । तथा सर्वा-
भ्यो दिग्भ्य आगत्य वृक्षे समारूढाः पक्षिणः श्रव्यं मुनिवचनं शृण्वन्तः परमानन्दमापुः । अथाकाशाद्विमानेभ्यः शीघ्रं समुत्तीर्य
समागताः सुराङ्गनाः प्रसन्नाः सत्यः "हे जगद्गुरो! जय जय! हे वज्रनाभमुनिराज! जय जय!" एवं प्रकारेण स्तुत्वा
पुनः पुनर्नत्वा च मुनिराजस्याग्रे तस्थुः । हे राजन्! स्वयमहं नेत्राभ्यां दृष्ट्वा भवन्तं कथयितुं मनस्तत्रैव त्यक्त्वा सत्वरं समाग-
तोऽस्मि । राजा च मन्त्रिणं ददर्श, मन्त्री जगाद, हे राजन्! अयं वज्रनाभनामा ऋषिराजो महाज्ञानी समागत इति संभाव-
यामि । हे देव! वृक्षाणामधिष्ठात्र्यो देव्यः सेवनीयया वनदेवतयाऽपूर्वं कृतसत्कारं मुनिं सत्कुर्वन्ति, स श्री वज्रनाभमुनिः
प्राणिनामानन्दैककारणरूपां सकलक्लेशनाशिनीं तत्त्वज्ञानस्य रत्नदीपस्वरूपां धर्मोपदेशनां (धर्मोपदेशं) विस्तारयति । हे देव!
यस्मिन्धर्मे तव भ्रान्तिरस्ति स धर्मः साक्षात् प्रमाणीक्रियताम्, यन्मनुष्योऽपि स वज्रनाभो देवसमूहैः स्तूयते । अथ राजा
धर्मस्य तेन प्रमाणेन चमत्कृतः सन्क्षणं मस्तकं व्याधूय हर्षयुक्तः सरोमाञ्चोऽभवत् । अथ राजा वनरक्षकं सत्कृत्य मुनिराज-
दर्शनोत्कण्ठया शीघ्रं क्रीडावनमगच्छत् । तत्र मुनिराजस्य विचित्रां सभां विलोक्य संजातरोमाञ्चः स राजा संसारसागरत-
रणसदृशादश्वादवततार । ततो विमलबोधनाम्ना मन्त्रिणा बोधितः स राजा कल्याणोचिता राजोचिताश्च पञ्चविधा
विनयक्रियाश्चकार ॥

मा वद। यतो गुरुर्मोक्षस्य द्वारं, धर्मस्य नेत्रं, शुद्धेः स्थानं कथितः। अपि च ये सर्वज्ञा देवाः सन्ति, तेऽपि गुरुं श्रेष्ठतयाऽऽमनन्ति, तेषामपि पूर्वजन्मगुरुवचनं तत्फलस्य बीजरूपेण परिणमति। अथ "स सद्गुरुः कोऽस्ति ?" इति प्रसन्नेन राज्ञा पृष्टः स मन्त्रिचन्द्रः पुनरप्युवाच, हे राजेन्द्र ! यो हि सत्यवक्ता, शुद्धचरितवान्, निर्मलोपदेशकर्त्ता च स गुरूकर्त्तुं योग्यः, तादृशो गुरुश्च भाग्येनैव लभ्यते। इत्थं राजा यावन्मन्त्रिणा सह वार्त्तालापं करोति तावदेव तत्राकस्मान्महाश्चर्यमयं तेजः प्रादुरभूत्। तत्तेजसि च क्वचिच्चन्द्रकान्तिरिव शुभ्रता, कचिद्वैडूर्यसमकान्तिः, कचिन्मेघवत्कृष्णता, कचिच्च सुवर्णसमपीतता, कचिच्छुकवद्धरितवर्णता, कचित्पारावतसमस्वच्छता, कचित्सिन्दूरवद्रक्तता, कचिच्च मयूरसमचित्रता दृश्या जाता। सम्पूर्णसभामण्डपे न्याप्तं तत्तेजो विलोक्य सम्भ्रान्तो राजा प्रतिदिशं पश्यन्नाश्चर्यममन्यत। अथ "ममास्य राज्ञो भाग्योदयादागच्छन्त्यो देवाङ्गनाः किं कटाक्षं विक्षिपन्ति ?, उत च दानेश्वरस्यास्य राज्ञः पुण्यैराकृष्टो रत्नकिरणान्विक्षिपन् रत्नद्वीपः किमाकाशमार्गेणाऽऽगच्छति ?" इति सभास्थजने चिन्तयति सति स राजा यथार्थं ज्ञातुमनाः स्वीयं सेवकमाज्ञापयामास। स च सेवकः प्रासादशिखरं समारुह्य विस्मययुतः संजातरोमाञ्चश्च शीघ्रमागत्य राजानमुवाच। हे प्रभो ! पञ्चविधश्रेष्ठमणिसमूहैः शोभमाना ऊर्ध्वपताकावन्तो मधुरं स्वदन्तो निजपुरस्योपरि प्रसर्पन्तः प्रासादा (देवविमानानि) आकाशमार्गात्क्रीडावने निपतन्तो दृश्यन्ते। अथ कुतूहलान्वितः स राजा स्वल्पपरिजनैः स्वल्पाश्ववारैश्च सह क्रीडावनं प्रचचाल। स राजा यावत्प्राकारद्वारमागमत्तावद् वनरक्षकः शीघ्रगत्याऽऽगत्योपस्थितः। राज्ञा वनस्वरूपं पृष्टः स वनपालो मधुरं वचनं जगाद, हे स्वामिन् ! सूर्यसदृशतेजस्वी कश्चन मुनिराजो भवत आराममागतोऽस्ति। विद्युत्सदृशशोभावती कामदेवस्य रतिरिव काचन सुन्दरी चम्पकवनादागत्य शीघ्रं मुनिराजं

नयां श्रद्धां स्वहृदयेन धारयन्नृपाणां श्रेष्ठः स पद्मोत्तरो राजा मधुरां गुरुभक्तिं कृत्वा देवसमूहेन सेव्यां मुनिराजस्य वचनचन्द्रिकां पातुं सकललोकलोचनानन्ददायिनं श्रीवज्रनाभमुनिराजस्य मुखरूपचन्द्रं पश्यंश्चकोरपक्षिणो रीतिं चकारेति शम् ॥

॥ इति श्रीदण्डाधिपतिश्रीमदाह्लादनसमभ्यर्थित-श्रीविजयसिंहसूरिशिष्य-श्रीवर्धमानसूरिविरचिते
श्रीवासुपूज्यचरिते आह्लादनाङ्के महाकाव्ये सद्गुरुलब्धिवर्णनो
नाम प्रथमो भागः समाप्तिमफाणीत् ॥ श्रीरस्तु ॥

तथाहि–गुरोश्चरणधूलिं शिरसा स्पृशतो ममान्तरे स्थितोऽसौ स्खलनकारीति विचार्य प्रथमं स्वमुकुटममुचत् । ततः संसाररूपसमुद्रस्य वृद्धिकारकं चन्द्रमिव श्वेतं छत्रं स राजश्रेष्ठोऽमुचत् । ततो जगद्रूपकमलस्य विकासकारकस्य गुरोरग्रे गन्तव्यमिति विचार्य स राजा पापरूपान्धकारमयीं शस्त्रपङ्क्तिं तत्याज । ततो गुरोश्चरणनखकान्तिभिर्ममैश्वर्यं श्रेष्ठं शोभते, सम्प्रति चामरद्वयेन मम किं प्रयोजनमिति विचार्य स राजा चामरधारणं वारयामास । उत्पन्नकण्टकां संसाराटवीं समुत्तीर्यैव मुनिराजस्य वचनरूपवापीं स्नातुं स राजोपानहावमुञ्चत् । ततो विमलबोधमन्त्रिणा विज्ञापितो राजा गुरुदर्शने योग्यान्पञ्चाभिगमांश्चकार । तद्यथा–तदा चन्दनपुष्पताम्बूलत्यागव्याजाद् बुद्धिमान्स राजा संसारनिबद्धप्रेमत्यागस्य पुण्याहमङ्गलं चकार । पूर्णरूपेण गुरौ संजातश्रद्धो राजा मुद्रिकादिभूषणजातं धारयन् पुष्पवान् वृक्ष इव रराज । गुरुराजस्य सम्मुखे नखरत्नकान्त्या मनोहरमञ्जलिं शिरसा वहन्स राजा मुकुटं विनापि मुकुटवानिव शुशुभे । चतुरः स राजा स्वस्कन्धव्याजादकथयदिव, अत्र वामता न प्रदर्श्या दक्षिणस्थितिस्तु प्रकाश्या ॥

गुरुराजस्य वाणीरूपामृतधारा कर्णाभ्यां वहिर्मायात्विति विचार्यासौ राजा निश्चलो भूत्वा स्वहृदयं दृढं चकार । अथ परमानन्दः स राजा पञ्चोत्तरो मुनिराजस्य सभां प्रविवेश । भ्रमणत्रयेणैव संसारं संक्षिपन्निव स राजा मुनेस्तिस्रः प्रदक्षिणाश्चकार । अथ पवित्रभावनया पवित्रितः स राजा प्रसन्नमना: संसारकर्मनाशकं तं मुनिराजं प्रणनाम । नमस्कारं कुर्वतो राज्ञो मूर्ध्नि सन्ध्यासदृशं मुनिराजस्य चरणनखज्योतिश्चन्द्रोदयं सूचयामास । मुनिराजस्य दर्शने विघ्नकारीणीमान्यश्रूणि किं स्युरिति विचार्य स राजा हर्षोत्कर्षेणोत्पन्नान्यप्यश्रूणि निनिन्द । इत्थं रोमाञ्चरूपकञ्चुकधारी प्रसन्नाशयो योग्यासने समुपविष्टोऽभि-

सुपात्रेभ्यो न ददति। यद्दानं तु संसारसागरस्य यानरूपेभ्यः सुपात्रेभ्यो दीयते तद्दानमसंख्यफलदं भूत्वा दातुर्भोगाय भवति। सुपात्रेभ्यो दत्तं दानमिहलोके परलोके च हृदयानन्दस्य कारणं भवति। अस्मिन्विषये कुमाररतिसार एवोदाहरणम्। तथाहि—

## ॥ अथ रतिसारकथा ॥

माहिष्मतीनाम्नी नगरी वर्त्तते। यस्यां नगर्यां पुरवासिनो लक्ष्म्याश्चञ्चलत्वं दानलीलया पूरयन्ति। तस्यां पुरि नाशिताशेषशत्रुः "सुभूम" नामा राजाऽभूत्। यस्य राज्ञो दानलक्ष्म्यः क्रीडावने कल्पवृक्षसदृशा आसन्। तस्य राज्ञो भुवने विस्मयवान् "रतिसार" नामा शुद्धगुणवान्पुत्रो बभूव। यस्य रतिसारस्य रूपसौन्दर्यं देवा अपि ध्यानपूर्णमनोरथैर्नापुः। यस्य रतिसारस्य शुद्धगुणैः प्रसन्नः सुभूमो राजाऽनुग्रहेण स्वेच्छया धनवितरणशासनं ददौ। स रतिसारः कदाचित्कलाविद्भिः सहितोऽशुभिः सूर्य इव नगरस्य प्रान्ते विचिक्रीड। अथासौ कुमारः पण्डितैर्दृश्यमानं पताकाया अग्रभागे बद्धग्रन्थिं कंचन मनुष्यं चतुष्पथे ददर्श। अथ योग्यचमत्कारे कुमारे रतिसारे परिपृच्छति सति कश्चिज्ज्ञाता तस्य मनुष्यस्य रूपमनेन प्रकारेणाकथयत्। हे कुमार! देहधारी महाभिमानी कोऽपि ध्वजधारी पुरुषोऽयं कुतोऽपि प्रातःकाले नगरान्तरे समागतः। अस्य पुरुषस्य ध्वजाग्रे ग्रन्थिं दृष्ट्वा गुणवद्भिर्नगरवासिभिः "इह ग्रन्थौ किं वस्तु वर्तते?" इति पृष्टः स नरः स्पष्टमवोचत्, हे जनाः! इह ग्रन्थौ त्रिभुवनस्य हितकारी विद्वद्भिः पूजितः श्लोक एकोऽस्ति। प्रयोजनवशादमूल्यमप्येनं श्लोकं लक्षसुवर्णमुद्रया विक्रीणे। इत्थं तस्य वचनं श्रुत्वा साश्चर्या निर्मलबुद्धिमन्तो नगरवासिनो विद्वांस एकत्रीबभूवुः। ततस्तादृशश्लोकस्य दर्शने समुत्सुका ग्रामवासिन

श्री वर्धमानसूरिकृतं

# ॥ श्रीवासुपूज्यचरित्रम् ॥

## [ द्वितीयो भागः ]

अथ महाज्ञानी वज्रनाभनामा स मुनिराजो राजानं भाविजिनं जानन् सकलमोहनाशकं वचनमुवाच, हे सज्जनाः ! चतुरशीतिलक्षयोनिमध्ये भ्रमतां प्राणिनां कल्पवृक्षसदृशं मनुष्यजन्म दुर्लभम् । स्वर्गमोक्षदायि पुण्योदयात्प्राप्तमपि मानुषमिदं जन्म प्रमत्ता अज्ञानिनः केचिज्जना निष्फलं व्यतीतं कुर्वन्ति । हे सज्जनाः ! अभिलषितफलदं मनुष्यजन्म जानीथ । अतो मनुष्यजन्मनो यत्फलं तत्फले सावधाना भवत ! । गुरुवचनामृतः सिक्तं पुण्यरूपपुष्पयुक्तं दान–शील–तपो–भावरूपचतुः-शाखायुतं संसाररूपवने भ्रमणेन खिन्नैः सुरासुरैः श्रितछायं मनुष्यजन्म कस्मैचित्तस्मै फलाय भवेत् । हे जनाः ! सर्वकर्मणां प्रधानं दानं जानीथ । यद्दानं शुद्धशीलतपोभावैरग्रे धार्यते । सकलदेवानामपि श्रेष्ठां सम्पदं भोग्यभाग्ययोरादिकारणस्य दानस्यैवाधीनां जानीथ । संसारसमुद्रस्य तरङ्गप्रायासु चञ्चलासु च सम्पत्तिषु तेषां लालसा मज्जन्ति, यैं जनाः संसारसागरस्य यानमिव दानं

निर्गच्छन्तीं काञ्चिद्दरवर्णिनीं स्त्रियमपश्यम्। ततो निद्रान्ते यावद् स्वप्ननाशकं किमपि विचारयामि, तावन्मूर्त्तमभाग्यमिव धनकोशे धूमः प्रादुरभूत्। तत्कालमेव च मम सुभाग्यनाशको दुर्भाग्यजनकश्चाग्निस्तत्र प्रकटीबभूव। तदा ममत्वरहितो यथा संसारान्निर्गच्छति तथाहमपि धनकोशे निस्पृहः स्वजनं चिताग्निसार्य स्वगृहान्निर्गतः। अथ तदा यद्यद्दह्यमानं धनं जनैराकृष्टं तत्सर्वं छलिनो गृहीत्वा शीघ्रं पलायाञ्चक्रिरे। मम दुर्भाग्यात्तस्मिन्नग्नौ प्रपतद्भिरश्वैः पतङ्गानां रीतिरङ्गीकृता [अर्थान्मृताः]। तत. सकलवस्तुदाहेन मूर्च्छिते मयि सर्वे जना गृहं त्यक्त्वा प्रतिकारपरा बभूवुः। यावज्जना मम मुर्च्छां दूरीकृतवन्तस्तावदग्नि-रपि सर्वं गृहं भस्मावशेषं चकार। सकलवस्तुनि दग्धेऽपि स्वजनसहितं मां मूर्च्छारहितं दृष्ट्वा जनाः पुण्यवन्तमाहुः। अथ मम व्यापारो दूरदेशव्याप्यासीदतोऽहं तेभ्यो धनिभ्यो धनमादाय स्वकुटुम्बं गोपायाञ्चकार। किन्तु दुर्भाग्यवशान्मम दिवसप्रान्ते सर्वेऽपि वणिक्पुत्रा मार्गे तस्करैर्गृहीताः। सद्भाग्यनाशाद् व्याकुला इव पोतस्थिताः सम्पदः समुद्रे ममज्जुः। एतत्समा-चारं श्रुत्वा परमदुःखी चाहमृणी व्यापारिवर्गाद् भयं प्राप्तश्च क्वापि शान्तिं न प्राप्नुवम्। "याचतामृणदातॄणां किं देय" मिति विचार्य रात्रौ देशान्तरं गन्तुं विचारमकरवम्। ततः पूर्णचन्द्रमुखीं सुप्तां स्वस्त्रियं चिरं साश्रुनेत्राभ्यां दृष्ट्वा दैन्यगद्गदवाचा पृष्ट्वा "पुनरीदृशानि दृश्यानि किं मिलिष्यन्ति ?" इति विचार्य सुप्तानां पुत्राणां मुखं भूयो भूयो दृष्ट्वा महादुःखी बाहुसहायः पदगामी चाहं मध्यरात्रे शनैः शनैः स्वगृहान्निरगच्छम्। अथ गमनचातुर्यान्नगराच्छीघ्रं बहिरगच्छं, परन्तु हे राजकुमार! सुकुमारशरी-रत्वान्महापरिश्रान्तोऽभवम्। अथान्वेषणतत्परेभ्यो धनिभ्यो बिभ्यन्मृत्यौ प्रीतिं वहन्नहं झम्पां दातुं नगरस्य क्रीडापर्वतस्य शिखरं शनैरगच्छम्। ततो देहेन सह दुःखानि चूर्णयितुं झम्पार्थं मयि शिखरमारूढे कुतोऽपि वाणी प्रादुरभूत्।

ऊचुः, गुप्तवस्तुनः किं मूल्यं भवितुमर्हति ? इति। अथासौ जगाद। भवादृशाः सज्जनाः क्वचिन्न लभ्याः, येषां कपटमेव वस्तुप्राप्तौ महद्धनमस्ति। भोः! याचकाय रोगिणे, आस्वादमात्रेणैव रोगनाशकममृतं स्वादं परीक्षितुं को नाम विक्रेता व्यर्थं ददाति ?। हे दक्षाः! संसारस्य सारभूतस्य श्लोकस्यार्थवाचनस्यैव मूल्यं याच्यते, तं श्लोकं परीक्षार्थं यर्थं कथं दर्शयामि ? । भोः! महाबुद्धिमन्तो भवन्तो दृष्ट्वैव श्लोकस्यार्थं ज्ञास्यन्ति ततोऽहं कस्य विक्रयं करिष्यामि ?। हे कुमार! इत्थं धूर्तेन तेन नरेणोक्ता सर्वे नगरवासिनः पण्डिता बहुकालाच्छ्लोकं द्रष्टुं विह्वलाः सन्ति। एवं तस्य वचनं श्रुत्वा महाश्चर्यान्वितः स कुमारः सहृदयानां मित्राणां मुखं पश्यन्नुवाच, विद्यात्रयज्ञानपि पण्डितांश्छलयतो यस्य वचनभङ्गिरतुल्यमूल्या गतिभाति, स जनानां हितकारकं वचनं वदन् य श्लोकं विक्रीणाति, तं श्लोकं सुवर्णलक्षमुद्रया क्रीणन्को दक्षो जनः क्षोभं कुर्यात् ? इत्थं कथयन्मित्रसमूहयुतः प्रसन्नः स कुमारः किञ्चित्परिक्रम्य श्लोकविक्रयिणमुवाच, हे नरश्रेष्ठ! स्वेच्छया त्वं सुवर्णं गृहाण, इदं श्लोकरत्नं दीयताम्? परन्तु श्लोकस्यास्य यथार्थमुत्पत्तिः कथ्यताम्। अथ परमप्रसन्नः स श्लोकविक्रेता कुमारं रतिसारं कथयाञ्चकार। हे श्रीमन्! श्लोकस्योत्पत्तिः श्रूयताम्। लक्ष्म्या निवासभूमिरमरावतीसदृशी "श्रावस्ती" नाम्नी नगरी विद्यते। तस्यां नगर्यां स्वबलमजानन् गज इव स्वसमृद्धेरज्ञाता परमसमृद्धिमान्प्रसिद्धो व्यापारी सुबन्धुनामाहमस्मि। मम गृहे तुरङ्गशब्दरूपभूषणं दधाना लक्ष्मीर्नर्त्तकीव सततं नर्त्तनं करोति स्म। सद्भाग्यव्यवसायरूपपक्षवत्यः समुद्रस्य परतीरेऽपि विचरन्त्यो मम विभूतय एधाञ्चक्रिरे। अस्मिन्पृथिवीतले यो मम ऋणं नादधात्तं कञ्चन रङ्कं राजानं वा नरं न जानामि (अर्थात्सर्वे मम ऋणगृहीतारः)। हे राजकुमार! अहं पुत्रपौत्रदौहित्रादिभिरलङ्कृतश्चिरं भूरिसम्पत्तिभागभवम्। एकदा रात्र्यन्ते स्वप्ने सकलाभरणभूषितां स्वगृहा-

परिश्रमः स कुमारश्चलन्सुखपूर्वकं महतीं पृथिवीमलंघिष्ट । महावनं गतस्य तस्य तेजस्विनः कुमारस्य शयनसमये ज्वलदग्निबुद्ध्या घातका व्याघ्रादयो जीवाः कुत्रचित् समीपस्था नाभूवन् । मनुष्या ईदृशीं शोभां न वहन्ते, अयं तु कोऽपि देवो हेलया खेलतीति विचार्य तस्करा एनं न पराभूवन् । इत्थं बलवतामग्रणीः पृथिव्या भूषणस्वरूपः स कुमारो निराहार एव चतुर्थे दिने श्रावस्तीं नगरीं जगाम । ततो मध्याह्नसमये सूर्यस्य कान्तिभिः परिश्रान्तः स कुमारः कामदेवस्य मन्दिरे विश्राममकार्षीत् । महातेजस्वी कोऽप्ययं सामान्यो मनुष्यो नेति विचार्य ध्यानवशादेव ता देवपूजिकाः शीघ्रं पवित्रजलमानीय "हे वीर ! जलं सफलीकुरु" इत्थं तं कुमारमूचिरे । ततः संसारभ्रमणेन परिश्रान्तः श्रीतीर्थंकरस्योपदेशानिव स कुमारो वनभ्रमणपरिश्रान्तो मधुरा अपः पपौ ॥

तत्समये तत्र हर्षान्वितं रवं श्रुत्वा "अत्र किमस्ति ?" इत्येवं प्रकारेण स कुमारस्तां स्त्रियं पप्रच्छ। सोवाच, हे कुमार ! राजयशसां स्थानं शत्रुरूपहस्तिनो मृगराजः कृपनामा राजात्र विद्यते । तस्य राज्ञः कान्तिस्थानं हरिणाक्षी सौभाग्यरूपवृक्षस्य मञ्जरीतुल्या "सौभाग्यमञ्जरी" नाम्नी कन्याऽस्ति । मधुरामृतस्य कूपसदृशी सा कन्या यैर्न दृष्टा, तेषां देवानामपि नेत्रं व्यर्थमनिमेषत्वस्थानमभूत् । यतो निर्मलस्वरूपस्य सर्वस्वमिदं महत्कन्यारत्नं यामिकेनेव बाल्येन यौवनायार्जितम् (अर्थाद् युवती बभूव)। परमसुन्दर्यौ तुल्यावस्थावत्यौ धीरनाममन्त्रिपुत्री धन्यनामश्रेष्ठिपुत्री च सख्यावास्ताम् । राजकन्यायाः स्वरूपे घुणाक्षरन्यायं विचारयन् ब्रह्मा सिद्धिशिल्पिपरीक्षार्थं द्वेकन्येऽसृजत् । प्रियंवदासुताराानाम्न्यौ द्वे सख्यौ रतिकान्ती श्रियमिव तां कदाचिदपि न मुञ्चतः स्म । त्रिभुवनस्य नारीरूपसम्पत्तीनां देवता इव तास्तिस्रोऽपि कन्याः सकलासु

"मा मानवं भवं हन्त चिन्तामणिमिवार्भकः। परिक्षेपीर्मुधा मूढ प्रौढभाग्यभरार्जितम्" ॥ १ ॥

अस्यार्थः—हा मूढ ! यथा बालकः पाषाणबुद्ध्या चिन्तामणिमपि परिक्षिपति तथा प्रौढभाग्योदयेन प्राप्तं मनुष्यजन्म मा परिक्षेपीस्त्वम् ! । इत्थं तद्वचनं श्रुत्वा चतसृषु दिक्षु नेत्रे क्षिपन् कंचनापि जनमदृष्ट्वा पुनर्झम्पापाते समुत्सुको जातोऽस्मि तदा पुनर्वाणी प्रादुरभूत् ।

"खेदभेदधिया प्राणप्रहाणं मुग्ध मा विधाः। स्फीतशीतभिदे कल्पशालं ज्वालयतीह कः" ॥ २ ॥

अस्यार्थः—हे मूर्ख ! दुःखानां नाशबुद्ध्या त्वं प्राणनाशं मा कुरु । इह संसारे निविडशीतनाशाय को नाम जनः कल्पवृक्षं ज्वालयति ? न कोऽपीत्यर्थः । इत्थं पुनः श्रुत्वा दिक्षु पञ्चषाणि पदानि गत्वा कंचनजनमपश्यन्नहं झम्पार्थी जातः, पुनश्च वाणी प्रादुर्भूता श्रुता ।

"दुःखद्वेषेण किं मूर्ख निजं त्यजसि जीवितम् । रेणुवैरेण पीयूषच्छटां किरति कः क्षितौ" ॥ ३ ॥

अस्यार्थः—हे मूर्ख ! दुःखानां द्वेषेण त्वं स्वीयान्प्राणान्किं त्यजसि ? को नाम नरो धूलिवैरेण (धूलिनाशायेत्यर्थः) अमृतच्छटां पृथिव्यां क्षिपति, न कोऽपीत्यर्थः । तामुक्तिं तिरस्कृत्य "मा मा" इति शृण्वन्नपि तदाहं पर्वतस्योच्चशिखराज्झम्पां दत्तवान् (अर्थात्पतितः) । ततः पातवेगेनोत्पन्नमहावायुना कम्पितः पृथिवीदेशभागे गमनवानहं मूर्च्छामगमम् । अथ त्यक्तमूर्च्छोऽहं तस्यैव पर्वतस्य शिखरे स्थितमात्मानं तथा समीपस्थं कंचन मुनिमपश्यम् । अथ स किं स्वप्नः ? उत च मतिभ्रमः ?

कन्यासु कौशल्यमापुः। कामदेवस्य पूजां कर्त्तुं ता अत्र प्रत्यहमागच्छन्ति, तत्परिवारस्त्रीणामेष शब्दः श्रूयते। इत्थं वार्त्तालापे भवत्येव कटाक्षपातं कुर्वन्तीः प्रसन्नीकृतकामास्ताः स्त्री राजकुमारो ददर्श। ततः कामदेवस्य प्रत्यक्षाः शक्तीरिव तिस्रः कन्यकाः कुमारो नरविमानस्थिता अपश्यत्। ततो यूनां मनोरूपवनमध्यभागं ज्वलयन् सुवर्णसमकान्तिः कामदावाग्निरिव स स्त्रीलोकः शनैः शनैश्चक्राम। ततो मनुष्यसमूहानां हृदये मोहमयीं रात्रिं प्रकाशयद्भिश्चन्द्रसदृशकिरणैर्मुखैः शोभमाना विचाररूपपुष्पे भ्रमरवदाचरितं लीनं सज्जनानां मनः कर्षद्भिर्नयनकमलैः संसाररूपसमुद्रं शोभयन्तीर्मुनीन्द्राणामपि कीर्त्तिं मन्दीकुर्वद्भिः कामदेवस्य दीपिकाभिरिव शरीरकान्तिभिर्विचित्राः शनैः शनैः समीपं प्राप्तास्तास्तिस्रोऽपि कन्यकाः कुमारोऽद्राक्षीत्। दृष्ट्वा च कामाधीनो बभूव। ततश्चञ्चलकान्तिवन्तं रतिसारं कुमारं दृष्ट्वा तास्तिस्रः परस्परं किञ्चिद्विहस्योचिरे। मम भक्तिगुणेन क्रीतः प्रसन्नोऽयं कामदेवः किमु स्वयं प्रासादान्निर्गत्यास्माकं मार्गं गवेषयति?। अथ च, स्त्रीलाभस्य लोभेन लुप्तबुद्धिरसौ कश्चिद्देवश्रेष्ठः किमु कामदेवस्य सेवार्थं समागतः?। अथवाऽस्मभ्यं वरं दातुकामः कामदेवः स्वयमेवाधिकशोभावन्तममुं कमपि मनुष्यमानयत्?। एवमुक्तिप्रत्युक्तिं कुर्वन्त्यो राजकुमारे समासक्तचित्तास्ताः कन्यका आत्मानं धन्यं मन्यमाना नरविमानादुत्तेरुः। आच्छादितशरीरमपि मुहुर्वस्त्रेणाच्छादयन्त्यः स्खलत्कोमलचरणन्यासास्ताः कन्यकाः प्रासादमध्यभागमाजग्मुः तस्य कुमारस्य मुखं दिदृक्षवो लज्जया द्रष्टुमसमर्थास्ताः कन्यका नेत्रकोणावलोकनस्य प्रारम्भमंगलं चक्रुः। "भवद्भ्यामीदृशं तेजस्विरूपं क्वचिच्छ्रुत" मिति प्रष्टुमिव तासां नेत्राणि कर्णयोः समीपमुपाजग्मुः। कुमारस्तु स्वे हृदये तासां प्रवेशमहोत्सवेऽत्यन्तं भावाभिन्ननीलकमलमालायास्तोरणसदृशीं दृष्टिं ददौ। अथ कुमाराधीनहृदयास्ताः कन्यकाः कथञ्चिदपि कुमार-

इति वितर्कयन्तं विस्मययुतं मामतुल्यवक्ता स मुनिरुवाच, रे मूर्ख! मया वारवारं निषिद्धोऽपि त्वं व्यर्थं प्राणांस्त्यक्तुं किं धावसि ?, आत्मनः सहचारिणां दुःखानां प्रतीकारो मृत्युः क्व ?। इत्युक्त्वा मयि विचारसम्मुखे स मुनीश्वरो मम मनःशोकं दूरीकुर्वन्नेकं श्लोकं वदंश्चाकाशमुद्ययौ। ततः क्षणं स्वशरीरकान्त्या सूर्योदयं पुनरुक्तं कुर्वति मुनावदृश्यं गतेऽहमित्थमचिन्तयम्। नूनं मम पुण्यैः संसारतारकोऽयं कोऽपि चारणो मुनिरत्र पर्वते रात्रौ शरीरोत्सर्गे ध्याननिमग्न आसीत्। दयालुनानेनैव मुनिना शिखरात्पतनहं धृतः, तथा श्लोकदानेन शान्तः कृतश्च। इति विचार्य तस्य मुनेः क्रमचिह्नितां पृथिवीं नत्वा तच्छ्लोकस्य ध्यानेन सकलदुःखरहितोऽहं स्वीयेषु मनुष्येषु सुप्तेष्वेव रात्रिशेषे समये शनैः शनैः स्वगृहमगमम्। मुनीन्द्रदर्शनं तथा श्लोकलाभं मनसि विचारयन्नहं सम्पदः स्थाने प्राप्तां विपदमपि गुणायाजीगणम्। मां निश्शेषक्षीणधनं ज्ञात्वा दाक्षिण्यवद्भिर्व्यापारिभिः कदापि लभ्यं धनं न याचितम्। अथ केचिन्मम ऋणगृहीतारः स्वयं लज्जया समागत्य किञ्चिद्धनं ददुस्तेनैवाहं स्वकुटुम्बान्विभराम्बभूव। इत्थं यद्भविष्यः सन्नहं विपद्गतां स्वप्रियामपि तस्य श्लोकस्यार्थसामर्थ्येन प्रसन्नवतीमकार्षम्। अथ साम्प्रतं मत्प्रियायाः सोदरभ्रातुर्विवाहो भविता, तदुत्सवे गमनोत्सुका सा गद्गदशब्देन मामवोचत्, हे स्वामिन्! न हि भूरि भूषणानि सन्ति, न च श्रेष्ठवस्त्राणि, न तु मार्गयोग्यानि वाहनानि, न च दानीयानि धनानि सन्ति। ईदृश्यहं श्रेष्ठभूषणवतीषु दातुं विचित्रवस्तुसमानयन्तीषु प्रधानवाहनैरागतासु सोदरभगिनीषु कथं रस्ये ?। अत आत्मानं तस्माद्वस्तुनो वा किञ्चिदधिकं विक्रीय मम मानं रक्ष। यतो मान एव सज्जनानामात्मनोऽपि गरीयान्। यदि मानो न पूर्यते तदा मम मरणमेव शरणम्, यतो मानिनो मानमात्मनोऽप्यधिकं दुस्त्यजं मन्यन्ते। इत्थं तस्या आग्रहं चिरान्मनसा विचार्य कृष्णमुखोऽहं किंक-

शोभयामास । अथ तस्य कुमारस्य तासां कुमारीणाञ्च दृष्टिकान्तिरूपदण्डसमूहैः प्रेरित इव सूर्योऽस्ताचलमाससाद (अर्था-
त्सूर्यास्तसमयोऽभूत्)। तत्समये तेषां हृदये स कोऽपि प्रवृद्धः कामतापोऽभूत्, येन जित इव सूर्यो लज्जया दूरं मृतोऽभूत्।
ततो रात्र्यारम्भे सन्ध्याकालीनरक्तमेघव्याजान्मेघभावं धारयन् तेषां प्रेमसमुद्रो भृशं जजृम्भे। तेषां शरीरे प्रकटकामाग्निसं-
जातैरतिशयैर्धूमैराकाशं व्याप्तमभूत्। इत्थं क्रमशो रात्रौ व्यतीतायामर्धरात्रे पुरनिवासिषु निद्रांगतेषु सकलाभरणभूषिताः
पाणिगृहणोपकरणमाददानास्तास्तिस्रः कन्यकाः कामदेवस्य मन्दिरमाययुः। "तास्तिस्र आगमिष्यन्ति न वा?" "सोऽत्र-
भविष्यति न वा?" इति परस्परं व्याकुलचित्तास्ते परमानन्दमविन्दन्त। अथ प्रसन्नास्ते तत्कालप्रज्वलिताग्निव्याजादीप्यमानं
महान्तं विरहं स्वस्वहृदयाद् दूरं चक्रुः। अथात्यन्तप्रेमप्रकर्षास्ते संसारसागरस्य डिण्डीरसमूहवत्कान्तिमन्ती (शुभ्रे) वाससी
पर्यधुः। अथातिशयानन्दवद्भिस्तैः कामलताया बीजसदृशमनोज्ञानि मदनफलानि पाणिषु बबन्धिरे। ततो विस्तृतोत्साहः स
राजकुमारो वियोगसमुद्रे निमज्जन्तीस्तास्तिस्रः कन्यकाः पाणौ जग्राह। करगृहणानन्तरञ्च तेषां परस्परं मधुरालापाः
संजाताः। ततो रात्र्यवसाने तास्तिस्रः कन्यकाः स्वं स्वं गृहं गताः, गत्वा कुमुदिन्य इव निद्रां लेभिरे। तासु गतासु कुमा-
रोऽपि निद्रावशं गत। तदा विद्वांसः शीघ्रं दृष्ट्या नष्टया च सन्ध्यया शरीरं शीघ्रं गत्वरं ज्ञात्वा धर्मतत्त्वान्यस्मरन्। विद्वांसः
कुमुदे क्षीणां शोभां दृष्ट्वा लक्ष्म्याश्चञ्चलत्वं जानन्तः प्रसन्नाः सन्तो दानमदुः। कोकपक्षिदृष्टान्तेन संयोगविप्रयोगयोरन्तं सज्ज-
नानां हृदये दृढं कुर्वन्साधुलोको धर्मोपदेशं चकार। प्रमेव सुप्तस्यापि जनस्य समये समुपस्थिते लक्ष्मीः स्वयमागच्छति,
तल्लक्ष्मीप्राप्त्यर्थं क्लेशो न कर्त्तव्य इति कमलं भ्रमरशब्दैरकथयत्। यथा श्रीतीर्थकरः पापं नाशयति तथा किरणन्यासैः

स्य दृष्टिपथमुल्लङ्घ्य कामदेवस्य मन्दिराभ्यन्तरं ययुः । अथ परस्परं विरहस्य भयेन सा राजकुमारी रहसि गुप्तवत्सख्यौ प्रत्युवाच । हे सख्यौ ! अत्यन्तप्रेमरूपरज्जुबन्धनबद्धमस्माकं मनो बाल्यकालादारभ्यापि कदापि भिन्नं नाभूत् । परन्तु युवावस्थायामस्यां भिन्नजातिभिः पितृभिर्भिन्नजातिभ्यः पतिभ्यो दत्ता वयं भिन्नतां कथं त्यक्ष्यामः ? ततो यदि युवयोर्हृदि निश्चितमनोरथः स्यात् तदा नयनानन्ददायी एक एवायं पतिरस्माकमस्तु । समस्तजनानामनुपस्थितावेव वियोगभयेनाद्यैवास्यां रात्रौ कुमारस्यास्य करग्रहणमस्माभिः कर्त्तव्यम् । एवमुक्त्वा "एते सख्यौ किमुत्तरं दत्त" इति श्रोतुं व्याकुलायां मौनमाश्रितायां राजकन्यायां प्रियंवदा जगाद, हे देवि ! त्वत्सख्यस्यादिकारणाय कल्याणाय पत्ये च यत्त्वयोक्तं, तदेव यदि मम हृदि नासीत् तदा शपामि (अर्थान्मम मनस्यपीदमेवास्ति) । एवं प्रकारेण प्रियंवदायां कथयन्त्यां सुतारापि तद्वचनं समर्थयामास । इत्थं परस्परं वार्त्तालापं कुर्वन्त्यो निर्मलैर्मनोभिस्ताः कन्यकाः कामदेवमपूजयन् । अथ बहिरागत्य कामदेवस्तुतिकरणव्याजात्तास्तिस्रः कन्यकाः कुमारमुद्दिश्य मधुरां वाचमूचिरे । हे नाथ ! यथा त्वय्यस्माकं मनः स्थिरमस्ति तथा त्वयापि मामधिकेऽस्मिन् कामयन्दिरे रात्रिन्दिवं स्थातव्यम् । इत्थं तासामुक्तियुक्तिभिश्चतुरः कुमारो रात्रावपि तत्रैव प्रासादेऽतिष्ठत् । अथ ताः कन्यकाः कामदेवस्य पूजां कृत्वा दर्शनच्छलान्मुहुः पृष्ठतो नयनानि क्षिपन्त्यश्चेलुः । ततस्ताः कन्यकाः प्रवृद्धकामानलेन पक्वैः प्रेमरसैः स्वहृदये कुमारं चित्रवन्न्यस्य जग्मुः । तदा तासां हृदये स्थितः कामो हारः कुमारश्चाधिकं तेजो धारयन् तापायैवाभवत् । अथासौ कामदेवो भक्तेभ्योऽभिलषितवस्तुप्रद इति कथयन्ती देवपूजिका कुमाराय शेषान् मोदकान् दत्तवती । तस्मिन् समये तान्मोदकान्भक्षयित्वा कुमारः शुभैः कामदेवपूजावशिष्टैस्ताम्बूलपुष्पचन्दनैः शरीरं

वन्तस्ते सर्वेऽपि सैनिकाः कुमारं बद्धुं धावन्तोऽन्धा बभूवुः। ततः स्वहस्ताग्रमप्यपश्यन्तोऽन्धदृष्टयस्ते भटा अग्रे यत्र तत्र चल-नादपतन्त। ते हि वीरा भृशं स्खलितगतिका अन्धाश्च सन्तः परस्परमपि शत्रुबुद्ध्या सम्मुखमागतैर्वीरैः सहायुध्यन्त। रे! किं मूर्खस्त्वं कन्यकाः परिणीतवान्?" इत्युद्धतवचनं वदन्तः केचित्कामदेवस्य मन्दिरे स्थितं प्रस्तरनिर्मितं पुमांसमताडयन्। ततः कटुवचनं वदन्तोऽन्ये वीराः करस्पर्शेनावलम्बितं चामरं प्राप्य कुमारकेशबुद्ध्याऽच्छिन्दन्। कोपाविष्टाः केऽपि प्रौढपाषाणनिर्मितहस्तिनः शुण्डं प्राप्य कुमारहस्तं जानन्तो दन्तदष्टौष्ठाः सन्तश्चकुपुः। इत्थमनेकविधसंग्रामकौतुकं कुर्वन्तः सैनिकाः कुमारस्य नयनोत्सवं चक्रुः (अर्थात् कुमारः कौतुकमिवापश्यत्)। एवं सेनाविचित्रतां श्रुत्वा राजा मन्त्रिणमुवाच, असौ पुरुषो न साधारणः, अतः सन्मानपूर्वकमानीयताम्। अथ मन्त्री सत्वरं शीघ्रगतिना राजकीयाश्वेन गत्वा "अनेन वीरेण सह विरोधो न कर्तव्यः" इति सैन्यमुक्तवान्। इत्थं मन्त्रिणो वचनं श्रुत्वा सर्वे सैनिका अन्धत्वनाशेन परस्परमेव युद्धं ज्ञात्वा भृशं लज्जिरे, सचिवस्त्वश्वं त्यक्त्वा कामदेवस्य मन्दिरमगमत्, गत्वा च कुमारस्याग्रे विनयपूर्वकमुवाच, हे धीरमुकुटमणे! हे वीर! हे गम्भीरगुणसागर! राजा तव मुखचन्द्रे स्वं नेत्रं चकोरपक्षिरूपं कर्तुमिच्छति (अर्थात्त्वां द्रष्टुमिच्छति)। ततः कुमारो राजसमीपगमन उत्थानमेव मन्त्रिवचनस्योत्तरमदात्। अथ मन्त्रिराजस्य निदेशेन विशालरथमारुह्य महापराक्रमी स कुमारो राजसभामगच्छत्। ततो राजा महातेजस्विनमनुपमरूपं कुमारं रतिसारमागच्छन्तमवलोक्य स्वचित्ते विचारयामास। यो जन एकवारमप्यमुं कुमारं पश्येत् स धन्यः सतां मान्यश्च, येषां त्वयं बन्धुः, तेषां किं कथनम्?। असौ कामदेवः सौहृदेन हृदयेन यासां कन्यानां प्रेमेच्छति तासां जन्म फलवत्, तासामसन्तोषश्च दूर एव। इत्थं विचारयन्तं राजानं कुमारो रतिसारः

श्रीसूर्योऽन्धकारं विनाश्य विश्वं प्रकाशयामास । अथ सुप्तां विवाहशोभाङ्कितां सौभाग्यमञ्जरीं दृष्ट्वा साश्चर्यः कञ्चुकी शीघ्रं राज्ञे व्यजिज्ञपत् । तत्र समये मन्त्रिश्रेष्ठिभ्यां सह स्वयमागत्य राजोवाच, रात्रौ कोऽप्यागत्यावयोः कन्यां परिणीतवान् । अत्रेत्थं भयङ्करं साहसं कः कृतवान् ? इति राजनि वदति सति कोऽप्यागत्यावोचत, हे स्वामिन् ! कामदेवमन्दिरे कोऽप्यनिर्वचनीयशोभावान् तथा विवाहयोग्यवेषवान् कश्चन पुरुषोऽस्ति । इत्थं तस्य वचनं श्रुत्वा राजा क्रुद्ध आज्ञप्तवान्, महापराधी स पुरुषः शीघ्रं बद्ध्वाऽऽनीयताम् ! । ततश्चतुरः कोऽपि राजपुरुषो गत्वा महाबलं, तं दृष्ट्वा भयाकुलः शीघ्रमागत्य राजानमुवाच । हे राजन् ! तत्र तु विशालदृष्टिपातेन जगत्त्रयं तृणं मन्यमानो द्वादशसूर्यसदृशकान्तिमान् कोऽपि पुरुषो विद्यते तस्य निरुपमं निर्दोषं च रूपमवलोक्य देवानामपि मानसं स्त्रीत्वायैवेच्छां करोति । मन्येऽहं, तादृशदृष्टिविलासः, तादृशं रूपं, तादृश्याकृतिः, इन्द्रस्यापि मनसा मान्यः, नासौ साधारणः पुरुषोऽस्ति । तस्मात् कारणात्, यथा तृणसमूहोऽग्निं धर्तुं न समर्थस्तथा महासैनिकसहितोऽहमपि तं धर्तुं न समर्थः । इत्थं तस्य वचनं श्रुत्वा क्रोधपरीताक्षो राजा तस्याकर्षणाय शीघ्रं ससैन्यं सेनापतिं प्राहिणोत् । अथ रथगजाश्वपदातिसेनाभिः परिवृतः स सेनापतिः शीघ्रं चचाल । राजा त्वां बद्धुं सैन्यं प्रैषीदिति जनानां वचनं श्रुत्वापि तस्य कुमाररत्नसारस्य रोमापि न कम्पते स्म । ततोऽधिकं गर्वं धारयद्भिः क्रूरैः कर्मभिरात्मेव सेनावीरैः कामदेवस्य मन्दिरं परितोऽवेष्टयत । ततो यथा कृकलासाः ( कीकडा ) सूर्यं पश्यन्ति तथा क्रोधेन रक्तमुखाः शूरा उच्चनीचमस्तकाः सन्तः कुमारमद्राक्षुः । दृष्ट्वा च तं सेनापतिः “ अयं गृह्यतामयं गृह्यता ” मिति क्रोधोद्दीपितवचनं जगाद । इत्युक्तेरनन्तरं सर्वे वीराः कुमारसम्मुखं प्रसस्रुः परन्तु कुमारो मेरुपर्वत इव निश्चलं तस्थौ । आलस्यं विहायाहङ्कारिणः क्रोध-

देशम्) चकार। अथ कुमारो रतिसारः सुवर्णगोः स्वस्य च कर्मवैचित्र्यकारणं पूर्वजन्मवृत्तान्तं धर्मोपदेशान्ते मुनिं प्रणम्याप्ृच्छत्। ततः स मुनिः कुमारस्य वचो निशम्य परमप्रीतः सन् विशदाक्षरशालिनीं वाचमुवाच। पृथिव्यास्तिलकस्वरूपं "श्रीहस्तिनपुर" नामकं नगरमस्ति। तत्र कीर्त्तिमन्तो लक्ष्मीवन्तश्च जनाः सन्ति। तत्र नगरे शत्रुनिहन्ता सुमित्रो नाम राजाऽऽसीत्, यत्प्रतापलता पुष्पं निनाय। तस्य राज्ञो विश्वभूषणरूपो विश्वसेननामा पुत्रोऽभवत्, यः सकलकलासु गुणेषु च प्रवीणतां लेभे। स्वभावतो दयालुः स विश्वसेनोऽहङ्कारेण समीपमागतान् सर्पानपि दयादृष्ट्यैवापश्यत्। परमदयालुः स राजकुमारो महापराधयुक्तेषु तस्करेष्वपि वधबुद्धिं न चकार। अपराधिनि क्रोधयुक्तेऽपि शत्रौ विश्वप्रियोऽसौ राजकुमारः कदाचिदपि द्वेषबुद्धिं न चकार। अस्य कुमारस्य मन्त्रि–क्षत्रिय–वणिग्–वैश्यानां पुत्राः कलासार–शूर–वीर–जयनामानश्चत्वारो मित्राण्यासन्। विद्वांस आत्मधर्मैरिव तैर्मन्त्रिप्रभृतिपुत्रैः सह क्रीडन् प्रसन्न उत्साही च स कुमारः शुशुभे। दयालुः स एकस्मिन्दिने क्रीडोद्याने गच्छंश्चाण्डालैर्गृहीतं त्रिशूलग्रन्थितं कञ्चिन्नरमपश्यत्। अयं कमपराधं कृतवान् येनेदृशीं दशां प्राप्तवानिति कुमारेण पृष्टः स चाण्डालपतिरुवाच। असौ त्वन्मातुराभरणपेटिकामचूचुरत्, तस्माद्राजाऽमुं संहृतवान्। अथ मम मातुर्धनहर्त्तायं मया स्वेच्छया हन्तव्य इति चाण्डालं कथयित्वा ततो नरमग्रहीत्। सर्पराजस्य मणिरिवान्यायाद् गृह्यमाणा लक्ष्मीर्मोहमत्तेषु जनेषु निश्चयं मृत्युं ददाति, लक्ष्म्याराकर्षणमन्त्रे महाविपत्तीनां पिष्टियन्त्रे प्राणप्राये न्यायमार्गे मतिः क्रियतामिति कथयित्वा शिक्षयित्वा च श्रेष्ठवस्त्रदानेन तोषितः कुमारेण प्रेषितोऽयं चोरो ययौ। एकदा राजकुमारो राजसेवार्थं गच्छन् गृहस्य चत्वरे एकत्रीभूतां प्रजामद्राक्षीत्। अत्र किमस्ति? इति राजकुमारेण पृष्टो भक्तिप्रकटकरणे चतुरस्तलारक्षो बद्धाञ्जलि-

पृथिवीतले मस्तकं न्यस्य प्रणमति स्म। ततः परमानन्दं प्राप्तः स राजाऽभ्युत्थाय दूरादेव हस्तौ प्रसार्यैत्थमवोचत्, हे गुणशोभिन् राजकुमार! त्वं प्रसन्नो भूत्वा ममाङ्गानि समालिङ्ग। इमानि मदीयाङ्गानि तवालिङ्गनामृतपानेन जिह्वेन्द्रियं हसन्तु। अथ बाहुभ्यां दत्तालिङ्गनं गुणवन्तं तं राजकुमारं सम्मान्य राजा जगाद, हे वीरश्रेष्ठ! हे विद्वन्! सकलरत्नजेतृभिः स्वशौर्यादिगुणैर्भवान् सर्ववंशानामवतंसं कं वंशं कृतवान्?। भवन्नामरूपामृतसिक्तैः कैरक्षरैः संसाराग्निदग्धानि सज्जनानां मनांसि भवानभिपिश्चति (अर्थात्किन्ते नाम)?। पुनश्च मम पृथिव्या भाग्योदयेनाकृष्टो भवान् साम्प्रतं निजवियोगेन कां पृथिवीं दुःखिनीमकार्षीत् (अर्थात् कुत्र निवासस्तव)? तथाचेदृशवेषवांस्तव पाणिग्रहणोत्सवः कस्याः स्त्रिया जीवनं, जन्म, शरीरञ्च सफलयामास? सूर्ये प्रकाशतां गते उलूकसमुदायानीव दर्शनप्रिये त्वयि मम सैन्यानि कथमन्धतां प्रापुः?। इत्थं राजनि कथयति सति कुमारः स्वचरितं कथयामास, क्रुद्धानां सैन्यानामन्धत्वकारणं तु न जानामीत्यप्यवोचत्। अथ राजा, मन्त्री, श्रेष्ठी च त्रयोऽप्येते प्रमोदेन स्वस्वकन्यायाः पाणिग्रहणमहोत्सवं चक्रुः। श्लोकप्राप्तित्वाद् वन्धुताप्रीतिमान् सुबन्धुस्तदवृत्तान्तश्रवणादागत्य कुमारायानन्दं ददौ। हे राजन्! कुमारस्य कृपया ममाधुना धनं मिलितम्, इति कथयित्वा स राजानं विशेषेण तुतोष। अथापराह्णसमये कुमारेण सह प्रीतिवार्त्तालापं कुर्वन्तं राजानं समेत्य वनपालोऽब्रवीत्, हे स्वामिन्! अद्य चतुरजनसमूहे गजराज इव कोऽपि चारणो मुनिराकाशादवतीर्य साम्प्रतं वने कायोत्सर्गमकार्षीत्। इत्थं वनपालस्य वचनं श्रुत्वा तं सत्कृत्य राजा कुमाररतिसारेण सह मुनेर्दर्शनोत्कण्ठया वनं ययौ। अथ प्रणमतो राजादीन् भव्यान् सत्कुर्वन् ज्ञानत्रयरूपः स मुनिः कायोत्सर्गमपि तत्याज। ततः स मुनिः संसाररूपवनतापं दूरकरणोचितां मुक्तिरूपनगर्या द्वारदेशसदृशीं धर्मदेशनां (धर्मोप-

मायिनेक्षिताऽभूत् ? क्व च तव शत्रुपक्षी भवामि ? अहं तव चरणकमलस्य भ्रमरोऽस्मि । यद्भवताऽऽज्ञा दत्ता यत् "मम मही त्यज्यताम्" इति, तदहं स्वीकरोमि, यतः पित्राज्ञोल्लङ्घनं पापं वदन्ति विद्वांसः । एवं कथयित्वा महाबलवान् स दूरदेशगमनं विचार्य राजसभाया उत्तस्थौ । दयायाः प्राणस्वरूपः पररक्षकः योऽस्माकं हृदयाधारः स कुमारः क्व गच्छति ?; य शत्रुभिः पराभूतानस्मान् मातेव पितेव च रक्षति, स जगतामाधारः कुमारः क्व गच्छति !, यः सम्पूर्णसंसारं स्वकुटुम्बमिव जानाति स पवित्रचरित्रवान् कुमारः क्व गच्छति ! यथा प्राणैः शरीरं शोभते, तथा येनैकेनैव नगरं शोभते स कुमारः सर्वानस्मांस्त्यक्त्वा क्व गच्छति ! इत्थं क्रन्दनं कुर्वद्भिः पुरनिवासिभिः पुनः पुनर्दृष्टः स कुमारो नगरान्निर्जगाम । प्राणतुल्ये गुणवति कुमारे नगरान्निर्गते सति नगरवासिनो महत्क्रन्दनं चक्रुः । सहगंतुकामेऽपि नगरवासिनि राज्ञो भयात्स्थिते सति महासत्त्वास्ते चत्वारः कलाभारादयो मित्राणि तमनुजग्मुरेव । अथ सूर्य इव स राजकुमारो यं यं देशमगमत्, स स देशोऽधिकं शुशुभे, यं यं देशं स त्यक्तवान् स स देशश्च शोभाहीनोऽभवत् । एवं प्रकारेण स राजकुमारः पञ्चभिर्दिनैः कश्चिद्वनप्रदेशं विलंघ्य कचिद्-ग्रामे गतः, तत्र च सरस्तीरे वृक्षस्याधः प्रदेशेऽतिष्ठत् । तत्र शीघ्रगमनकर्त्तारौ क्षत्रियवणिक्पुत्रौ शूर–वीरनामानौ ग्रामं गत्वा निष्पन्नं गृहीत्वा समागच्छताम् । पुनस्तु मन्त्रिवैद्यसुतौ कलासार–जयनामानौ शीघ्रं विश्वसेनं देवपूजाक्रियां कारयाञ्चक्रतुः । अथ स कुमारोऽतिथिलाभाय प्रतिदिशं पश्यन् मासोपवासिनं मुनिमद्राक्षीत् । अहो ! भाग्यवतां मनोरथाः सततं फलदा भवन्ति ॥ ततः स्वभावेन चतुरः स कुमारो विश्वसेनः पारणाकरणाय मुनावन्नं दातुमनाः स्वचतुःसहायकान् सुहृदः पप्रच्छ । ततः क्षुधापीडितैर्वणिग्वैद्यमन्त्रिपुत्रैः, मित्रस्य दाक्षिण्यात् तथा कपटयुतभावनाया हेतो "र्दीयता" मित्युक्तम् । परन्तु शूरः प्रसन्नः

भूत्वाऽब्रवीत्। हे कुमार! श्येनपक्षी यथा पक्षिणो हन्ति तथा शीघ्रं पतत्पक्षसैन्येन येन कपटपूर्वकं स्वीया देशा हताः, तथा गुप्तपुरुषनियुक्तेन विषदानेन यः सदा जयलक्ष्म्याः क्रीडापर्वतानिवास्माकं गजान् हन्ति, समस्तभुवनेऽस्माकं यस्मादन्यः शत्रुर्नास्ति, स एष विक्रमसेननामा ताम्रलिप्तीनगरपतिर्वीरसेनेन सेनापतिना कपटपूर्वकं धृतो महापराधी राज्ञा हन्तुं क्षेपितः। इत्थं तस्य वचनं श्रुत्वा क्रोधयुत इवाकृष्टं खड्गं प्रनर्त्तयन्, यमस्य कटाक्षवत्स्वभ्रुकुटिं दर्शयन्, हन्त! अपराधिनममुं स्वयं कुमारो हन्ता" इति वदति जनसमूहे परितः स्थिते, "मम मृत्युरागच्छति" इति चिन्तयतस्ताम्रलिप्तीनरेशस्योपरि सरभसमागत्य कृपापूर्णां दृष्टिं ददन् सरोमाञ्चशरीरो जगति सर्वलबन्धुरसौ कुमारो बन्धनं चिच्छेद। मनसामपि मनांसीव (अतितरला) येऽश्वा आसन्, तैरश्वैर्विश्वसेनेन प्रेषितः स ताम्रलिप्तीपतिः शीघ्रं ययौ। अथ तद्वृत्तान्तमाकर्ण्य कुपितो विच्छायमुखो राजा सिंह इव गर्जन् राजकुमारं प्रति जगाद। एकेन येन हतेन बहूनां देहिनां यदि सुखं भवेत् तदा स कृपातिशयेच्छया शुद्धबुद्धिमतां वध्यः स्यात्। रे पापिन्! शत्रुं मुञ्चता त्वया यद्देशो विनाशितः, तदियं तव कृपा कूपे निपत्य कथं न नष्टा जाता?। रे निर्विवेक! स्वदेशनाशके शत्रौ भूरिदयां कुर्वंस्त्वमपि मम शत्रुरेवासि, अतो मम राज्ये न त्वया स्थातव्यम्। एवं नरपतेर्वचनं श्रुत्वा स कुमारो, विदुषामपि दुर्वचं वचनमुवाच, कः श्वसन् लसन् ग्रसन् सहस्रशो जन्तून्न हन्ति? तत्कस्यैकस्य वधः प्रभूतप्राणिहिताय न भवति?। एवं सति बुद्धिमद्भिः कृपालुभिर्बहूनां प्रसन्नतार्थं को हन्तव्यः? कुत्र च दया कर्त्तव्या?। तत्, हे नाथ! मन्येऽहं सर्वथा सर्वविधजीवे शत्रौ मित्रे च विषमां दशां प्राप्तेऽवश्यं कृपा विधेया। हन्त! ये शत्रुं क्षमन्त एव, तेऽपि मोक्षगामिनः, ये तु शत्रावुपकारं कुर्वन्ति तेषां गतिं को जानाति? (कोऽपि नेत्यर्थः)। तत्! हे तात! शत्रुं मुञ्चतो मम का ना-

सोऽग्निस्तं राजकुमारं यथेष्टं संकटयामास । अयं राजकुमारो यत्र यत्र जगाम तत्र तत्र तस्य मित्राणि तं राजकुमारमनुजग्मुः । स्वसहितचतुर्मित्रयुतः स राजकुमारस्तापव्यथायां सम्भ्राम्यन्नत्यन्तव्यथायुताया वनलक्ष्म्या इन्द्रियसमूह इव शुशुभे । वस्त्रान्तं केशान्तं च ज्वालारूपाग्रहस्तेन गृह्णन् सोऽग्निस्त्रसद्भिस्तैर्विश्वसेनकुमारादिभिर्वारंवारं चपेटयाऽऽच्छोटितः । सर्वेष्वगम्येषु प्रदेशेष्वेकप्रदेशगतांस्तान्विश्वसेनकुमारादिजनान् स वह्निर्मनुष्यमांसास्वादलोभीव ज्वालारूपजिह्वयाऽलिहत । तस्मिन् समये समन्ततो ज्वालाभयचकितैः संकुचद्भिस्तेषां शरीरैः शरीरेषु प्रवेष्टुमिवोपचक्रमे । अथाग्निना दिग्भिः सह जीवनाशायां रुद्धायां समयेऽत्र राजकुमारो मित्राण्यवोचत् । भो मित्राणि ! सम्प्रत्यहं पवनेनेव मम शरीरं आकाशं मत्याकर्पयामि, तद्यूयं मामालिङ्गत । मृत्युसमयेऽस्माकं विरहो माऽस्तु । अथ वीरजयौ राजकुमारस्य चरणयोर्दृढं लग्नौ बभूवतुः, कलासारशूरौ तु हस्तयोर्लग्नौ बभूवतुः । अथ वायुवेगेन हृता इव दावानलज्वालाभिर्मुक्ता इव चमत्कृतास्ते सर्वे गगनमगमन् । ततस्ते पुरुषोत्तमा यथा मुनयः संसारं पश्यन्ति तथा वनवासिजीवान् भस्मसात्कुर्वन्तमग्निमपश्यन् ॥

अथ ते सुहृदः विस्मिताः सन्तः स्वप्नोत्थितमिवात्मानं वह्निरहितभूमौ स्थितं ददृशुः । इदं किम् ? इति यावत् स्वान्ते ते विचारयन्ति तावद्देदीप्यमानः कोऽपि देवः प्रादुरभूत् । अथ कमलसदृशमुखान्निगच्छद्राजहंसस्वरः स देवो राजकुमारमुवाच, हे दयावन राजपुत्र ! यं चौरं शिक्षयित्वा त्वममुचः सोऽहं सद्धर्मकार्यकरणादीदृशीं समृद्धिमलभम् । तस्माद्धेतोर्ज्ञानेन साम्प्रतं त्वां विपत्तिगतं मत्वा समागतोऽस्मि । यतः प्राणदानेन क्रीतानां जनानामयं समयः । एवमुक्त्वा स देवः समित्रस्य राजकुमारस्य शरीरं स्वहस्तस्पर्शात् तापरहितं श्रमरहितं च चकार । अद्यप्रभृति तव दुःखस्य लवोऽपि न भविष्यतीत्युक्त्वा स देवः

सन्नुवाच, अहं त्वित्थं मन्ये यदस्मिन्समये भाग्यरहितैः पुरुषैरीदृशं पात्रं न दृष्टमिति शीघ्रं दीयताम् । अथोत्थाय राजकुमारेण प्रार्थितः स चतुरो मुनिरन्नं निर्दुष्टं जानन्स्वीकर्त्तुमुद्यतोऽभवत् । तत आनन्दरूपसमुद्रस्य कल्लोलैरश्रुबिन्दुयुक्तनेत्रः स उदारमनाः कुमारस्तस्मै मुनीश्वरायान्नं दातुं समारेभे । अथ भोज्यार्धमात्रे दत्ते शूरः किञ्चित्सङ्कुचितो भूत्वाऽब्रवीत्, हे राजकुमार ! क्षुधापीडितेषु त्वमेकः कृपाकरो, नान्यः कोऽपि ! । इत्थं शूरस्याभिप्रायं ज्ञात्वा मुनिना निषिद्धोऽपि राजकुमारः पुरुषाहारप्रमाणमन्नं हर्षेण ददौ । अनन्तरं राजकुमारो ज्वलतो मुनिराजस्य पृष्ठभागं विकटदद्रुसमूहैश्छिक्तिमपश्यत् । अथ मित्रैः सह कृतभोजनः स राजकुमारो वैद्यपुत्रं जयमुत्साहयन् मुनिराजस्य चिकित्सां कर्तुमत्यन्तमुत्सुकोऽभवत् । अथ विश्वसेनकलासारौ मुनेः शुश्रूषां चक्रतुः, जयस्तु शूर-चीरानीतान् महौषधीनसज्जयत् । अनया रीत्या मुनौ रोगमुक्ते संप्राप्तकान्तौ हर्षविश्रान्ते च जातेऽमी सर्वे रात्र्यन्तेऽचलन् । रक्षणकार्ये निपुणेषु मित्रेषु मध्यगः स राजकुमारो रात्रौ वने क्वापि सुष्वाप । अथ रात्र्यास्तृतीयप्रहरे यामिके (चोकीदार) जये प्रमादात् सुप्ते सति दैवाद्वने दावानलोऽज्वलत् । अत्रान्तरे प्रमादात् सुप्तस्तत्त्वज्ञानी स राजकुमारो जनानां शोकशब्दैरिव त्रुटद्वंशशब्दैः शीघ्रं निद्रां तत्याज । उत्थितश्चायं राजकुमारो यावत् पश्यति तावत् स दावानलो योजनप्रमाणविस्तृतं भोजनरूपं वनं प्राप्य नृत्यतीव ! । अथ यावन्मित्राण्युत्थाप्य राजकुमारः पलायते तावद्दावानलो द्वारनिरोधं चकार (अर्थात् पलायनमार्गो निरुद्धः) । संसारान्मिथ्यादृष्टिरिव दावानलान्निर्जिगमिषुः किन्तु निर्गन्तुमसमर्थः स राजकुमारः सम्भ्रान्तोऽभवत् । यथा मोहो दुराग्रहैर्भव्यप्राणिनमान्धयति तथा विपत्सदृशा अनेका ज्वालाः क्षिपन् स दावानलो धूमै राजकुमारमान्धयत् । यथा नद्याः पूरो द्वीपवासिनं जनं संकटयति तथा परितो मिलन्

कुमारः कारणान्तरमवोचत् ॥

अथ त्वरामरेणात्यन्तफेनवन्मुखीषु हेषया मनांसि हसन्तीष्विव सेनासु समागतासु दृढभक्तिमान् स राजा श्रेष्ठाश्वमारुढं
समित्रसमूहं कुमारं स्वनगरं निनाय। अथ लक्षणानां गणेनेव पाणिचरणाग्रलग्नेन प्रकटभक्तिना तेन ताम्रलिप्तिपतिना स
राजकुमारो बलाद्राज्येऽभिषिक्तः। ततः स राजा प्रीत्या कुमारस्याग्रे स्वयं दण्डवद् भूत्वा स्वसेवकान् कुमारस्य चरणद्वयं नम-
स्कारयति स्म। एवं तेन भूपतिना सेवितचरणकमलः स राजकुमारो विश्वसेनः स्वप्रतापैश्चिरं ताम्रलिप्तीं पर्यपालयत्। इत्थं
विश्वसेनकुमारस्याशेषवृत्तान्तं गुप्तचरेभ्यः श्रुत्वा स सुमित्रो भूपः पुत्रस्य पुण्यपात्रत्वनिश्चयेन भृशं तुतोष। अथ योगसा-
धनबुद्ध्या वनं गमिष्यता पित्रा देवराजतुल्यप्रतापः स आहूय राजा कृतः। केवलं पुण्यकार्ये विहितोद्यमः स विश्वसेनो
दृढविश्वासभूमिभिर्मित्रैः सह चिरं राज्यमकरोत्। ततस्ते पञ्चापि सम्पूर्णं पृथिवीभोगं भुक्त्वाऽऽनते सुरलोके जग्मुः, तत्रापि
न ते मैत्र्यपात्राण्यभवन्। क्रमशश्चैते समस्तं स्वर्गलोकसुखामृतं पीत्वा पश्चात् संमेलनबुद्ध्येव पृथिवीतलमागच्छन्। हे रतिसार!
विश्वसेनस्य स जीवो भवानभूत्, क्षत्रियपुत्रस्य जीवः सुबन्धुरभूत्। पुनर्जय-वीर-कलासाराणां जीवाः क्रमशः सौभा-
ग्यमञ्जरी-प्रियंवदा-सुतारानाम्न्यः कन्या अभूवन्। तेन हेतुना श्रेष्ठगुणवतां युष्माकं पञ्चानामपि पूर्वजन्मसम्भवा प्रीतिरियं
जयति। तदा जयादयो यन्मुनये दानेऽनुमतिं मायया ददुस्ततो भोग्यस्य साम्येऽपि तेषां स्त्रीत्वमिदमभूत्। तेषां जयादीनां
त्रयाणां हृदयमजानन्नाहारस्यान्तरायेणान्नदानकर्त्ता त्वं दिनत्रयं दुःखभागभूः। तदा क्षुनीशायार्धाहारे दत्ते यत्त्वाग्रे "हे
कुमार! क्षुधापीडितेषु त्वमेकः कृपाकरो नान्य" इति स्तुतिवचोरचनया स्वं क्षुधापीडित विज्ञापयन् क्षत्रियकुमारो बह्वन्न-

स्वप्रकाशैराकाशं द्योतयन्नन्तर्दधे। ततोऽरुणोदये जाते तस्य देवस्य चरित्रेण दयान्वितास्तेऽपि कुमाराद्यो वनमन्तं कर्त्तुं चेलुः। पूर्णसूर्योदये जाते च कारुण्येन ते कुमारादयस्तद्वनमध्ये समापतत्क्रोडानां व्याकुलं कुलं ददृशुः। अथ युद्धार्थं धावता, मुहुर्मुहुर्यूथं पश्यता नश्यता च केनचित् पुष्टेन क्रोडपतिना परिश्रान्तमश्चितकार्मुकं प्रचण्डाश्वरोहिणं मुकुटवन्तं कश्चिन्नरं विलोक्य कुमारो विश्वसेन उच्चस्वरेणावोचत्, हे महाभाग! त्वं कस्यचित् पृथिवीभागस्य स्वाम्यसि, हे मित्र! तव शरीरलक्ष्याणि चिह्नानीदं वदन्ति। हे मित्र! ये मुखे तृणं धारयन्ति ते शत्रवोऽपि राज्ञामवध्याः, अतो हे नरश्रेष्ठ! मुखे तृणं धारयतो निरपराधिनो जन्तून् कथं हंसि?। शरीरपरिष्काररहिताः वनवासिनः पशवो सदाचारा मुनिराजा इव विचारवता जनेन कदापि न विद्रावणीयाः। प्राणी पूर्वहन्तृञ्जनान् हन्ति तथाऽग्रे तैर्हन्यते, अतो वध्यरक्षया दक्षो जनः स्वयं वैरभावेन रहितो भवति। अयमात्मा निश्चयं प्रतिकुलं कां योनीं न जगाम? अतः सर्वस्यापि सर्वोऽपि बन्धुः कस्य को वध्यः स्यात्! हे राजेन्द्र! इत्थं क्षत्रियत्वधर्मत्वनीतिसज्जनतोत्पन्नया दययाऽयं पशू रक्ष्यो रक्ष्यः!। एवमुक्तवति विश्वसेने स पुरुषोऽश्वादवतीर्य कुमारस्य चरणारविन्दयोर्लुठन्नब्रवीत्, हे दयालो! नित्यक्षमावति त्वयि जीवनाशकारकस्य त्वद्भृत्यस्यापि मम "क्षम्यता" मितिवाणी न शोभते। अथवा भवतो दर्शनेनैव दूरीभूतसकलापराधोऽहं न क्षमां याचे, यतो रोगरहितानामौषधैः किम्?। हे राजकुमार! तस्मिन् समये राजद्वारे बद्धस्य मम प्राणदानेन त्वया पितृवदाचरितम्। हे स्वामिन्! अतो भवाँस्ताम्रलिप्त्यां पुरि राज्यमङ्गीकरोतु!। यतोऽत्र पितृतुल्ये भवति स्थिते ममैश्वर्य्यं न युक्तम्। अथ विश्वसेनोऽमुं ताम्रलिप्तिपतिं जानन्नतितरां प्रसन्नमनास्तमुत्थाप्य गाढमालिलिङ्ग। अथ स्वीयपरिवारत्यागस्य कारणं पृच्छन्तं पुरुषं स राज-

निनासु विद्यासु गुरुभिः कारितपरिश्रमोऽहं तस्य भूभर्तुः पुत्र "अनन्तयशा" इति नामाऽभुवम्। प्रसन्नो वचनैः सुधावर्षकः संसारादिरक्तो राजा कदापि षोडशवर्षीयं मां समीपे समुपवेशयित्वोवाच। संसाररूपवने राज्यं चतुष्पथम्, इह वने भ्रमन्नयं जीवः पिशाचीतुल्याभिः श्रीभिः कृतस्खलितः प्रपात्यते। मणयो मोहरूपनृपस्य तेजस्विदीपतां वहन्ति, यल्लोभलोलुभा जनाः के शलभा इव नाधः पतन्ति ?। ज्ञानरूपबोहित्थवाहिताः संसारसागरं तितीर्षवो जना मध्यभूधरानिव गजान् दूरतस्त्यजन्ति। संसाररूपवनहरिणानां चपलानां मोहलक्ष्मीकटाक्षविलासानां तुरगाणां मत्यक्षे विद्वान् कदापि न चरेत्। मोहरूपनृपस्य सभामण्डपसदृशं छायाव्याजात्तस्य तले सेवकतुल्यैः पातकैर्व्याप्तं विवेकरूपसूर्यस्य प्रकाशाच्छादकं छत्रं तादृशजडताचकितः कोऽपि विद्वान्न सेवते। संसारसागरेऽगाधवर्त्तीनि रत्नानि स्त्रीरूपाणि शोभन्ते, यद्धस्तग्रहणाग्रही पुरुषः पश्चादुपरिगन्तुमशक्तो मज्जति। ईदृशं सांसारिकविषयं त्यक्तुमशक्तः सकलो विद्वान् शीतभीतोऽग्निमिवासक्त एव सेवेत। तदिदानीमहमस्मान्मोहान्निर्गन्तुमुद्यतोऽस्मि, यतोऽस्माकं वंशे नृपाणां राज्यश्रमः पुत्रस्य युवावस्थां यावदेव भवति। हे वत्स! तन्मामिव पिता, त्वामधुनाऽस्मिन् स्वस्थाने निवेश्य मोहरूपवीरस्य कारागृहादिव संसारान्निर्गच्छामि। इत्युक्त्वा बलान्मे राज्याभिषेकं कृत्वा राजा तपोलक्ष्मीयौवनं विपिनं प्रजगाम। राजाज्ञया राज्यं परिपालयतो मप्यापि प्राणेभ्योऽपि प्रिया रत्नावलीनाम्नी राज्ञी बभूव। तां संसारबन्धनकारणरूपां जानन्नप्यहं पङ्कमग्नं गजमिव तदायत्तं मन आक्रष्टुं न समर्थोऽभूवम्। तस्यां रत्नावल्यां प्रेमरूपवज्रलेपेन मम मनस्तथाऽऽसक्तमभूद्यथा राज्यलक्ष्मीधुरीणैर्गजैरपि नाकर्षितमभूत्। अरे! तस्यां राज्यामासक्तं कामदेवरूपपिशाचेन गृहीतं मम मनो मन्त्रविद्भिर्मन्त्रिभिरपि न दूरीकृतम्। तस्यामेवासक्तमनसो मम राज्यलक्ष्मीरीर्ष्ययाऽन्यहस्तं गच्छन्ती दृढ-

दानस्य निषेधमकरोत् तेन हृदये महाविषादं ददती सुबन्ध्वोर्लक्ष्मीः पक्षिणो मुखात्फलवदर्धमुक्तैव च्युताभूत्। यद्भवन्तः संसारनाशस्य क्रमस्य प्रथमसाधकं मुनेरङ्गं रोगरहितं चक्रुस्तेन भवतामीदृशी रूपसमृद्धिर्जाता। पुरा यत्त्वं दुष्टानप्यदुष्टया दृष्ट्याऽपश्यः, यत्त्वं बहूञ्जन्तूनपालयस्तेन त्वां प्रति साम्प्रतं कोऽपि विरोधं न करोति, ये च विरोधं कुर्वन्ति ते संग्रामेऽन्धतां दधते। पुण्यं प्राणिनां कानि विस्मयकराणि सुखानि न ददाति? यत्पुण्यं प्राप्य देवा अपि विस्मयभूमयो भवन्ति। एवं पूर्वजन्म श्रुत्वा रतिसारे परमानन्दमाप्ते भक्तिनमन्छिरा भूपो मुनिराजमपृच्छत्, हे भगवन्! तव लक्षणानि पृथिवीरक्षाक्षमाणि दृश्यन्ते, अद्यापि भवान् युवेव शोभते। ततो मृगाक्षीणां दयाया योग्येऽत्र वयसि राज्यमपि त्यक्त्वा भवताऽऽत्मा कथं तपः क्रियायै समर्पितः! अथ राज्ञो वचनं श्रुत्वा स मुनिराजोऽब्रवीत्। युवावस्था वृद्धावस्था वाऽस्तु परन्तु तपसः समयः को निश्चितः? यतो यत्र तत्र वा प्राणिनां मृत्युरवश्यंभावी। हे राजन्! वृद्धावस्थायां शक्तिः क? शक्तिं विना च तपः क? एवं वृद्धावस्थायां परिव्रजज्जनो ज्ञानं मोहत्वं नयति। यो जनः शक्तिसाध्यानि कार्याणि वृद्धावस्थायां प्रारभते तस्य बुद्धिः श्वेतकेशव्याजाज्जरया प्रहस्यते। मृत्योश्चामरधारिण्या श्वेतकेशरूपचामरैः शोभमानया वृद्धावस्थयाऽऽलिङ्गितस्य कस्य नाम जनस्य धर्मबुद्धिः फलदा भवतु?। पुनर्मोहरूपोन्मत्तहस्तिबन्धनवृक्षः कुकर्मश्रेणिपूर्ण एष कस्य तरुणिमा (युवावस्था) मदोन्मत्तो न स्यात्?। सिंह इव मम विवेको येन मार्गेणागत्यामुं युवावस्थारूपगजं क्रीडापदं करोति तदपूर्वं विज्ञाप्यते तच्छृणु। श्रीसूर्यपुरं नामनगरमस्ति, यत्रास्तिको जनो धर्मरूपराज्ञः क्रीडाकल्पवृक्षवनस्य शोभां धारयति। तत्र नगरे महेन्द्रनामा राजाऽभूत्, योऽन्तर्बहिः शत्रुजयशीलं शास्त्रं शस्त्रं च धारयति स्म। वंशो-

वन्धस्तु दुस्तरः । हा धिक् ! यतोऽस्याः सिंजानमञ्जीरगतचित्तस्य मम हंसस्येवोर्ध्वगतिसमर्थौ निर्मलौ मातापितरौ पक्षरूपौ निस्मृतौ । इत्यादिविचारयति स्वयमेव स्वं निन्दति मयि प्रातःकाले स्तुतिपाठकाश्चारणा वहिरुच्चस्वरेण गानमकुर्वन् । हे राजेन्द्र ! शीघ्रं निद्रां त्यज, असौ जागरणस्य समयो विद्यते, मोहं हन्तुं सद्गुरुरिवान्धकारं हन्तुं सूर्योदयोऽभूत् । अथाहमेतादृशीं कर्णगतां वन्दिनां वाणीं मुक्तिसूचिनीं स्वप्नेन प्राप्तां जानन् परमानन्दमविन्दम् । अस्मिन् समये जाग्रती सा राज्ञी प्रथमोत्थितं मां पुरो विलोक्य लज्जया नम्रमुखी सती किञ्चिच्चाटु वचनं नावोचत् । अगाधज्ञानसागरस्य सन्मुखस्थितप्रज्ञानेत्रेण मयापि सा राज्ञी परिहासवचनेन नोक्ता । अथ मनोहरदन्तकान्तिः प्रतीहारी समीपमागत्य मां च मुदा प्रणिपत्योवाच । हे देव ! मतिसागरनामा मन्त्र्येवं निवेदयति, सेवका भवतां दर्शनार्थमुत्कण्ठिताः सन्ति । इत्थं प्रतीहार्य्या वचनं श्रुत्वा कृतप्रातःकालीनकृत्योऽहं सेवकजनैः सेवितां सभाभूमिं समागतः । ततोऽहं प्रणामं कुर्वतः सर्वान् भूपतीनवलोकयन् कस्यापि हस्ते कमलं दृष्ट्वा कमलमुखीं तां राज्ञीमस्मरम् । तत्समये विदुषां कवीनां सुधासदृशवचनरचनासु राज्ञीविरहानलतप्तं मम मनो न रेमे । उत्कण्ठितोऽहं यावदन्तःपुरं प्रति नेत्रं क्षिपामि तावन्मनोज्ञशरीरं देदीप्यमानकान्तिं दृढवन्धनपरिधापितधौतवस्त्रं कटिभागे वद्धदृढोत्तरीयवस्त्रं स्कन्धालम्बितखड्गं वक्षःस्थलवद्धखड्गधेनुकं दक्षिणहस्ते ताम्बूलपात्रं धारयन्तं वामहस्ते तु तया राज्या कृतहस्तावलम्बनं धैर्ययुतनेत्रेण मां सतिरस्कारं पश्यन्तं द्रुतैश्चरणैर्गच्छन्तं कञ्चन पुरुषमपश्यम् । एष कः? इमां क नयति? इति क्रोधेन रक्तनयनं मां हसन्ती सा तं पुरुषं स्थिरीकृत्योचे । महापापी त्वं मां बहुकालपर्यन्तं वन्दीचकर्थ, साम्प्रतमहं तव हृदये चरणं न्यस्य गच्छामि । एवं तस्या वचनेन क्रोधपरीताक्षोऽहं स्वभटानवोचम्, अयं गृह्यतां गृह्यताम् ? अयं वध्यो

मन्त्रिणां लज्जयाऽतिष्ठन् । सन्मानसेविन्या तया रत्नावल्या नित्याश्रिते मम चित्ते स्त्रीस्पर्शभयेनेव धर्मगुरवोऽपि नाविशन् । इत्थमनन्यमनास्तस्यां न्यस्तनेत्रोऽहमात्मानं धन्यं मन्यमानो मोक्षपदमपि कामदेवस्य पर्वामन्यम् ।

अथैकस्मिन् दिवसे कामविलासानन्दरसनिद्राया अधीनोऽहं स्वप्ने स्वं मुक्तागिरिशिखरे चरन्तमपश्यम् । तस्यां रात्र्यामुन्निद्रनिद्रायां तदा त्यक्तनिद्रोऽहं चिन्तापरवशेन हृदयेनाचिन्तयम्। अयं स्वप्नः सर्वोत्तमस्तावन्मुक्ताफलप्राप्तिं सूचयति किन्तु स्त्रीवशंगतहृदयस्य मम तत्प्राप्तिसम्भावना क्व ?। तस्या रत्नावल्याः कान्तिस्तिरस्कृतसुवर्णा, गतिस्तृणीकृतमत्तगजा, नेत्रविलासाः सेवकीकृताश्वाः, नखाः मणिविजयशीलाः, मुखवायुः सेवकीकृतकर्पूरकस्तूरीसुगन्धिः, दन्तकान्तिश्च धूलिकणीभूतधवलपट्टवस्त्रा शोभते । तया राज्यैकयोचितं मम मनो राज्यभोगे शिथिलीकृतम्, तस्या भोगं शिथिलीकर्त्तुं साम्प्रतं मम क उपायो भवतु ?। अस्या रत्नावल्या मस्तकस्थकेशाः किं महाश्यामतां न धारयन्तु ? हृदयस्थितैर्यैः केशैर्मम निर्मलं ज्ञानं मलिनीकृतम्। अस्या मुखं किं चन्द्रो न ? यस्य प्रभावेण मीलितं कमलमिव मम विवेकं दृष्ट्वा स्वच्छैर्गुणैर्गतम्। नित्यं विकसिता नीलकमलसदृश्योऽस्या दृशो मयि तत्त्वज्ञानसूर्यमस्तंगत कथयन्ति। अस्या रत्नावल्या अधरः सुधावन्मधुरः, यदधीनोऽत्यन्तं प्रमत्तं मम मनो विद्वांसो वेगेन दूरतोऽत्यजन्। अस्या रत्नावल्याः शङ्खवन्मनोहरनादवान् कण्ठो मम सकलानां कार्याणां गमनायैव रचितोऽस्ति । अस्याः कोमलहस्तमृणालरूपपाशेन बद्धं निजं मनोऽहं त्याजयितुं न समर्थोऽतो निर्वलजनाग्रणीं मां धिक् । अहो ! संसाररूपवनमहं लीलयैव विलङ्घे, तस्मिन् वने स्थिताया अस्या राज्ञ्याः संयतकेशदण्डस्तु मम हृदयेनाप्यलङ्घनीयः । असौ संसारसागरः सर्वतोऽपि सुतरां सुतरः, परन्त्वस्मिन् संसारसमुद्रेऽस्या नाभिरूपागाधोर्मि-

क्रियां कर्त्तुमशक्तस्य पङ्गुस्यापि हृदयं भिन्नं भवति ॥

सामर्थ्यवन्तमप्यसमर्थैः पुरुषैर्बद्धं गजं यथा विन्ध्याटवी त्यजति तथा परकृतापमानसहं पुरुषं मानापि दूरतस्त्यजति। अतः खड्गरूपनौकयास्यापमानसमुद्रस्य पारं गत्वा पश्चात् संसारसागरं पारं कर्त्तुं नौसदृशं व्रतं समाश्रयिष्ये। यद्यपमानेऽपि व्रतं गृह्णे तदा मम प्रमाणान्मम पूर्वेषामपि व्रते सम्भावनैषा भविष्यति। इत्थमुद्धतविचारमग्नचित्ते मयि युद्धविचारं कुर्वति सति मम मन्त्री सकलसैन्यसामग्रीसहितः समागमत्। ततोऽनन्तरमकटदूतैः प्रादुर्भूताद्भुतशत्रुमावयोर्मम तस्य च सेनाभिः संग्रामः प्रारम्भोऽभूत्॥

ततः स्वशरीरविनाशभयरहितो रथो रथं गजो गजमश्वोऽश्वं वीरो वीरं परस्परं युद्धार्थं सम्मिलितोऽभूत्। तत्र भयङ्करे समरे समारब्धे धनूंषि नम्रान्यभूवन्, खड्गदण्डाः कम्पिता बभूवुः परन्तु पराक्रमशालिनां वीराणां कम्पो नाभूत्। सकलस्यापि शरीरस्य मुष्टिप्रविष्टया शक्त्या स्वस्वायुधं दृढयन्तो वीराः शत्रून् प्राहरन्। तादृशयुद्धलक्ष्म्या स्वं धन्यं मन्यमानो वीरः क्रोधवशंगतः प्रहारे जाते रोमाञ्चितं शरीरं दधौ। ततो नष्टाश्वसमूहः पतद्गजसमूहस्त्रुटद्रथसन्धानबन्धो नृत्यत्कबन्धश्रन्दनेऽरुधिरनदीसमूहः पक्षद्वयनाशकरो रणोऽत्र ऐधिष्ट। क्रमशो भ्राजिष्णुतेजस्विभिः शत्रुभिर्ग्रीष्मदिने रात्रय इव मम सेनाः कर्शयामासिरे। अथ राजारोहणोचितं श्रेष्ठाश्वमारुह्य निर्भयः क्रुद्धश्चाहं तुमुलयुद्धोत्कण्ठितस्तेन सहामिलम्। मयि बाणसमूहं त्यजति युद्धनिपुणेन तेन स्वबाणैरात्मा गजेन्द्र आत्मीयवर्गश्च रक्षितः। सूर्यो यथा स्वकिरणैर्नक्षत्राणि नाशयति तथा स स्वबाणैर्मम सकलं सैन्यं क्षणेनैव ननाश। अहं यद्यदस्त्रमत्यजं ततच्चतुरः स एक एव तथा चिच्छेद यथा ज्ञानी

वध्यः ! । ततो वायुसदृशवेगेन प्रगच्छच्चरणः स तया राज्ञ्या सहैव शीघ्रमन्तःपुरान्निर्ययौ । अयं गच्छत्ययं गच्छतीति प्रध्वानैरनुगच्छतामग्रे स्थिता अपि पुरवासिनस्तं धर्त्तु न शेकुः । मुखोद्गतफेनयुक्तया प्रधावदश्वानां सेनया सह मन इन्द्रियसमूहमिवाहं प्रधावंस्तं पुरुषमनुससार । तदन्वेषणतत्परो नगर्याः पर्यन्तं पर्यटनहं पुरः सुवर्णभूषणशोभमानां काञ्चित् सेनामपश्यम् । तस्याः सेनाया मध्ये श्रेष्ठगजपृष्ठारूढस्य कस्यचित् पुरुषस्य हस्ते स तां न्यवीविशत्, साऽपि तां स्ववामभागे न्यवीविशत् । सा च मां वचनात् सुदूरस्थं दृष्ट्वा स्त्रीचरित्रनिपुणा तस्य शरीरमालिङ्ग्य वामहस्ताङ्गुष्ठमनर्तयत् । तदवलोक्य विलक्षोऽहं चेतस्यचिन्तयम्, अहो ! स्त्रीजनो मोहप्रभावाणां महासागरः ! स्त्रियो मदिराया अपि गुणश्रेष्ठा लोकद्वयनाशिन्यश्च, या दृष्टिमात्रेणैव जनं स्वायत्तं कुर्वन्ति । परापकारकरणे गर्ववद्धिषं किं स्त्रियः सन्ति ? यत्सेवनोत्पन्नस्तापः परलोकेऽपि न शाम्यति । कवयो यल्लक्षणाशक्तिवैपरीत्येन विषशरीरवत्यां स्त्रियां चन्द्राधैरौपम्यं ( साम्यं ) ददुस्तन्मन्दबुद्धयो जना यथार्थतो न विदुः । स्त्रियो हि विश्वासघातिनां शिरोमणिरिति जानामि, याः स्त्रियः पुरुषं प्रेम्णा स्वाधीनं कृत्वा ततो नरकसमुद्रे पातयन्ति । " इमा अबला " इति बुद्ध्या स्त्रीभिर्हस्तसंयोगो न कर्त्तव्यः, या हि पुरुषाणां प्राणान् हरन्ति तथा संशये पातयन्ति । इयं हि रक्तस्य सूर्यस्य पश्चिमदिगिवानुरक्तस्य मम मानहानिं ददौ परतस्तु कां गतिं दास्यतीति को नाम जनो वेत्ति ? अन्धकारमित्रत्वेन सूर्येण निस्पृहमुलूकनेत्रमिवास्या आधीनत्वेन मोक्षप्राप्तौ निःस्पृहं मां धिक् ॥

परन्त्वनेन वैराग्येण साम्प्रतमेतद्वैरं न त्यजामि, यतो ह्यपमानतो मनस्विनां वंशस्यापि कलङ्को जायते । अपमानेऽप्युद्योगरहितः पुरुषः पङ्कादप्यधमः, यः पङ्को हृदये पदं दत्ते सति शीघ्रमूर्ध्वं गिलति । स्वरससर्वस्वं गृह्णन्तं सूर्यं प्रति काञ्चिदप-

यतो विद्वांसो राजाज्ञाभङ्गकारकं जनं निरायुधं वधं वदन्ति, तन्मम प्रजानां द्रोहकारकाणां मम शत्रूणामिव शीघ्रं विपत्तयो भविष्यन्ति, इति स राजा देशान्तरेऽपि ढक्कामवादयत्। तस्मात्तस्य राज्ञः पुण्यप्रभावेण तस्य देशे तदैव नष्टविपत्तयः प्राणिनः शत्रुकृतार्त्तिभ्यो मुक्ताः। सर्वा अपि स्त्रियः सतीव्रतवत्यः, सकलो जनः सत्यवादी, क्वापि च चौरा नासन्, कस्यचिदपि धूर्सना नासीत्। क्रीडासु बालकैरपि न कलहो विहितः, युवभिश्च स्नेहशत्रुः कलहो दूरीकृतः। पशवोऽपि श्रृङ्गादिभिः कस्यचिद्भयां न चक्रुः, रोगाश्चापि मरणान्तकष्टरूपं किञ्चिदुपद्रवं न चक्रुः। मत्तैर्व्यन्तरादिभिश्चापि कश्चित्कोऽपि न पीडितः, अग्निरपि चुल्लाविन्धनेष्वपि मर्यादया ज्वलति स्म। पथिकानां श्रमहरणमात्रैरेव वायुभिर्ववे, सरः कृपिफलम्, मेघश्च समये जलं दत्तवान्। एकवारमपि सिक्ता सरसा पृथिवी विस्तारेण पफाल, भगवान् सूर्यश्चान्धकारनाशकं किरणसमूहं विस्तारयामास। इत्थं रतिसारस्य भूपतेः प्रभावं ज्ञात्वा सर्वेऽपि राजानः स्वराज्ये तस्यैवाज्ञां प्रावर्त्तयन्। माहिष्मतीपतिस्तत्पिता सुभूमोऽपि तज्ज्ञात्वा प्रसन्नस्तस्यैवाज्ञां न्यस्य परलोकहितमकरोत्। यत्र यत्र चन्द्रस्य चन्द्रिकेव तस्याज्ञा प्रकटाऽभूत् सा सा भूमिस्तापरूपान्धकाराणामभूमिरभूत्। अनया रीत्या समस्तपृथिव्यां तस्य राज्ञः शासनशिक्षितायां सकलोऽपि लोको धर्मकार्यकरणे समर्थो बभूव। एवं चानन्दितामशेषां पृथिवीं स राजा रतिसारो बहुकालपर्यन्तं बद्धनरकद्वारं भग्नस्वर्गद्वारार्गलं यथा स्यात्तथा पर्यपालयत्॥

अथ कदाचित् स राजा कौतुकगृहे तिसृणां राज्ञीनां मुखं पश्यन् यथेष्टमपूर्वमानन्दं प्राप। हे कोमलाङ्गि! तव चन्द्रवन्मनोहरे मुखे चन्दनस्य चित्रकं न शोभते, तेनेदं विलुप्य कस्तूरिकामयं करोमीत्युक्त्वा राजा सात्त्विकस्वेदजलार्द्रैरङ्गुलीपत्रैः सौभाग्य-

संसारकर्म छिनत्ति । अथ तस्यास्त्रेणार्त्ते गजे पतति नष्टसकलायुधोऽहं मुष्टिमेवास्त्रयन्नुत्प्लुत्य तस्य गजमस्तकेऽगमम् । अथ स पादप्रहारं कृत्वा मां हस्तयोर्गृहीत्वोत्क्षिप्तवान्, अहं च यन्त्रोत्थग्रावगोलवद् दूरे पतितः ।

ततस्तया राज्ञ्या सह हस्तमेलनं कृत्वा मधुरालापं कुर्वन् स सहसा सेनाभिः सह ममान्तःपुरं प्राविशत् । तदैवं पश्यन्नपमानेन व्याकुलमना अहं मरणमेवेष्टतमेभ्योऽपीष्टं गणयन्, यदि मम किञ्चित्पुण्यमस्ति तदा जन्मान्तरेऽपि सज्जनपथभङ्गकारकः स्त्रीसङ्गो माभूदिति कथयंश्चाग्रे कूपं दृष्ट्वा तत्र कूपे पपात, पतितश्च स्वं श्रेष्ठसिंहासनस्थं ददर्श । तथा च ये सुभटा युद्धे क्षताः प्रपतिता मृताश्च तान्भटानहं सभायां पार्श्वस्थानक्षतानपश्यम् । येऽश्वा गजाश्च युद्धे नष्टा दृष्टास्तेषां तुरगाणामश्वशालासु गजानां गजशालासु च शब्दमशृणवम् । ततो यावदन्तःकरणेऽन्तःपुरं प्रति दृष्टिः क्षिप्ता तावत्तादृशराज्ञीप्रतिकर्मक्रियोन्मुखी तस्या राज्ञ्याः सखीश्रेणिर्दृष्टा । इत्थमाश्चर्यान्वितचित्ते मयि मनोहरेण तेजसा सूर्यं कर्बुरयन् कश्चिद्देवोऽग्रे प्रादुरभूत् । तस्य देवस्य दर्शनेन सञ्जातजातिस्मरणोऽहमचिन्तयम्, पूर्वजन्मन्यहमेष च धनधन्याख्यौ सुहृदावभूव । अनेन मित्रेण सह संसारस्य निस्सारतां विचारयन् व्रतादस्खलितस्वर्गलक्ष्मीसुखमुपार्जयम् । देवलोकात् पूर्वमधःपतता मयायमालिङ्ग्य प्रार्थितः, यत् सोऽहं संसारे मोहसागरात्त्वयोद्धर्त्तव्यः । तन्नूनं साम्प्रतं ज्ञानदुग्धानां कूपसदृशेनानेन बन्धुना नाटकमिदं घटयित्वाहं प्रतिबोधितः । इत्युक्त्वोत्थाय मया प्रीत्या सत्कृतः स देवोऽन्तर्दधे, अहं च संसारसागरं विलङ्घितुं शीघ्रं चारित्रग्रहणकरवम् । ईदृशचरित्रश्रवणात् संसारद् भीतः स राजा स्वराज्ये जामातरं रतिसारं न्यस्य व्रतग्रहणमकरोत् । अथ राजनि व्रतं स्वीकुर्वति यथा सूर्यो गगनं शोभयति तथा रतिसारा राज्यमशोभयत् । राजाज्ञापालनकर्त्तॄणां जनानां हन्ता राजहन्तेव ज्ञातः स्यात्,

भिरवलोकमानश्चञ्चलचित्तव्यापाराभिरन्तःपुरसुन्दरीभिः "नाथ! नाथ! किमेतदि" ति वारंवारमुत्तरदानाय प्रार्थितः स केवलज्ञानी जिनो निजदन्तकान्तिव्याजान्मूर्त्तिधारि पुण्यं विस्तारयन्तीमिव सकलपापनाशिनीं धर्मदेशनां (धर्मोपदेशं) चकार। अहो! महोदधेर्मर्मस्थानभेदनकारिरूपवद्भिः कर्मभिरेव संसारसेवकाः प्राणिनः कथं खिद्यन्ते?। हे सज्जनाः! आत्मभिः सह सततं सङ्गतानि संसारस्य कारणरूपाणि नाम्नो भेदादष्टविधानि तानि कर्माणि यूयं जानीत॥ यथा—ज्ञानावरणम् (१), दर्शनावरणम् (२), वेदनीयम् (३), मोहनीयम् (४), आयुः (५), नाम (६), गोत्रम् (७), अन्तरायम् (८) इति तेषां नामानि जानीत। तत्र चाच्छादितैर्मति—श्रुता—वधि—मनःपर्याय—केवलनामभिर्ज्ञानैराद्यं ज्ञानावरणं पञ्चविधमस्ति। यथा निर्मलापि दृष्टिर्वस्त्राच्छादिता सती किञ्चिदद्रष्टुं नार्हति तथा तेन ज्ञानावरणेनाच्छादित आत्मापि किञ्चिद्द्रष्टुं न शक्नोति तस्माद्धेतोस्तज्ज्ञानावरणं वस्त्रसमं सूरिभिः कथितम्। तस्य ज्ञानावरणस्यावस्थितिः सागराणां त्रिंशत्कोटिकोटिप्रमाणरूपा विद्यते ततः पुनर्मलिन आत्मा तस्य कर्माणि बध्नाति। दर्शनावरणं तु नवविधमस्ति तत्र निद्राः पञ्चविधाः, चक्षुर्दर्शनादयश्च चतुर्विधाः स्युः। यत्र स्वल्पकारणेन प्रबोधः स्यात् सा "निद्रा", यत्र चात्मनो दुःखेन जागरणं स्यात् सा "निद्रानिद्रा"। या निद्रोर्ध्वस्थितस्य प्राणिनो जायते सा "प्रचला", या च मार्गे गच्छतः प्राणिनो भवेत् सा "प्रचलाप्रचला", स्त्यानर्द्धिनाम्नी निद्रा तु दिने चिन्तितस्य कार्यस्य रात्रौ साधका, सा च पुनः क्लिष्टकर्मण उदये प्राणिनो जायते। येन चक्षुराच्छन्नं भवति तत् "चक्षुर्दर्शनावरणकर्म" कथ्यते, तथावशिष्टेन्द्रियाणामाच्छादकं "अचक्षुर्दर्शनावरणं" नामोच्यते। "अवधिश्च" रूपिपदार्थस्य मर्यादा कथ्यते, तेन यद्दर्शनम्, अथवेन्द्रियाणामनपेक्षो बोधरूपोऽवधिरुच्यते।

सुन्दर्यां मनोहरकान्तिवच्चित्रकं लुलोप। अथ मनोहरशृङ्गारवत्यपि नष्टतिलकविन्दुः सा विततनक्षत्रापि चन्द्ररहिता रात्रिरिव न शुशुभे । एकेन तिलकेन रहितापीयं यन्निःशोभा दृश्यते तत्त्यक्तसकलाभूषणा कथं शोभिष्यत इति विचार्य वैराग्यरूपतरङ्गपूर्णचित्तसागरः स राजा क्रमशोऽस्या राज्याः सकलमाभरणमहर्षीत् । ततो हृतशिरोभूषणां रात्रौ दीपरहितगृहमिव, हृतकर्णभूषणामस्तंगतसूर्यचन्द्रमाकाशमिव, हृतहारां तोरणरहितं देवगृहमिव, केयूरभूषणरहितहस्तां छिन्नकमलां सरसीमिव, कङ्कणरहितकरां लतारहितवृक्षवतीं वनीमिव, शब्दायमानमञ्जीरहीनचरणां हंसकमलहीनां कमलिनीमिव, एवं त्यक्तसकलभासमानाभरणां पत्रपुष्पफलरहितां फाल्गुनमासीयां लतामिव तां राज्ञीमान्तरेण नेत्रेण पश्यन् स राजा विचारितवान्, यत्कुत्रापि प्रक्षालनरहितशुद्धशरीरो भूषणरहितोऽपि शोभावान् कोऽपि नास्ति । अथवाऽन्यस्य का कथा ? आत्मापि प्रक्षालितसकलकर्मरूपमलो ज्ञानदर्शनचारित्ररूपै रत्नैः सुशोभितो राजते । तत्कर्मणा मलिनेऽस्मिन्नात्मनि यच्छरीरस्य परिष्करणं तदाच्छादितपुच्छं मयूरस्य नर्त्तनमिवाशोभनीयमस्ति । शरीरस्याभरणैरात्मा न भूष्यते किन्त्वात्मनो भूषणैः सकलमपि शरीरं सूर्यस्य किरणैराकाशमिव भूष्यते । तदयमात्मा यथेष्ट कर्मरूपमलसमूहरहितो ज्ञानदर्शनचारित्रभूषणोऽङ्गभूषणः कर्त्तव्यः । इत्थं स्वान्ते विचारयतस्तस्य राज्ञ आत्मनि यथा वायुरहिते गृहे स्थितो दीपः शोभते तथाऽत्यन्तं स्थिरं मनोऽशोभत । अथ घातककर्मरूपेन्धनस्याग्निसदृशे शुक्लध्याने प्राप्ते त्रिभुवनस्य त्रिकालदर्पणसदृशं केवलज्ञानमुत्पन्नम् । ततः शासनदेव्या दत्तं मुनिजनोचितं वेषं समाश्रितस्तथैव च तत्र कृते सुवर्णकमले विहितासनः शीघ्रमागतैः पुष्पवृष्टिकरैर्देवसमूहैर्वन्दितः "किमेतदि" ति साश्चर्यैर्नगरवासि-

नवविधा नोकषाया ज्ञेयाः, इत्थं कषायनोकषाययोर्भेदप्रभेदैर्भिन्नाश्चारित्रमोहनीयकर्मणः पञ्चविंशतिर्भेदा सञ्जाताः। एवं मोहनीयस्य कर्मणोऽष्टाविंशतिर्भेदा बहुदिनं यावत्स्थायिनः प्रायो भव्यप्राणिनामपि कष्टतो नाशनीयाः स्युः। मद्यपानाद्यथा प्राणी कर्त्तव्याकर्त्तव्यानि न जानाति तथा मोहनीयकर्मणोऽपि प्रभावात् ज्ञातुं न शक्नोतीति तन्मद्यसदृशं कथ्यते। तेन हेतुना हि तस्य कर्मणोऽत्रस्थितिः सर्वेभ्योऽपि कर्मभ्योऽधिका सागराणां सप्ततिः कोटिकोटिप्रमाणं निर्दिष्टा। अथ नरक-तिर्यग्-मनुष्य-देवगतिभेदभिन्नमायुःकर्म चतुर्विधम्, तेन दुर्भेदबन्धनभावेन तदायुर्वज्रमयनिगडसदृशमस्ति। अस्यायुःकर्मण इत्थमुत्कृष्टा स्थितिः संसारे हि त्रयस्त्रिंशत्सागरोपममात्राऽस्ति। नामकर्म तु प्रथमं द्विचत्वारिंशद्विधम् (४२), ततः सप्तषष्टिविधम् (६७), ततस्त्रिनवतिविधम् (९३), ततश्च त्र्यधिकशतविधम् (१०३)। तत्र द्विचत्वारिंशद्भेदा यथा-गतिः (१) जातिः (२) शरीरम् (३) अङ्गोपाङ्गम् (४) बन्धनम् (५) संघातनम् (६) संहननम् (७) संस्थानम् (८) वर्णः (९) गन्धः (१०) रसः (११) स्पर्शः (१२) अगुरुलघु (१३) पराघातः (१४) उपघातः (१५) आनुपूर्वी (१६) उच्छ्वासः (१७) आतपः (१८) उद्योतः (१९) विहायोगतिः (२०) त्रसः (२१) स्थावरम् (२२) सूक्ष्मम् (२३) बादरम् (२४) अपर्याप्तम् (२५) पर्याप्तम् (२६) प्रत्येकम् (२७) अनन्तकायः (२८) सुभगः (२९) दुर्भगः (३०) स्थिरम् (३१) अस्थिरम् (३२) शुभम् (३३) अशुभम् (३४) सुस्वरः (३५) दुःस्वरः (३६) आदेयः (३७) अनादेयः (३८) यशःकीर्तिः (३९) अयशःकीर्त्तिः (४०) निर्माणम् (४१) तीर्थङ्करः (४२)। अथ अस्यैव कर्मणः सप्तषष्टिर्भेदा यथा-नरक-पक्षि-मनुष्य-देवनामानो गतेश्चत्वारो भेदाः, एकेन्द्रिय-द्वीन्द्रिय-त्रीन्द्रिय-चतुरिन्द्रिय-पञ्चेन्द्रियभेदाज्जातिः पञ्चविधा ज्ञेया। औदारिकं वैक्रि-

तेनावधिना दर्शनं सामान्यार्थग्रहणरूपमवधिदर्शनं कथ्यते, तस्य चाच्छादकमवधिदर्शनावरणं कथ्यते। समग्रलोकालोकस्य सामान्यावबोधो येन कथ्यते तत् "केवलदर्शनावरणकं" नाम चतुर्थं भवति। द्रष्टुकामस्य राज्ञो द्वारपालो यथा राजदर्शनं न ददाति तथा दर्शनावरणीयेन कर्मणा रुद्धोऽसौ जीवोऽपि पदार्थं न पश्येत् तेन हेतुना तत्कर्म द्वारपालतुल्यं विद्वांसो वदन्ति। अस्य दर्शनावरणीयकर्मणोऽवस्थितिरपि क्रमशस्त्रिंशत्कोटिकोटिसागरोपमप्रमाणाऽस्ति। अथ सातासातभेदेन वेदनीयकर्म द्विविधम्, तयोः पुनर्मुख्यमसातं पक्षिणि नरके च, सातं च मर्त्ये स्वर्गलोके चास्ति। मधुलिप्तखड्गधाराया आस्वादनं इवेदं कर्म सुखदुःखकृद् भवति। अस्य वेदनीयकर्मणोऽवस्थितिरपि नियतं त्रिंशत्कोटिकोटिसागरोपमप्रमाणाऽस्ति। मोहनीयं तु द्विविधमस्ति, तत्र प्रथमं दर्शनमोहनीयं कर्म, द्वितीयं तु चारित्रमोहनीयं कर्म कथ्यते। तत्रापि प्रथमं दर्शनमोहनीयं कर्म त्रिविधमस्ति, द्वितीयं चारित्रमोहनीयं कर्म पञ्चविंशतिप्रकारकमस्ति। प्रथमं तु सम्यग्–मिश्र–मिथ्यात्वभेदात् त्रिविधम्। द्वितीयं चारित्रमोहनीयं पञ्चविंशतिप्रकारकं यथा–क्रोधमानमायालोभाः कषायाश्चतुर्विधाः स्युः, तत्रैकैकः संज्वलन–प्रत्याख्यान–अप्रत्याख्यान–अनन्तानुबन्धिभिर्भेदैश्चतुर्विधो भवतीति षोडशभेदा ज्ञेयाः। तत्रासौ संज्वलनाख्यः कषायः पञ्चदशदिनस्थायी, प्रत्याख्यानकषायश्चतुर्मासस्थायी, अप्रत्याख्याननामा कषायः संवत्सरस्थायी, अनन्तानुबन्धकः कषायो जीवनपर्यन्तस्थायी विद्यते। सेव्यमाना अमी संज्वलनादयः क्रमशः संसारे प्राणिनो वीतरागत्वं मुनित्वं श्राद्धत्वं सम्यक्त्वं च नाशयन्ति। एवं ते कषाया जन्मान्तरे क्रमशो देवगतित्वं मनुष्यगतित्वं पक्षिगतित्वं नरकत्वं च ददति, इत्थं ते षोडशविधाः कषाया ज्ञेयाः। तथा हासः, भयं, शोकः, जुगुप्सा, रतिः, अरतिः, पुरुषवेदः, स्त्रीवेदः, नपुंसकवेदश्चेति

चत्वारो भेदाः, तथा वैक्रियवैक्रियकं वैक्रियतैजसं वैक्रियकार्मणकं वैक्रियतैजसकार्मणकमिति चत्वारो भेदाः, तत आहारकाहारकं आहारकतैजसं आहारककार्मणकं आहारकतैजसकार्मणकमिति भेदचतुष्टयम्, एवञ्चैतेषामन्योन्यं सङ्कलनेन द्वादशभेदाः (१२) संजातास्तेषु तैजसतैजसं तैजसकार्मणं कार्मणकार्मणं चेति भेदत्रयस्य सङ्कलने बन्धनस्य पञ्चदश भेदा भवन्ति। यथा चित्रकारो रम्याण्यरम्याणि चेति द्विविधान्यपि रूपाणि करोति तथा नामकर्मापि जीवानां रम्याण्यरम्याणि च रूपाणि करोति तेन हेतुना तन्नामकर्म चित्रकारसदृशं कथ्यते। प्राणिनामेतस्य नामकर्मणः प्रकृष्टावस्थितिर्विंशतिः कोटिकोटिसागरोपमप्रमाणमस्ति। गोत्रं द्विविधम्, बुद्ध्या लक्ष्म्या च हीनोऽपि संसारी येन पूजनीयो भवेत् तदुच्चं गोत्रम्, आभ्यां सहितोऽपि यस्योदयात् संसारी न पूजनीयः स्यात्तन्नीचं गोत्रं कथ्यते। यथा मृत्तिकापिण्डः कुम्भकारात् पूर्णघटो मदिराघटश्च भवेत् तथा गोत्राद्दात्मापि प्रशंसनीयो निन्दनीयश्च भवति, तेन हेतुना तद्गोत्रकर्म कुलालसदृशमस्ति। आत्मनि गोत्राभिधस्यास्य कर्मणोऽवस्थितिर्विंशतिकोटिसागरोपमप्रमाणमस्ति। अथान्तरायनामकमष्टमं कर्म दान-लाभ-भोगो-पभोग-सामर्थ्यभेदैः पञ्चविधं ज्ञातव्यम्। यथा राज्ञि दानादेशे कृतेऽपि भाण्डागारिको मध्येऽन्तरायरूपो भवति तथैवेदमपि कर्म जीवस्यान्तरायं करोति अतस्तदन्तरायकर्म भाण्डागारिकसदृशमस्ति। एतस्यान्तरायकर्मणोऽवस्थितिस्त्रिंशत्कोटिकोटिसागरोपमप्रमाणम्। इत्थं संक्षेपेण कथितोऽनादिकालः कर्मरूपमहारोगः सावधानैः सज्जनैः शुद्धध्यानरूपमहौषधिसत्त्वैः शान्तः कर्त्तव्यः। कषायविषयत्यागिभिर्लोकैः शुद्धं ध्यानमपि प्राप्यं, पुनश्च लोकैः सन्तोषरसपूर्णैर्भवितव्यं यतः स सन्तोषः सुखस्य मूलमस्ति। सुष्ठुवचनात् परमन्यं वशीकरणं नास्ति, कलायाः परमन्यं धनं नास्ति, अहिंसायाः

यकमाहारकं तैजसं कार्मणं चेति शरीरं पञ्चविधम्। अङ्गोपाङ्गं त्रिविधम्— शीर्षम्, पृष्ठम्, हृदयम्, उदरम्, जङ्घाद्वयम्, हस्तद्वयं चेत्यष्टावङ्गानि कथ्यन्ते। अङ्गुल्यादिकमुपाङ्गं कथ्यते, तथा तद्गता रेखा अङ्गोपाङ्गं स्युः। एतत्त्रयं त्वाद्ये शरीरत्रये भवेत्। संहननं षड्विधम्, तत्र प्रथमं वज्रऋषभनाराचं द्वितीयमृषभनाराचं तृतीयं नाराचं चतुर्थमर्धनाराचं पञ्चमं कीलिकाभिधं षष्ठं च सेवार्त्तनामकम्। एतल्लक्षणं त्वस्थिपर्यन्तस्पर्शरूपं ज्ञेयम्। संस्थानान्यपि षट् सन्ति तद्यथा–प्रथमं संस्थानं समचतुरस्राख्यम्, ततो न्यग्रोधमण्डलनाम, ततो विपरीतप्रकारकं सादि, ततो वामनं, ततः कुब्जकम्, ततश्च हुण्डमिति। एतानि चौदारिकस्यैव शरीरस्य भवन्ति, अन्यशरीराणां त्वसम्भवान्न भवन्ति। आनुपूर्वी चतुर्विधा यथा–नरक–तिर्यग्–देव–मनुष्यरूपेषु चतुर्षु जन्मसु गच्छतः प्राणिनो एकस्माद् भवाद् द्वितीये भवे गमनेऽन्तराले या गतेः परिपाटिर्भवति सा चतुर्विधा भवतीति। विहायोगतिः शुभाशुभभेदाद्द्विविधा। उपघातपराघातातपागुरुलघु चापि कथितम्। तथोच्छ्वासोद्योतौ, वर्णाद्याश्चत्वारः, त्रसदशकम्, स्थावरदशकं, निर्माणं, तीर्थङ्करश्चेति सप्तषष्टिः (६७) भेदाः कथिताः। बन्धनं पञ्चविधम्, सङ्घाताः पञ्चविधाः, वर्णो पञ्चविधः, स्पर्शोऽष्टविधः, रसश्च पञ्चविधः, गन्धो द्विविधश्च। पञ्चविधवर्णेषु कृष्णो वर्णः, स्पर्शेष्वष्टविधेषु गुरुः, रसेषु पञ्चविधेषु तिक्तः, गन्धयोर्द्विविधयोः सुगन्धिरित्येते पूर्वकथिता भेदास्त्याज्याः। पूर्वकथितायाः सप्तषष्टे(६७)रस्याः षड्विंशते(२६)श्च परस्परमेलने जाते त्रिनवति(९३)र्भेदा भवन्ति। पञ्चदशविधेभ्यो बन्धनेभ्यः पञ्च भेदाः पूर्वं कथितास्तथाऽवशिष्टैर्दशविधैर्भेदैः परस्परं मेलने त्र्यधिकं शतं (१०३) भेदा भवन्ति। बन्धनस्य पञ्चदश भेदा यथा–औदारिकौदारिककं औदारिकतैजसं औदारिककार्मणं औदारिकतैजसकार्मणकमिति

# ॥ श्रीवासुपूज्यचरित्रम् ॥

## [ तृतीयो भागः ]

अथेत्थं श्रीरतिसारनृपस्य श्रेष्ठपुण्यवर्त्तीं कथां श्रुत्वा स पद्मोत्तरो राजाऽत्यन्तं प्रसन्नोऽभूत्। नृपादिभिर्निरन्तरं सुपात्रभूतेभ्यः साधुभ्यो दानं दीयत एव इति न, सर्वदा सुपात्रस्य उपलम्भाभावात्, अतः सुपात्रदानं कचिच्छक्यं कचिन्न न, परन्तु स्वायत्तत्वाच्छीलं तु सर्वत्र सदैव च शक्यं, अतः पण्डिताः सततं शीलं पालयन्ति। यो मनुष्यः क्रीडाकमलमिव सततं विकस्वरं शीलं धारयति स यथेच्छं मुक्तिरूपस्त्रिया मुदा सकटाक्षं दृश्यते। अतो निर्मलबुद्धिमाञ्जनश्चिन्तामणिरत्नसदृशस्य पुण्यस्य प्राप्त्यर्थं शीलामृतसमुद्रे मज्जनं करोति। पापनाशेनाश्चर्यशोभावति शीले गुणास्तथा समागच्छन्ति यथा वर्षर्त्तौ मनोहरशोभावत्यल्पजलाशये स्वच्छा आनन्दिनो हंसा समागच्छन्ति। शीलरक्षणात् सनत्कुमारशृङ्गारसुन्दर्योरिव मनुष्येषु प्रेम भोगो मोक्षश्च प्राप्तो भवति। तद्यथा—

### ॥ अथ सनत्कुमारशृङ्गारसुन्दरीकथा ॥

इह जम्बूद्वीपे भारतवर्षे सन्मार्गवर्त्तिनां धन्यानां पुरवासिनां श्रेण्या शोभमाना "श्रीकान्ता" नाम पुरी वर्त्तते। तस्यां नगर्यां स्वाधिपत्येन तिरस्कृतदेवराजः स्वच्छयशोमालाराजितसकलदिङ्मण्डलः सिंहनामा राजा बभूव। तस्य राज्ञः सद्गुणवृ-

परोऽन्यो धर्मो नास्ति, सन्तोषात्परमन्यं सुखं नास्ति । सेवनीयस्य तस्यापि सन्तोषस्य जननी निश्चितं विरतिरस्ति । सा विरतिरपि सर्वतो देशतो वापि कथिताऽस्ति । तेन कारणेनास्यां विरतौ बुद्धिमद्भिः सुखाभिलाषुकैः सज्जनैः प्रशंसनीय-कर्मणि महाविघ्नसदृशः प्रमादो न कदापि कर्त्तव्यः । आयुष एकः क्षणोऽपि कोटिरत्नैरपि मिलितो न स्यात् । अरे ! मनुष्यैः प्रमादरूपधूलिना स क्षणः कथं हार्यते ! । इत्थं कर्मरूपपर्वतभेदनवज्रसदृशीं धर्मवाणीं श्रुत्वा तत्त्वज्ञानेन भव्यजनः शुभपरिणामी बभूव । तस्मिन् समये तिस्रो राज्यः सुबन्धुश्च महाव्रतमङ्गीचक्रुः, अन्येऽपि बहवो जना गृहस्थानां व्रतं जगृहुः । इत्थं मित्राणि प्रबोध्य पृथिवीविहारं कृत्वा धर्मं विस्तार्य च भगवान् रतिसारः क्रमशो मोक्षं प्राप । इत्थं च विचित्रस्य दानस्य प्रभावाद् भुक्तपृथिवीसुखो निपुणो जनो रतिसार इव शीघ्रं संसारं विनाशयतीति शिवम् ॥

॥ इति श्रीवर्धमानसूरिकृतस्य पद्यमयस्य श्रीवासुपूज्यचरित्रस्य संस्कृतगद्यानुवादे द्वितीयो भागः समाप्तिमगमत् ॥ श्रीरस्तु ॥

समन्ततस्तीक्ष्णधारावद्विर्बाणसमूहैर्भृशं वर्षन्तस्ते शत्रुवीरा मेघा इव राजकुमारं सनत्कुमारसूर्यं परिवेष्टयामासुः । अथ राजकुमारः सनत्कुमारो जीवनाशां त्यक्त्वा युद्धं कर्तुमनाः खड्गं धृत्वा यावद् गजादुत्तरति तावत् स्रस्ताखिलशस्त्रं लालाश्रेणिसमाच्छादितमुखं निद्रया मुद्रितनयनं शत्रुसैन्यं ददर्श। ततो मूर्च्छितकर्मश्रेण्या मध्यगतो ज्ञानिन आत्मेव स राजकुमारः सुप्तानां शत्रूणां मध्ये रराज। अत्रान्तरे शूरकेशरिनृपं बद्ध्वा समानीय चन्द्ररत्नचूडौ विद्याधरौ शत्रूणां निद्रया विस्मितं तं राजपुत्रं सनत्कुमारं प्रणमतः स्म । अथ विकसन्नेत्रकमलो राजकुमारस्तौ चन्द्ररत्नचूडौ समालिङ्ग्य प्रसन्नः "किमिदं" मिति पृष्टवान्। तदा चन्द्रनामा विद्याधरराजो राजकुमारं तं सनत्कुमारं शीघ्रं प्रकटीभवत्प्रमोदरसतरङ्गस्नानेन निर्मलं वचनमवोचत्। हे राजकुमार ! विद्याधरेन्द्रेषु मार्यमाणेषु तवाज्ञापालनेन जीवतोरावयोरद्य पुनर्जन्मेवाभूत्। तथाहि श्रूयताम्—

वैताढ्यपर्वते हृदयग्राहिकान्तिशोभाशालि रथनूपुरचक्रनामकं नगरमस्ति। तस्मिन्नगरे क्रोधभावेन भृशं जगन्ति द्विषन् भयङ्करजनानां सीमा भीमनामा विद्याधरराजोऽस्ति। सकलविद्याधराणां विनाशबुद्धिशाली भयङ्करनयनोऽसौ दुष्टो दुस्तपैस्तपोभिर्विद्यां राक्षसीं समसाधयत्। ततस्माद् भीमनृपात् संकटं शङ्कमाना नवाधिकशतनगरवासिनो विद्याधरेन्द्रा कापि न निर्वृतिं प्राप्तवन्तः। तद्भयस्य चिन्तया दुःखितस्य निद्रांगतस्य ममाधरात्रौ पुरतो रूपसम्पदां सीमा काऽपि कामिनी समभूत्। कामदेवस्य जङ्गमा राजधानीवेयं कामिनी भावमयीं दृष्टिं दर्शयन्ती मामिदमुवाच, हे मोहमदकान्ते ! मां महत इन्द्रस्य महाराज्ञीमवेहि। हे सुभग ! मम चित्तं तव गुणेषु प्रेमबद्धमभूत्। अतो हे दयामय ! कामदेवकृतपीडापीडितं मम शरीरं शान्तं कुरु, चिन्तां दूरीकुरु, तव शत्रुवर्गं हुङ्कारेणैव भस्मसात्करोमि। इत्थं क्षोभजनकैर्लोभकैश्चेतोहरणशालिभिर्वचनसमूहैः सा काम-

धिस्यन्दैस्तं रत्नचूडं विद्याधरमजजागरत् । ततः कृपालुना राजकुमारेणौषधिरसैश्चन्द्रनामापि विद्याधरोऽजीवि, यतो महापुरुषाणां कृपायामन्तरो न भवति, यदुक्तम्—"क्षमासारा हि साधवः ॥" ततो राजकुमारो विवेकरूपसमुद्रोत्पन्नैर्मुक्ताफलसदृशैर्वर्णैर्ग्रथितां हारसदृशीं वाणीं चन्द्रनामानं विद्याधरमुवाच । अहो ! परस्त्रीहरणं भुक्तनष्टान्नमिव सुखं न ददाति तथा पुण्यं हन्ति, पापं च पुष्टं करोति । परस्त्रीणामालिङ्गनेन यत् सुखं प्राप्तं भवति तत् सुखं शीतजलस्नानेन ज्वरपीडादूरीकरणमिव समूलनाशकं भवति । परस्त्रियो हि रात्रय इवायशोरूपान्धकारदायिन्यो भवन्ति, याः सन्मार्गरहितान् मनुष्यान्नरके पातयन्ति । जलेषु मत्तगजैरिव परस्त्रीगमनकारिभिः कैर्मदान्धैः पुरुषैर्घाततिरस्कारबन्धनानां दुःखानि नानुभूयन्ते ?। अत एव पुरुषैः सर्वदा सुकृतपुष्टरसायनतुल्यं गुणरूपमहागजनिवासवनसदृशी निजस्त्रीसन्तुष्टिः सेवनीया । अतो हे चन्द्रविद्याधर ! निष्कपटबुद्धिधारणं कृत्वा चन्द्रसदृशोज्ज्वलानां यशसामाच्छादकं मेघतुल्यं परस्त्रीसमालिङ्गनं त्वं त्यज । तथा हे चन्द्र ! हे विद्याधरशिरोमणे ! रत्नचूडेन सह पापसमूहोत्पन्नं द्वेषं मा कदापि कुर्य्याः । एवं चन्द्रविद्याधरं कथयित्वा रत्नचूडमुवाच, हे रत्नचूड ! त्वयापीत्थं विचारणीयं यत् परस्त्रीहरणद्वेषयोः फलं युवयोः प्रत्यक्षमभूत् । एवं वचनं प्रविज्ञाय प्रसन्नौ तौ विद्याधरौ सनत्कुमारस्य तेजोरूपाग्निं साक्षीकृत्य परस्परं मित्रतां चक्रतुः । ततः शिक्षागुरवे राजकुमारायादृश्यीकारिणीं विद्यां गुरुदक्षिणां दत्वा तौ विद्याधरौ तया कश्मीरदेव्या सह गगनं जग्मतुः । अथ कदाचिदत्युत्कण्ठितः कश्चिच्चर आगत्य सभागृहभूषणं सिंहनृपमिदं न्यवेदयत् । हे स्वामिन् ! विश्वविजयं कर्त्तुमना बहुपृथिवीपतिहननेन सञ्जाताभिमानः शत्रुरूपहस्तिनाशकसिंहः काम्पिल्यपुरमन्दिरस्य देवः शूरकेशरी नामा राजा त्वां प्रत्यागच्छति । अथ तस्य वचनं श्रुत्वा सकोपः सिंहमहीपती

न दानवो यो मां रक्षेत् । हा हा ! सर्वथाहं हतोऽस्मि !! । अथ तच्छब्दश्रवणेन संजातरोमाञ्चो भयङ्करोद्धूपितकेश उत्पश्यन् स राजकुमारो धनुश्चालयन्नुत्थितः । आकाशे स्थितं तं मनुष्यं रक्षितुमसमर्थो विलक्षः पृथिवीचारी स राजकुमारः पक्षिणोऽपि धन्यानमन्यत । अथ मया हन्यमानस्य तव रक्षको भुवनत्रये कोऽपि नास्ति तन्म्रियमाणस्त्वं मा क्रन्दनं कुर्विति पुनराकाशमाणमभूत् । ततः बुद्धिमान् शरणागतरक्षकशिरोमणिः स राजकुमारो हन्तुः स्वरानुसारेण साक्षेपमाकाशे बाणवृष्टिमकरोत् । ततः शत्रोः खड्गेन कृतक्षत एकः पुरुषोऽग्रे पतितोऽभूत्, द्वितीयस्तु राजकुमारस्य बाणेन ताडितः पतितोऽभूत् । अथोभौ मूर्च्छितौ दृष्ट्वा राजकुमारे साश्चर्यं गगनात् काऽपि तेजःशालिनी स्त्री उत्ततार । प्रेम्ण आधिक्याद्विस्तृतकरुणस्वरा सा स्त्री शत्रोर्बाणेन खण्डितशरीरस्य पुरुषस्याग्रे स्थिता क्रन्दनं चकार । अथेदं किमाश्चर्यं चरित्रम् ? इति तेन राजकुमारेण पृष्टा सा स्त्री शोकेन शुष्यन्तमधरोष्ठमश्रुभिः सिञ्चतीदमब्रवीत्, यथा—रक्तरत्नकान्तिसमूहरूपसिन्दूरसमूहैश्चित्रितो लक्ष्मीदेव्याः क्रीडनाय रजतमयस्तावद् "वैताढ्यनामा" पर्वतोऽस्ति । तस्य पर्वतस्योपरि परिस्पन्दल्लक्ष्मीदेव्या निस्तेजोभूतदेवनगरी विपुलनयनानां ललनानां मुखैस्तिरस्कृतचन्द्रा "विशाला" नाम पुरी वर्त्तते । तस्यां नगर्यां रत्नचूडनामैष विद्याधरः क्रीडति, अस्य च प्रेमपात्रं कश्मीरदेवी नाम्नी प्रियाऽहमस्मि । अयं तु चन्द्रपुरीनायकश्चन्द्रनामा दुष्टो विद्याधरः कामविलासानि याचमानो मयाऽपमानितः । ततः, तेजसा क्रूरेण बलवतासूर्येण चन्द्रज्योत्स्नेव, पत्युः सकाशात् साम्प्रतमहमनेन हृताभूवं, ततोऽनुधावतो मत्पत्युरियं दशा जाता । हे वीर ! त्वयाप्यस्येदं दुश्चरित्रफलमवलोकितम् । इत्युक्त्वेयं कश्मीरदेवी भर्त्तुर्जीवनमिच्छन्ती सती मूर्च्छानाशकारकानौषधीन् कुमाराय शीघ्रमादिशत् । अथ यथा चन्द्रः स्वकिरणैश्चन्द्रविकासि कमलं जागरयति तथा कुमारोऽपि तदौष-

गुणसमूहः कलास्वीकारे साग्रहो यशोजनकः सनत्कुमारो नाम पुत्रो बभूव। स राजकुमारः शरीरावयवैरिवोत्पन्नैर्निर्मललेशैः प्रत्यक्षलक्षणैर्गुणैः शोभते स्म। उपदेशमात्रक्लेशवतो गुरोः सकाशाद् गुणान् गृह्णतो राजकुमारस्य हृदये समस्ता अज्ञाता अपि कलाः स्खलितं न चक्रुः। तस्य राजकुमारस्य निःसीम रूपं श्रुत्वा ललनाजनैः स्वतो राजकुमारस्य शरीरेण सङ्गि खुरलीरजः बहुमतं जातम्। स्वप्रेमिणां विरहेण चतुराः स्त्रियः कामदेवस्य चित्राभ्यासस्य व्याजाद्धृदये गुप्तरूपेण राजकुमारस्य चित्रमलिखन्। शरणागतानां प्राणिनां रक्षणार्थं वज्रपञ्जरसदृशस्य तस्य राजकुमारस्य धनुषासादिता बाणा बाहुमण्डलस्य च्छायायां विश्रान्तिमगच्छन्। अथैकस्मिन् दिने मध्यरात्रे चन्द्रशालायां सुप्तः स सनत्कुमारः शत्रुणा वध्यमानस्य कस्यचिन्मनुष्यस्य शब्दं शुश्राव। ततोऽकस्मात् साश्चर्यं त्यक्तनिद्रो दयालुः स राजकुमार आकाशे वचनं शुश्राव, यथा अहो! अन्यस्य दुःखेन दुःखितो दीनानाथोद्धारकर्त्ता स कोऽपि क्वाप्यस्ति?—यो मामस्मात् पापाद्रक्षेत्। येन पुत्रेण माता त्रिभुवनस्य मातृर्हसति स कोऽपि क्वाप्यस्ति?—यो मामस्मात् पापाद्रक्षेत्। स्वकीयधैर्येण स्वजन्मनः तिथिनक्षत्रवासरान् गौरवयुतान् कुर्वन् स कोऽप्यस्मिञ्जगति वर्तते किं?—यो मामस्मात् पापाद्रक्षेत्। प्रेमार्द्राभ्यो निजप्रियाभ्योऽपि ये युद्धं प्रियं मन्यते तेषु मुख्यः किं कोऽपि नास्ति?—यो मामस्मात्पापाद्रक्षेत्। हा हा! अहं मृतो मृतः, मां रक्षितुं कोऽपि शीघ्रं नागच्छति, तत्कस्य बलेनेदं भुवनत्रयमाकाशे धृतमस्ति?। किमस्मिञ्जगति शूरा न सन्ति? सन्त्यपि यदिचेत्तदा किं ते दयारहिताः सन्ति? अथवा ते वीराः किं बधिरा बभूवुः? यन्म्रियमाणानां करुणार्द्रं शब्दं न शृण्वन्ति?। यदि चेन्मनुष्या रात्रौ निद्रां गच्छन्ति तर्हि देवेषु किमभूत्? यच्छक्तिशालिनोऽपि देवा मयि दयां न कुर्वन्ति?। साहसी कोऽपि मनुष्यो नास्ति न वा गन्धर्वो न वा देवो

समन्ततस्तीक्ष्णधारावद्भिर्बाणसमूहैर्भृशं वर्षन्तस्ते शत्रुवीरा मेघा इव राजकुमारं सनत्कुमारमूर्यं परिवेष्टयामासुः। अथ राजकुमारः सनत्कुमारो जीवनाशां त्यक्त्वा युद्धं कर्तुमनाः खड्गं धृत्वा यावद् गजादुत्तरति तावत् स्रस्ताखिलशस्त्रं लालाश्रेणिसमाच्छादितमुखं निद्रया मुद्रितनयनं शत्रुसैन्यं ददर्श। ततो मूर्च्छितकर्मश्रेण्या मध्यगतो ज्ञानिन आत्मेव स राजकुमारः सुप्तानां शत्रूणां मध्ये रराज। अत्रान्तरे शूरकेशरिनृपं बद्ध्वा समानीय चन्द्ररत्नचूडौ विद्याधरौ शत्रूणां निद्रया विस्मितं तं राजपुत्रं सनत्कुमारं प्रणमतः स्म। अथ विकसन्नेत्रकमलो राजकुमारस्तौ चन्द्ररत्नचूडौ समालिङ्ग्य प्रसन्नः "किमिद"मिति पृष्टवान्। तदा चन्द्रनामा विद्याधरराजो राजकुमारं तं सनत्कुमारं शीघ्रं मकदीभवत्प्रमोदरसतरङ्गस्नानेन निर्मलं वचनमवोचत्। हे राजकुमार! विद्याधरेन्द्रेषु मार्यमाणेषु तवाज्ञापालनेन जीवतोरावयोरद्य पुनर्जन्मेवाभूत्। तथाहि श्रूयताम्—

वैताढ्यपर्वते हृदयग्राहिकान्तिशोभाशालि रथनूपुरचक्रनामकं नगरमस्ति। तस्मिन्नगरे क्रोधभावेन भृशं जगन्ति द्विषन् भयङ्करजनानां सीमा भीमनामा विद्याधरराजोऽस्ति। सकलविद्याधराणां विनाशबुद्धिशाली भयङ्करनयनोऽसौ दुष्टो दुस्तपैस्तपोभिर्विद्यां राक्षसीं समसाधयत्। तत्तस्माद् भीमनृपात् संकटं शङ्कमाना नवाधिकशतनगरवासिनो विद्याधरेन्द्रा क्वापि न निर्वृतिमाप्तवन्तः। तद्भयस्य चिन्तया दुःखितस्य निद्रांगतस्य ममाधरात्रौ पुरतो रूपसम्पदां सीमा काऽपि कामिनी समभूत्। कामदेवस्य जङ्गमा राजधानीवेयं कामिनी भावमयीं दृष्टिं दर्शयन्ती मामिदमुवाच, हे मोहप्रदकान्ते! मां महत इन्द्रस्य महाराज्ञीमवेहि। हे सुभग! मम चित्तं तव गुणेषु प्रेमबद्धमभूत्। अतो हे दयामय! कामदेवकृतपीडापीडितं मम शरीरं शान्तं कुरु, चिन्तां दूरीकुरु, तव शत्रुवर्गं हुङ्कारेणैव भस्मसात्करोमि। इत्थं क्षोभजनकैर्लोभकैश्चेतोहरणशालिभिर्वचनसमूहैः सा काम-

धिस्यन्दैस्तं रत्नचूडं विद्याधरमजजागरत् । ततः कृपालुना राजकुमारेणौषधिरसैश्चन्द्रनामापि विद्याधरोऽजीवि, यतो महापुरुषाणां कृपायामन्तरो न भवति, यदुक्तम्—"क्षमासारा हि साधवः ॥" ततो राजकुमारो विवेकरूपसमुद्रोत्पन्नैर्मुक्ताफलसदृशैर्वर्णैर्ग्रथितां हारसदृशीं वाणीं चन्द्रनामानं विद्याधरमुवाच । अहो ! परस्त्रीहरणं भुक्तनष्टान्नमिव सुखं न ददाति तथा पुण्यं हन्ति, पापं च पुष्टं करोति । परस्त्रीणामालिङ्गनेन यत् सुखं प्राप्तं भवति तत् सुखं शीतजलस्नानेन ज्वरपीडादूरीकरणमिव समूलनाशकं भवति । परस्त्रियो हि रात्रय इवायशोरूपान्धकारदायिन्यो भवन्ति, याः सन्मार्गरहितान् मनुष्यान्नरके पातयन्ति । जलेषु मत्तगजैरिव परस्त्रीगमनकारिभिः कैर्मदान्धैः पुरुषैर्घाततिरस्कारबन्धनानां दुःखानि नानुभूयन्ते ?। अत एव पुरुषैः सर्वदा सुकृतपुष्टरसायनतुल्यं गुणरूपमहागजनिवासवनसदृशी निजस्त्रीसन्तुष्टिः सेवनीया । अतो हे चन्द्रविद्याधर ! निष्कपटबुद्धिधारणं कृत्वा चन्द्रसदृशोज्ज्वलानां यशसामाच्छादकं मेघतुल्यं परस्त्रीसमालिङ्गनं त्वं त्यज । तथा हे चन्द्र ! हे विद्याधरशिरोमणे ! रत्नचूडेन सह पापसमूहोत्पन्नं द्वेषं मा कदापि कुर्य्याः । एवं चन्द्रविद्याधरं कथयित्वा रत्नचूडमुवाच, हे रत्नचूड ! त्वयापीत्थं विचारणीयं यत् परस्त्रीहरणद्वेषयोः फलं युवयोः प्रत्यक्षमभूत् । एवं वचनं प्रविज्ञाय प्रसन्नौ तौ विद्याधरौ सनत्कुमारस्य तेजोरूपाग्निं साक्षीकृत्य परस्परं मित्रतां चक्रतुः । ततः शिक्षागुरवे राजकुमारायादृश्यीकारिणीं विद्यां गुरुदक्षिणां दत्वा तौ विद्याधरौ तया कश्मीरदेव्या सह गगनं जग्मतुः । अथ कदाचिदत्युत्कण्ठितः कश्चिच्चर आगत्य सभागृहभूषणं सिंहनृपमिदं न्यवेदयत् । हे स्वामिन् ! विश्वविजयं कर्त्तुमना बहुपृथिवीपतिहननेन सञ्जाताभिमानः शत्रुरूपहस्तिनाशकसिंहः काम्पिल्यपुरमन्दिरस्य देवः शूरकेशरी नामा राजा त्वां प्रत्यागच्छति । अथ तस्य वचनं श्रुत्वा सकोपः सिंहमहीपती

पीडिता कामिनी मामत्यन्तं प्रार्थयाञ्चकार। परस्त्री सर्वथा त्यक्तव्येति तवाज्ञां ध्यायति मयि सा कामिनी रात्र्या अन्ते विलक्षत्वं धारयन्ती तिरोबभूव। अथ चक्रवाकानां मित्रे सूर्ये गगनाङ्गणं शोभयति कर्णविदारको विचित्रो रोदनशब्दो दिशो व्याप। अथ तच्छब्दं श्रुत्वा व्याकुलहृदये मयि विद्याधरपतिनगरेभ्यो विद्याधरेशा आगत्येदमवोचन्। अद्य विद्याधरपतिना भीमेन नगरपङ्क्तिद्वयराज्यलाभाय याचिता राक्षसी विद्या समन्ततो मनोहराणि कामिनीरूपाण्याश्रिता। कपटवती महाबलवती सा राक्षसी विद्या मनोहरवचनैः सकलान् विद्याधरपतीन् पतीकृत्य शय्यारूपीभूय तानवधीत्। परन्तु हा! भाग्यसंयोगेन भवान् रत्नचूडश्च द्वावेव जीवन्तौ दृष्ट्या दृष्टौ। एवं तद्वचनैः स्वीयं मित्रं जीवन्तं ज्ञात्वाऽहं प्रेम्णा सुधासमुद्रमग्न इवाभूवम्। अथ यया शिक्षया शत्रुरूपराक्षसीविद्यातो रक्षार्थं सिद्धमन्त्ररूपमाचरितं साऽऽवयोर्जीवनौषधरूपा कुमारस्य (भवतः) शिक्षा भुवि विजयतामिति कथयन्नेव मम मित्रं रत्नचूडस्तस्मिन्समये कुतोऽप्यागत्यामृतहिमांशमालावन्मम हृदये लुलोठ (अर्थात् मम समीपमागतः)। ततोऽस्य प्रमोदभरस्य तव भागं दातुमुद्यतावावामिह समागतौ, त्वं च युद्धं कुर्वाणोऽवलोकितः। ततस्तव शत्रवो निद्रापरवशाः कृताः, अयं च शूरकेशरी बद्ध्वा समानीतः, हे प्राणदानाद्वितीयकल्पवृक्ष! साम्प्रतमावां किं कुर्वस्तदाज्ञापय!। अथ प्रसन्नेन कुमारेण सनत्कुमारेण मुखकमलसमुन्मीलन्मधुसमूहमयं वचनं वक्तुमारेभे। भाग्यवशादेवाद्य युवां राक्षसीकवलग्रहान्निष्क्रान्तौ, भाग्येनैव चाहं भवद्भ्यामस्मात् संकटादाकृष्टः। साम्प्रतं तु प्रहारैः पीडितं द्वयोः सैन्ययोः प्राणिसमूहं क्षतरोहिणीनाम्न्या लतायाः रसैः शीघ्रतरं समुल्लाघयतम्। पुनश्च शत्रूणां सैन्यमिदं निद्रारहितं कुरुताम्, अमुं शूरकेशरिणं नृपं बन्धनान्मुक्तं कुरुताम्, शत्रोरपि विपत्तिर्मा भवतु। इत्थं राजकुमारसनत्कुमारस्यादेशस्ताभ्यां विद्याधराभ्यां शीघ्रं पालि-

रथगजाश्वपतीन् वीरान् सज्जीभवनायाज्ञापयत् । ततः प्रयाणशब्देन यथेष्टमाकाशे पूर्णे सेनासु सज्जमानासु भटेषु रणोत्कण्ठितेषु च तां यात्रां विजयदायिनीमवगत्य तत्राधिकोद्यमशाली कुमारः सनत्कुमारः समीपमागत्य मस्तकन्यस्तपाणी राजानमुवाच । हे पितः ! कीटसदृशे तस्मिञ्छत्रौ तव सैन्यवाञ्छा मा भवतु, किं तृणोत्पाटने गजशुण्डो कुण्डलीभवति ?। सूर्यप्रभावादरुणः ध्वान्तसमूहमिव, तव प्रसादादहमेव गत्वा शत्रूञ्जेष्यामि । यदि तस्मिञ्छत्रावपि स्वयं भवान् सैन्यं करोति तदा दानवेन्द्रे देवेन्द्रे च रोषादायाते किं करिष्यति ?। अत्र पुत्रस्य पराक्रमेण विनयेन च समुत्पन्नरोमाञ्चः स पृथिवीपतिर्नीतिप्रीतियुतां वाणीमवोचत् । नीतिशालिनो वीरा लीलालालितं पुत्रं भोग्येष्वग्रेसरं कुर्वन्ति संग्रामावसेर च पृष्ठतः कुर्वन्ति । चतुरा जना हृदयानन्दकरं वंशप्रदीपं स्वपुत्रं प्रहारपरम्पराव्याप्ते संग्रामे न शोभयन्ति । प्रभूतभाग्येन प्राप्तं वंशशोभायै रत्नसदृशं पुत्रं खड्गतरङ्गैः सङ्कुले संग्राममहासमुद्रे को नाम जनः क्षिपति ?। अतो हे पुत्र ! शत्रूञ्जेतुं स्वयमहं संग्रामं गच्छामि, भवांस्तावन्नगररक्षको भवितुमर्हति । अथ राजकुमारः सनत्कुमारो मुखचन्द्रकौमुदीसदृशीं चन्द्रविकासिकमलसदृशवीरजनहृदयानन्ददायिनीं वाचमुवाच, हे पितः ! ये निजं कवचदक्षं मत्वाऽऽग्रहेण पितुः स्कन्धाद्युद्धभारं धारयन्ति त एव सत्पुत्रा भवन्ति । वीराश्च तानेव पुत्रान् कुलदीपकान् मन्यन्ते, येषां प्रभावः शत्रुस्त्रीनिःश्वासैः प्रत्युत वर्धते । पृथिवीपतयो वंशभूषणरत्नानि कुमारान् खड्गपट्टसमूहवत्यां युद्धभूमावुत्तेजयन्ति । अतो हे प्रभो ! मां शत्रुविनाशायाज्ञापय । इत्थं कथयन्नसौ कुमारः सनत्कुमारोऽग्रकराभ्यां पितुश्चरणमग्रहीत् । अथ परमप्रसन्नोऽसौ भूपतिः कुमारमुत्थाप्य समालिङ्गय च शत्रुवीरविनाशाय स्वयं प्रैरयत् । कृतमाङ्गलिककार्यो धूल्याच्छादितसूर्यः प्रबलसैन्यसमेतः सोऽपि कुमारः शूरकेशरिनामानं भूपं प्रति चचाल । निजभारेण

कोटिं गतेयं शृङ्गारसुन्दरी खिन्नेव कदापि शीघ्रगत्या पदं नैव ददाति। निजगतितिरस्कृतराजहंसगमना सा सेवनीयमपि चन्दनादिकं निर्मलया बुद्ध्या सेवते स्म, न तु मनःकामविकारेण किञ्चिदपि। 'इयं कन्या क्रीडासु कदापि न मां सफलमकरो-दि'ति क्रोधयुतेनेव शैशवेन सा साम्प्रतं त्यक्ता (अर्थात् सा युवतीजाता)। तस्या योग्याय वराय कृताधिकोद्योगे राजनि साम्प्रतं समस्तभूपतीनां स्वरूपं चित्रेष्ववलोकयति सति निजमातृपितृसोदर्यमित्रादिविरहमसहमानेयं शृङ्गारसुन्दरी "विवाहं न कामयेऽह" मिति सखीः कथयति स्म। अथ तस्याः सखीनां मुखेभ्यस्तद्वचनं श्रुत्वा प्रसन्नताहीना मदनावली पुत्रीमङ्के समारोप्य सशङ्केन हृदयेनेत्थमवदत्, हे पुत्रि! त्वं वृथा विवाहोत्सवे वैमुख्यं क ' करोषि? निशाधिपं विना रात्रिरिव पतिं विना कामिनी शोचनीया भवति। चारित्र्यरहिता ज्ञानलक्ष्मीरिव पतिना विना रमणीयापि स्त्री न हि शोभते। पतिरहिता कामिनी पितृणां सदने तृणेभ्योऽपि लघ्वी भवति, तथा भ्रातृपत्नीनामपि "मुण्डी" (रांड) इति कथनीयतां प्राप्नोति (अर्थात् ताभिः पराभूयते)। कलारहितः पुरुषः, ज्वालाहीनोऽग्निः, जलरहिता नदी, भर्तृहीना च युवतिरिति चतुष्टयं क्वापि न सम्मानं प्राप्नोति। पतिरहितानां कामिनीनां पराभवाय बन्धुरपि तथा भवति यथाऽप्राप्तसूर्याणां कमलिनीनां पराभवाय जलोद्भवश्चन्द्रो भवति। तेन हेतुना हे पुत्रि! विवाहं कर्तुं श्रद्धां विधेहि! मम क्लेशं मा कुरु। यतो गर्भवासेऽपि त्वया दुःखलेशो न दत्तः। इति मातुर्वचनं श्रुत्वा सुधारसैरजेयं शृङ्गाररसजयनशीलं वचनं शृङ्गारसुन्दरीयमवोचत्, हे मातः! त्वया नीतियुक्तं वचनमभिहितम्, परन्तु गुणेनैकेनापि रहितः पतिः स्त्रीणां क्लेशाय भवति। यदि कुलं स्यात् तदा रूपं न स्यात्, रूपं स्यात् तदा निर्मलाः कला न स्युः, एतेषां त्रयाणामपि च सत्त्वे पुरुषेषु शीलं दुर्लभं भवति। अतो रूपवति कलावति कुलवति च पतौ शीलहीने सति स्त्रीणां

तस्तेन दूरीभूतसकलविकारं तत्सैन्यद्वयमुत्तस्थौ । ततो लज्जया नतशिराः शूरकेसरी भूपः सिंहराजपुत्रेण सनत्कुमारेणाधिकं सम्मान्य सत्कृत्य च त्यक्तः स्वनगरमगच्छत् । तेजस्विनोर्युवयोः सम्भूय सा वैताढ्यनगरी भीमनृपाद्भयवती माभूदिति कथयित्वा कुमारेण सनत्कुमारेण पूजितौ तौ विद्याधरौ शीघ्रं प्रागच्छताम् । ततो बलवतामग्रेसरः पदे पदे भूपतीनां समूहैर्वन्द्यमानचरणकमलः कृतार्थः स राजकुमारः स्वनगरं प्रति प्रत्यावर्तत् । एकस्मिन् दिने प्रयाणान्ते वस्त्रगृहे ('तंबू' इति भाषायां) विश्रान्ते प्रसन्नचितस्य राजकुमारस्य प्रतीहारेणेदं विज्ञापितम्, हे राजकुमार ! केनापि पुरुषेण सहितः पितृपादेन प्रेषितो जीमूतनामा दूतो द्वारि प्रतिषिद्धो वर्त्तते। ततो राजपुत्रेण कृतं नयनसङ्केतं ज्ञात्वा स प्रतीहारस्तं दूतं तं च पुरुषं सम्मान्य समानयत्। अथ दूतस्तं नरमग्रसात्कृत्वा प्रणम्येदमब्रवीत्, हे राजकुमार ! अयं पुरुषो यद्वदति तत् कर्तव्यमिति राजाज्ञा विद्यते ; अथ शोभायमानभ्रूलतेन कुमारेण सनत्कुमारेण वीक्षितः स चन्द्रवत्कान्तिः पुरुषो मनोहरं वचनमवोचत् । संसारे शोभातिशायिनी स्वलक्ष्म्या विजितदेवनगरी लक्ष्मीविलासगृहं वासन्ती नाम्नी प्रसिद्धा नगरी वर्त्तते। तस्यां नगर्यां देवराजतुल्यो नाभाङ्कनामा राजाऽस्ति यस्य हस्तकमले निवासेन जना लक्ष्मीं "पद्मवासिनी"ति जगदुरिव। तस्य नाभाङ्कभूपस्य शोभानामेकस्थानं चन्द्रमुखी कामदेवस्याप्यरूपा "मदनावली" नाम्नी प्रियाऽस्ति । तस्या गजगमना वसुधालब्धप्रख्यातिर्मुखपानमिलन्मधुकरा 'शृङ्गारसुन्दरी' नाम्नी पुत्री वर्तते । त्रिभुवनसुन्दरीभ्योऽपि रमणीयतमां तां "शृङ्गारसुन्दरीं" कन्यां गुणाः स्वयमितरग्रहणेच्छामनपेक्ष्य स्वीचक्रुरिव। असौ शृङ्गारसुन्दरी चन्द्रवन्निर्मलेन शीलेनैव राजते । अत्र मया किमिति विचार्य्य प्रीतिसमयेऽप्यस्या मुखाद्धास्यं बहिर्नागच्छति । बालिकाऽपि शीलस्य परमां

अभियुक्तिशुक्तिमुक्तागुणगणयुक्ताः श्रयन् कलाः सकलाः। उपलभरविपुलभारैः किमलङ्कारैः कृती कुरुते।१।

फलमविकलदुर्जपजपदुस्तपतपसोर्यदर्जयन्ति जनाः। तत्कृतये निजयुवतिषु सुकृतकृतः सन्तु सन्तुष्टाः॥२॥

अस्यार्थः—युक्तिरूपशुक्तिस्थितमुक्तासदृशनिर्मलगुणसमूहपूर्णाः सम्पूर्णाः कला धारयन् विद्वान् पाषाणसमूहसदृशाधि-
कभारवद्भिराभूषणैः किं विदधाति ?। जना निर्मलस्य कष्टसाध्यजपस्य दुःसाध्यतपसश्च यत् फलं प्राप्नुवन्ति तत्कार्याय पुण्य-
वन्तः स्वकामिनीषु सन्तुष्टा भवन्तु।। इत्थमार्याद्वयं तावन्मम प्रियमेव, परन्तु स शुकः कः? इति सनत्कुमारे विचारयति सति
स पुरुषः कथां पुनः कथयितुमारेभे। इत्थं शुकवचनं श्रुत्वा काऽपि सखी शृङ्गारसुन्दरीमवोचत्, अहो! ईदृशोऽपि कोऽपि युवा
संसारे दुःखनाशकोऽस्ति?—यस्य रूपं वंशं वयः शीलं गुणांश्चासौ शुको भ्रान्त्या कामदेवं " कुमार " इति संबोधनं कृत्वाऽ-
ऽर्यायुगलं पठनवोचत्। अथ रे शुककुमार ! त्वं कस्य कुमारस्यासि, यथार्थं वद ! येनाहं तव मनःकामितां फलपङ्क्तिं दद्याम्।
इति शृङ्गारसुन्दर्या तया हस्ते कृत्वा पृष्टः स शुको वारंवारममृतसिञ्चितानि श्रेष्ठानि काव्यान्येव पपाठ। ततः पक्षिणां स्वाभा-
विकी मानुषी चातुरी क्व ? इति विचारयन्ती सा यथाकथञ्चित् कामदेवपूजां विधाय स्वगृहं गता। परन्तु शृङ्गारसुन्दर्या मनो
न शय्यायां, न सखीजनवचने, न वने, न गृहे, न जले, न स्थले, कुत्रापि न शान्तिमलभत। अहो ! सूर्यस्य कान्त्या तुल-
नाकारकोऽस्या हृदये ज्वलन्विरहो निद्रां दूरीकर्तुं कामदेवस्य दिवसोदयं ददौ (अर्थात्तस्या हृदये काम उत्पन्नः)। रे
शुक ! स राजकुमारः क्व ? इति क्षणं क्षणं कथयन्ती सा शृङ्गारसुन्दरी कामदेवनोत्पन्नेन व्याधिना मत्तं मनो धारितवती।

कौमार्यमेव वरं। एकस्यां स्त्रियां रागरहितः पुरुषोऽन्यां कन्यामप्युद्वहेत्, परन्तु पतिविरक्तायाः स्त्रियास्तु मरणमेव शरणं नान्यत्किञ्चिदपि। अतो हे मातः! इत्यादिगुणानां दोषाणां च विचारणया निश्चलमनोवत्यहं कदापि विवाहं कर्त्तुं त्वया किञ्चिदपि न कथनीया। एवं मातरं निरुत्तरां कृत्वा कातरचित्ता सा शृङ्गारसुन्दरी शीघ्रमुत्थाय मातुर्वैलक्ष्यहरणाय प्रणाममकार्षीत्। ततस्तस्या विवाहोत्सवकार्येषु राजनि निरुत्साहे जाते सा कलासमूहशिक्षणैकसुखलीनाऽतिष्ठत्। एकस्मिन् दिने प्रमोदेन शान्तबुद्धिमतीयं शृङ्गारसुन्दरी रात्र्यन्ते स्वप्ने कल्पवृक्षस्य वामभागे स्वेच्छया स्थितमात्मानमपश्यत्। ततो विद्वांसस्तस्यै स्वप्नस्य व्याख्यामित्थं कथयामासुः, "यथाभिलषितपदार्थदाता यथाभिलषितः पतिस्तव प्राप्तो भविष्यती"ति। ततः प्रातःकाले परमानन्दवती सा शृङ्गारसुन्दरी पुष्पवाटिकामन्दिरं कामदेवं वन्दितुं मनुष्यविमानेन प्राचलत्। अथ मार्गे केनचिज्जनेन विक्रीयमाणं माणिक्यमयपञ्जरे स्थितं वचनचातुर्य्यपण्डितं कञ्चिच्छुकं सा सुन्दरी ददर्श। तं शुकं दृष्ट्वा तस्मै जनायाभिलषितधनं दत्वा शुकं क्रीत्वा पञ्जरादाकृष्य हस्ते धारयन्ती सा शृङ्गारसुन्दरी कामदेवस्य मन्दिरं जगाम। ततः श्यामरंगमरकतमणिसदृशश्मश्रुभ्रूकेशकनीनिकावन्तं नूतनप्रवालरचितचरणहस्तदन्तकान्तिशालिनं पद्मरागपत्रसमूहखचितनखपङ्क्तिं जीवद्भिरिवाङ्गैः काञ्चित्काञ्चित् क्रियां कुर्वाणं हसन्तमिवेषद्भिन्नौष्ठभागाद् दृश्यमानमौक्तिककन्दसदृशशोभं कृपाहसन्त्या दृष्ट्याऽग्रेसरानवलोकयन्तमिव मनोहररूपं सुवर्णसदृशं शरीरं दधानं कामदेवममुमसौ शुको दृष्टवान्, दृष्ट्वा चोत्पत्य कामदेवस्य समीपं ययौ। ततः शृङ्गारसुन्दर्याऽऽश्चर्येण दृश्यमान उत्कण्ठितोऽसौ शुकः कामदेवस्य मूर्त्तिं प्रतीत्यमवादीत्। हे कुमारराज! मह्यं शीघ्रं मनोऽभिलषितानि फलानि देहि!। अहं तव मनोहरमेतदार्याद्वयं पठामि, श्रूयताम्।——

मत्या प्रसन्नेन भूपतिना त्वमाज्ञापितोऽसि, तेन त्वं वासन्तीं पुरीं समागन्तुमुत्कण्ठितो भवताम्। 'अहं तस्मिन्नगरे नागच्छामि यतस्तया राजकुमार्याऽन्ये वृते ममापमानः स्या' दिति राजकुमारे सनत्कुमारे वदति सति स मन्त्रिपुत्रोऽवादीत्। हे वीरश्रेष्ठ! तया सुन्दर्या त्वं वरणीय एव, यतस्त्वयि दृष्टे ममाप्यत्र कामदेवोद्यानभ्रान्तिरभवत्। ईदृशस्वरूपवन्तं त्वां त्यक्त्वा सा राजपुत्री यदि कुमारमन्यं वृणोति तदा तव कोऽभिभवः? गुणवन्तमजानन्त्या तया च तर्हि किम्?। इत्यादिवचनसमूहैः स्वस्य मन्त्रिप्रभुत्वं दर्शयनसौ सागरो यशोरत्नाकरं सनत्कुमारं स्वनगरमानयत्॥

अथ समीपमागच्छता वासन्तिपुरीनायकेन सत्कारं कृत्वा स राजकुमारः सनत्कुमारो विमले गृहे संस्थापितः। तैर्मनुष्यैस्तत्र कान्तिमान् स राजकुमारो दृष्टस्ते मनुष्या अन्यस्य वीरस्यागमनं व्यर्थममन्यन्त। तस्मिन् समये चारश्रेष्ठास्तं राजकुमारं सनत्कुमारं समागतं शृङ्गारसुन्दर्यै कथितवन्तो भूरि गुणप्रशंसां च कृतवन्तः। अथ सा राजकुमारी सकलानां शूराणां वृत्तानि ज्ञातुं सायंकाले चम्पिकानाम्नीं सखीं प्रैषयत्। सा च गत्वा सर्वं वृत्तं विज्ञाय मध्यरात्रे समये समागत्य सुप्तां प्रफुल्लां सखीं ज्ञात्वा तां राजकुमारीमवोचत्। हे राजपुत्रि! राज्ञा प्रेषितया सत्कारकारकपदार्थधारिण्या शतसंख्यया स्त्रिया सहिताऽहं सकलानपि राजकुमारानपश्यम्। कामास्त्रमायासु तासु कामिनीषु गतासु सतीष्वमी वीराः कामचेष्टाकरणाय विविधां क्रीडां चक्रुः। कलासमूहमनोहरः कान्तिमान् नयनप्रियः कश्चित्कुमारः स्वस्मिन् नपुंसकत्वरूपकलङ्कं दधार। अन्यो राजकुमारः कलानां समूहं रूपं गुणानां समूहं च मदेन तथाऽदूषयद्यथा मद्यबिन्दुना दुग्धघटो दूषितो भवति। कश्चिद्राजकुमारः मनोकलारूपनद्यां प्रक्षालितां गुणस्युतां पटीमिव ('साडी' इति भाषायां) स्वकीर्तिं धूम्ययेन सुहृत्कोपेन मलिनामकार्षीत्। मनो-

क्रमशस्तिरस्कृताग्निशोभो विरहः कामदेवस्य दुःसहः प्रताप इव तां सुन्दरीं व्यकरयत् । तस्या विरहरूपक्लेशापनोदाय सख्यो यद्यच्छीतवस्तु तस्याः शरीरे ददुस्तत्तद्वस्तु कामानलेनेव शीघ्रं पतद्दुःखरूपमेव समभूत् । मन्ये मम शरीरेषु मन्तुमशक्यस्तापः सकलं भुवनं व्याप, अन्यथा चन्द्रकमलमाला उष्णाः किम् ?—हे रात्रिपते चन्द्र ! त्वं रात्र्या रहितो दुःखितो भवसि तत्कथं वियोगिनो भस्मसात्करोषि ? अथवा पुरुषाः स्वभावनिष्ठुरा भवन्ति । हे सख्यः ! कुमुदिनीस्नेहेन नीरे समागतं मम सन्तापकारकं चन्द्रं हस्तेन गृहीत्वा साक्षाच्चूर्णयत । हे कमलिनि ! निजस्वामिनः सूर्यस्य वियोगपीडां जानन्त्यपि त्वं मां कथं भस्मसात् करोषि ? हा ! कामिन्योऽपि कामिनीषु दयारहिता भवन्ति । हे सहचर्य्यः ! मम हृदयं स्फुटति, अथवा वेगेनाधिकं स्फुटत्विति सुष्ठु मन्ये, यदि मम हृदयगतः कामसदृशशोभावान् स राजकुमारो दृश्यत इत्यादि बहु वदन्ती मूर्च्छया वारंवार पतन्ती सुदती सा शृङ्गारसुन्दरी रोदनं क्रियमाणाभिः सहचरीभिरदर्शि । रे शुक ! मां त्यक्त्वा राजकुमारः कुत्र गच्छति ? तदनुमानं कुरु ! इति निद्राया अन्ते सा वारंवारं स्वप्नानकथयत् । समीपमुपविष्टा अत्यन्तखेदखेदितास्तस्याः सख्योऽश्रुभिर्धारायन्त्रपुत्रिकासमूहशोभां धृतवन्त्यः । अथेदं वृत्तं ज्ञात्वा भूपतिनाऽऽदिष्टैर्दूतैस्तं राजकुमारमवगन्तुं शुकविक्रयकर्त्ता नगरे मार्गितः । दूरभव्यैर्मनुष्यैर्निर्मलधर्मोपदेशकर्त्ता गुरुरिव जनैश्चिरकालपर्यन्तं मार्ग्यमाणोऽपि स राजकुमारः क्वापि न लब्धो बभूव । अथासौ मेदिनीपतिरिमं राजकुमारं कुत्राप्यप्राप्य शीघ्रं तस्य राजकुमारस्य प्राप्त्यर्थं स्वयंवरं प्रारभत । कुमारावस्थां त्यक्त्वा ये राजानः शीघ्रं राज्यं प्राप्तवन्तो ये च श्रेष्ठगुणशालिनो राजपुत्रा आसंस्तानसौ भूप आह्वयत् । हे स्वामिन् ! नयसारनाम्नो मन्त्रिणः सागरनामाहं पुत्रोऽस्मि त्वामाकारयितुं तव जनकस्य नगरं प्रेषितोऽस्मि च । हे चतुरकुमार ! तव विजयो-

सनत्कुमारश्चित्रं संहृत्य तं चित्रकारं सत्कृतवान्।
स्वशिरोऽकम्पयत् । अथ कामपीडितं स्वीयमात्मानं क्षणं संयम्य धैर्यगुणशाली स सनत्कुमारश्चित्रं संहृत्य तं चित्रकारं सत्कृतवान्। ततः कुमारोऽस्माभिः समर्पितं निर्मलं
ततश्चतुरः कुमारः प्रतीहारवचनज्ञातास्वस्मासु निर्मलं प्रसन्नं नयनं स्वीयं न्ययुङ्क्त । ततः कुमारोऽस्माभिः समर्पितं निर्मलं
माल्यकर्पूरचन्दनादिकं स्वगुणसमूहमिवाधिकसत्कारपूर्वकमग्रहीत्। ततो महाशयः स कुमारो दत्तेष्वासनेषु समुपविष्टाभिरस्माभिः
सह बहुकालपर्यन्तमुचितं वार्त्तालापं चकार । शृङ्गारसुन्दर्याः समीपे विद्वान् क्रीडाशुको वर्त्तते, स तव सभाया उचित
एवेति तस्मिन् समयेऽहं कुमारं विज्ञापितवती । अथ मयापि दत्तहृदयाश्चर्यः स शुकः पश्चात्त्यक्तोऽस्तीति कुमारेण कथिते
तस्य कश्चिच्चरोऽवदत्, यथा—स शुकश्चौरैर्माणिक्यपिञ्जरेण सहैव हृतोऽभूदिति, एतदाकर्णनेन स किञ्चिच्चिन्तातुर इव तस्थौ।
अथ चन्द्रमण्डले गगनमण्डपस्य कुम्भरूपीभवति सति (अर्थान्मध्यरात्रे) कार्यनिपुणः स कुमारः सनत्कुमारोऽस्मान्सत्कृत्य
प्राहिणोत् । लक्ष्मीक्रीडापर्वतसदृशो भुवनत्रयाश्चर्यकारकमनोहरचारित्रपात्रमीदृशोऽयं सनत्कुमारो राजपुत्रो जयति । स सनत्कु-
मारः क्वास्ते ? अद्यापि मां कथं न वदति ? श्रेष्ठकाव्यानि कथं न पाठयति ? फलानि कथं न ददाति ?। इत्थं चञ्चिपक्षा-
वचनं श्रुत्वा शुके कथयति विलक्षा सा शृङ्गारसुन्दरी वक्ष्यमाणमिदं वचनमब्रवीत् । हे सखि ! यत्र मामकीनं मनोऽनुरक्तं स तु
स एव सनत्कुमारोऽस्तीत्युत्कण्ठितस्य शुकस्य वचनेनाहं निश्चिनोमि । परन्तु चित्रगतां काञ्चित्सुन्दरीं दृष्ट्वा यदसौ शुकः
क्षोभं प्राप तेन सापत्न्यभयभीतं मम चेतोऽधुना कम्पते । हे हृदय ! यद्यसौ सनत्कुमारोऽपीदृशस्तदन्यं कं वरं मन्यसे ?
अस्मात् तु स्वयंवरोत्सवात् पूर्वं मम मरणमेवोचितम्, इत्थं सनिःश्वासं कथयित्वा सा शृङ्गारसुन्दरी शय्यायां लुलोठ, चञ्चिप-
क्षापि बहुकालपर्यन्तं भ्रमणवशात् परिश्रान्ता सती पार्श्वे एव शयनमकार्षीत् । अथ चित्रगतकामिनीवृत्तान्तश्रवणजनितक्लेश-

हरशरीरः कोऽपि किमपि ब्रुवाणः स्तब्धतया निश्चलीभूतो मया पाषाणरचितमनुष्य इव मूर्ख एव ज्ञातः । इत्थं ताभिर्नायिकाभिः सह राजकुमारसमूहं पश्यन्त्या तथा योग्यतानुरूपां तेषां प्रशंसां कुर्वन्त्या, शीलवंशरूपकलामयं यशो यस्य श्रूयते तस्य सनत्कुमारस्य सौधं सोत्कण्ठितया मयागतम् । तस्य राजकुमारस्य मुखदर्शनेन सञ्जातोत्कण्ठा वयं यावत् सद्मनो मध्ये गच्छामस्तावदिन्द्रेणाप्यनुपभोग्यं तेजो धारयन् विपुलैः कलावद्भिर्मनुष्यैः शोभितसमीपदेशः सज्जनचक्रचक्रवर्त्ती स राजकुमारः सनत्कुमारोऽवलोकितः । मस्तकपरावर्त्तनतया चञ्चन्मुकुटमणिकिरणैः कवीनां काव्यसम्पत्तेरारात्रिकं विस्तारयन्निव वचनगानकर्त्तॄणां गीतेश्चञ्चन्नखकिरणविस्तृतांशुवस्त्रां पताकां कल्पयन्निवाङ्गुलीं चालयन्नेवं रीत्या गुणवतामाश्चर्यजनकान् गुणान् गृह्णन् स सनत्कुमारो विस्मयजनकं दानं ददान ऋणमुक्तत्वं प्राप्तवान् । स राजकुमारस्तस्मिन् समये चन्द्रेण स्यन्दन्त्यामृतवृष्ट्या प्रेमप्रसन्नया दृष्ट्या सेवकानां सेवकत्वजनितखेदं दूरीचकार । तस्मिन् समये कुतूहली कुमारो यत्र यत्र दृष्टिं दत्तवान् स स वैज्ञानिकः स्वीयं स्वीयं विज्ञानं दर्शयामास । हे राजकन्ये ! तस्मिन् समये चित्रविद्यानिपुणः कोऽपि जनः कुमारस्य हस्ते चित्रपटं समर्पयत् । तं चित्रपटं दृष्ट्वा साश्चर्यः कुमारो लिपिकारकमपृच्छत्, यत्तस्याः कन्याया रूपशोभा चित्रचित्रिततुल्या वर्त्तते न वा ? । चित्रकार उवाच, चित्रेण सह तस्यास्तुलना क्व वर्त्तताम् ? यतश्चन्द्रस्य चन्द्रिका चित्रे रचयितुं केन शक्या ? । नेत्रयोर्विलासादिना विना चित्रकर्म तया राजकुमार्या सम क्वास्तु ? यस्याः कुमार्याः प्रतिविम्बमपि दृश्यमानार्धशरीरत्वादुपमारहितमस्ति । हे राजकुमार ! ईदृशी कामिनी भुवनत्रये क्वापि नास्ति । चित्रशास्त्रज्ञानाज्जगतां स्वरूपाणि हस्तवर्त्तीन्यस्माकं सन्ति । इत्थं तद्वचनं श्रुत्वा कुमारः सनत्कुमारोऽयं चित्रे तां कामप्यवलोकयन् कामदेवशरपीडित इव

कुमार्यां शून्येऽपि स्थाने कथिते स्वतेजःसमूहप्रक्षालितान्तःकरणः कुमारः सनत्कुमारः सत्यरूपेण तस्याः प्रत्यक्षतां जगाम। सोऽयं कुमारः सनत्कुमारः समागच्छति, जलपात्रं गृह्णीत, आचमनं दत्त, आसनं त्यजतेति ज्ञानी स शुकस्तं राजकुमारं दृष्ट्वा शृङ्गारसुन्दरीमवोचत् । अथ प्रमोदकल्लोलप्रेरितेव चम्पिका शीघ्रमासनादुत्थायासनं दत्तवती तथा च कुमारे तत्रोपविष्टे वचनमिदमब्रवीत। अद्यास्माकं जन्म सफलम्, अद्यतना रात्रिः सुमुहूर्त्तवती जाता, यद्दयालुना भवता स्वयमागत्यास्माकं गृहे

रितः । हे देवि ! अयं तव प्राणनायकः समागतो यस्तवेच्छयाऽऽदेशकारक इव शीघ्रतरं नेत्रयोर्गोचरतां प्राप । हे

! अस्य कुमारस्य दर्शनरूपामृतपानस्यान्तरायसदृशीं लज्जां दूरीकुरु। अस्य कुमारस्य वदननिशाकरे स्वनयनं

येहि । इत्युक्त्वा वारंवारं नयनमूर्ध्वीकृत्य राजकुमार्या विलोकितवदनं प्रसन्नमानसं राजपुत्रं सनत्कुमारं चम्पि-

हे वीरश्रेष्ठ ! इयं शृङ्गारसुन्दरी प्रमोदाश्रुजलमनोहरेण प्रफुल्लताराकिरणदूर्वादलयुतेन विस्तृतनयनेन तुभ्यमर्घ्यं

ाति सन्मानपूर्वकं पूजनं करोति )। तव स्वागतोचितं वस्तु भुवनत्रयेऽपि नास्त्यतस्त्रिभुवनप्रशंसनीया शृङ्गारसुन्दरी-

ल्यमस्तु ! हे वीरशिरोमणे ! स्वागतं ते, परन्तु दृढतरप्रतीहाररक्षितेऽत्रास्माकं गृहे प्रवेशं कुर्वतस्तव प्रतिबन्धः कथं

अथ कुमारः प्रकाशमन्दहासव्याजाच्छोभितकान्तिश्रेणीः दुग्धसमुद्रमुक्तापङ्क्तिसदृशीर्गिरोऽब्रवीत्। शुकवचनात्

सुन्दर्याः सखीं ज्ञात्वाऽहं विद्याप्रभावेणाप्रत्यक्षीभूय त्वया सहैवात्रागमम्। अत्रैव हरिणनयनायाः कण्ठपाशं छिन्दतो

यां नेत्रपथागतायां लज्जातुर इव चित्रपटः पतितः । तथा चात्र प्रेमपराधीनां भुवनत्रयनयनचन्द्रिकामिमां शृङ्गार-

पनकमात्मानं धन्यममन्ये। इत्यादि सुधासदृशोत्तमवचनं कर्णेषु कुमारे वर्षति बहिर्भूपतिप्रतिहारो मेघवज्जगर्ज।

समूहस्पर्शेन व्याकुलचित्ता तस्मिन् समये जीवनापेक्षया मरणमधिकफलं समवगच्छन्ती परिजनं निद्राधीनं ज्ञात्वा साहसं कृत्वा शरीरविनाशेच्छावती शनैः शनैः समुत्थाय सा राजकुमारी तत्रैव क्रीडादोलायाः कटके कण्ठबन्धनं कर्तुं पाशवत् स्वीयमुत्तरीयवस्त्रं बबन्ध । यदि ममास्मिञ्जन्मनि पतिर्नाभूत्तदा जन्मान्तरेऽपि तदनुरक्तमानसाया मम मदनुरक्तमानसः पतिर्भवतु । इत्थं कथयित्वा पश्चात् सा शीघ्रं कण्ठं पाशेऽक्षिपत्, ततो "हे बाले ! इत्थं मा मा कुरु !" इति वाणी प्रादुरभूत्, तथा च त्रुटितः पाशो भूमावपतत् । तदात्यन्तं तत्पतनादिवेगेन त्यक्तनिद्रा चम्पिका पाशात् स्वकण्ठमाकर्षन्तीं राजकुमारीं ददर्श । ततः "किमिदमभूदि"ति पृच्छन्त्यै शङ्कमानमानसायै चम्पिकायै राजकुमारी सकलं स्वीयं चरित्रमवोचत् । अथ "पृथिव्यामिदं किं पतितमस्ति?" इति समुत्थाय तं पतितं चित्रपटं हस्तेन गृहीत्वाऽवलोकयन्ती प्रसन्नमानसा चम्पिकेदं वक्ष्यमाणं वचनमब्रवीत् । हे देवि ! देवि ! स एव सुन्दर्याश्चित्रपटोऽयं स्फुटो वर्तते, हे देवि ! भाग्येन वर्धसे, यदत्र चित्रपटे त्वमेव चित्रिताऽसि । पुनश्च सनत्कुमारस्त्वय्येवानुरक्त इति कथयितुं त्वमेव चित्रगताऽसि । कथय ! कथं दुःखिनी भवसि ?। इति तस्याश्चम्पिकाया वचनामृतं पीत्वा पतिंवरा सा राजकुमारी तं चित्रपटमादायेदं वचनमकथयत् । हे चित्रस्थे शृङ्गारसुन्दरि ! त्वं सनत्कुमारसदृशसज्जनसङ्गात् प्रशंसनीयासि, यत्तु तद्वियोगेऽपि कान्तिं दधासि तदेव शोचनीयाऽसि । अहमपि धन्याऽस्मि, यच्चित्रस्थिताप्यहं तस्य कुमारस्य हस्तस्पर्शं प्राप्तवती, इत्थं कमलनयनी सा राजकुमारी सञ्जातरोमाञ्चा प्रसन्नाऽभवत् । किं चित्रपटगतं पतिमहमालिङ्गामि ? इति विचिन्त्य साऽऽलिङ्गनमिव तं चित्रपटं गाढं हृदये स्थापितवती । हे कुमारराज ! एनां चित्रपटगतां कामिनीं यद्यपि हस्तस्थां करोषि, परन्तु मम नेत्रयोरपि गोचरं नागच्छसि?। एवं तया राज-

रजःसत्त्वगुणवद्भिः स्वान्तैरिव स स्वयंवरमण्डपो नीलरक्तः शुभ्रै रत्नखचितस्तम्भकिरणैः शुशुभे। निश्चलायुष्मतां पुरुषाणां मुक्तैराकृष्ट इव स परममनोहरः स्वयंवरमण्डपः स्वर्गैकप्रदेश इव नगरविभूषणोऽभवत् । अत्यन्तोर्जस्वलोदयः समुद्भ्रान्तकामदेवरूपमहासागरगर्जनकान्तिर्वादित्रस्य ध्वनिर्मण्डपस्य दूरं यावद्विस्तृतोऽभूत् । तस्मिन् समयेऽखण्डशोभं तं स्वयंवरमण्डपं द्रष्टुं कुतूहलादिव पूर्वपर्वतशिखरभूषणः सूर्योऽभूत् (अर्थात् सूर्योदयोऽभूत्) । ततो रात्रिवृत्तान्ततेजस्विमगुणद्विगुदूतपङ्क्तिभिराकारिताः पृथिवीपतयस्तथालङ्करणालङ्कृता राजकुमाराश्च मञ्चसमूहमशिश्रियन्। चन्द्रोदये जाते त्यक्तशोभावाञ्छैः कमलैरिव राजकुमारेणकान्तिः सिंहराजपुत्रः सनत्कुमारोऽपि मञ्चसिंहासनमशोभयत्। तस्मिन् समये पृष्ठतो मनोहरं गीतं गायन्तीभिः सनत्कुमारे समागते राजकुमारीलाभाशारहितास्ते वीरा म्लानत्वमापुः। सखीभिः, पुरतश्च मनोहराः स्तुतीः कथयद्भिर्वन्दिनीलोकैः, इतस्ततो वेणुवीणाप्रभृतिवादित्रं वादयद्भिस्तज्ज्ञैः, उन्मदैर्हृदयस्पृहिभिरभिनन्द्यमानमानसा, अस्वीकारदग्धानि कृष्णरूपाणि धावमानानि तरुणानां मनांसि मालाभ्रमरव्याजाद्धस्तेन धुन्वाना, केशरधूलिमिषेण हृदये मातुमशक्यमुद्भ्रान्तं सनत्कुमारस्वरूपशोभानुरागं शरीरेषु धारयन्ती, भूपणझणत्कारशब्दैः कामदेवं नर्त्तयन्तीव, विकस्वरनयनक्रीडया रतिं हासयन्तीव, जगन्नयनचकोरकैः पीयमानवदनचन्द्रकान्तिः, "त्वं जीव त्वमाज्ञापये"ति कथयद्भिरालीलोकैः सेव्यमाना, चम्पिकाकरनिहतस्वयंवरमाला, मनुष्यविमानमुपविष्टा सा राजकुमारी शृङ्गारसुन्दरी स्वयंवरमण्डपं प्रविवेश। तस्मिन् समये राजकुमारीदर्शनाद्धैर्यरहितानां समुत्पन्नकामविकारव्याकुलमानसानां वीराणामनेकाः क्रिया अभवन्। तथाहि—कश्चिद्रसिको नृपस्तां राजकन्यां प्रसन्नीकर्त्तुमिव तच्चरणसदृशं क्रीडारक्त-

रे रे सेवकाः ! महाराजः समाज्ञापयति युष्मान्, अद्य मनोहरः स्वयंवरमण्डपो भवद्भिर्विरच्यताम् । अयि युवत्यः ! राजकुमार्याः शृङ्गारसुन्दर्याः स्नानादिकं कार्यं विधातव्यम्, यतः श्वः प्रभाते काले कल्याणप्रदः स्वयंवरमुहूर्त्तो वर्त्तते । यूयं शीघ्रतां कुरुत । चन्द्रविनाशको रात्रिदूरकर्त्ता सूर्यो युष्माकं पश्यतामेवाकाशं साम्प्रतमधिरोहति । इत्युक्त्वा तस्मिञ्जने विरते राजकुमारः स राजकन्यां प्रति प्रेमामृततरङ्गवतीं गिरमुवाच । हे राजकुमारि ! अहं सततं तव गुणाधीनमानसोऽस्मि, स्वप्नसंकथास्वपि मामन्यथा न त्वं शङ्कथाः । हे सुन्दरनयने ! गच्छाम्यहम्, सम्प्रति ममात्रावस्थानं नोचितं, मया स्वकीयं मनस्त्वयि सपर्यामयं त्यक्तमस्ति । एवं कथयित्वा स राजकुमारोऽन्तरधीयत् ॥

ततः सकलकार्यसम्पादनकारिका दास्यस्तां राजकुमारीं शृङ्गारसुन्दरीं समागच्छन् । ततस्त्वरावेगयुक्तगतिवन्तः सेवकाः स्वयंवरमण्डपं जग्मुर्गत्वा च शीघ्रं स्वयंवरमण्डपं मण्डनसमूहैः शोभयामासुः । तस्मिन् स्वयंवरमहोत्सवे मण्डपश्चञ्चलैर्वैजयन्तीरूपहस्तैर्दिशामधिपानाकारयन्निव रराज । तस्मिन् मण्डपे सकलभुवनचित्ते मोहरूपदिनस्योदयाय सूर्यसदृशास्तीक्ष्णशोभाः सुवर्णकलशाः शुशुभिरे । तत्र मण्डपे मनोहरतोरणस्तम्भाश्रिता वन्दनमालिका निसर्गचञ्चलाया लक्ष्म्याः क्रीडाकरणदोलायाः कलां धृतवत्यः । तस्मिन् मण्डपे मुक्तामालम्बतारामनोहरास्तेजस्विकान्तयः कामदेवविस्तारसमर्थाश्चन्द्रोदयाः ('चन्दरवा' इति भाषायाम्) शुशुभिरे । तत्र स्वयंवरमण्डपे चञ्चदुच्चप्रपञ्चेषु मञ्चेषु कामदेवस्य यन्त्रशस्त्रैरिव विस्तीर्णैः कुसुमसद्मभिरशोभि । तत्र च मण्डपे मौक्तिकचतुर्द्वारतोरणशोभायमानकस्तूरीमण्डलव्याजात् कामदेवमित्राणि रात्रयः सनक्षत्राः समागताः । तत्र मण्डपे जगदानन्दसमुद्रवर्धकाः नीलकमलभृतः शुभ्रा मङ्गलकलशाश्चन्द्रशोभां दधुः । मनुष्याणामपहारितैः स्फुरत्तमो-

शाली भूपोऽन्ये राजभिर्भुज्यमानां वसुन्धरामप्युपेक्षते । हे गमनमनोहरवरले ! चञ्चले ! अमुं हंसं नृपं वृणु ! तथा नञ्चल-
भागिरथीकल्लोलेषु क्रीडार्थं हंसपक्षिसहगमनकारिणी भव ।। पूजनीयस्य वंशे जातः जनोऽपि पूजनीय एवेति राजकुमार्यी
कथिते जया प्रतीहारी पुरतोऽभिगत्य तामिदं जगाद । अयं तरुणो जयन्तनामा पृथिवीपतिर्विजयते, बलशालिनामपि शत्रूणां
जेता बलवानयोध्यानगरीपतिरयमस्ति । विजययात्राविहार्ययं भूपो निजां कीर्त्तिं भयद्रुतशत्रुदुर्यशःकस्तूरीपूरितशोभानामा-
शानां हारीचकार । हे राजकुमारि ! यदि विलाससमये सरयूकूलमनोहरवायुसेवनेच्छा वरीवर्त्ति तदाऽमुं भूपं वृणीष्व ।।
यथा वसन्तर्त्तौ मालती स्नेहं न करोति तथैव मन्मथशोभादेदीप्यमाने सूर्यतेजोवत्यप्यस्मिन् राजनि सा राजकन्या स्नेहं न
चकार । अथ द्वित्राणि पदानि गत्वा जया राजकन्यामुद्दिश्याब्रवीत् । अयं प्रख्यातो विस्तीर्णलक्ष्मीवान् मथुरानाथः पृथुनामा
नृपः । अमुं नृपं चित्रकारा अपि चित्रे लेखितुं नार्हन्ति, ज्ञानिनोऽपि भूपस्यास्य रूपं चित्तेऽपि धारयितुं न पारयन्ति । अयं पृथु
राजा निजतेजोरूपरविकिरणसन्तप्तां पृथिवीं सततं श्रेष्ठैश्चन्दनरसैरिव यशोभिः सिञ्चति । चञ्चद्यमुनाजलविन्दुसमूहोचिता
वृन्दावनभूमिस्तुभ्यं रन्तुं यदि रोचते तदाऽमुं महीपतिं वृणीष्व ।। अस्य नृपस्य वदनं शोभात्यक्तं दृष्ट्वाऽस्मिन् राजनि कन्यां वाञ्छा-
रहितां मन्यमानाः शिबिकावाहाः पुरतो ययुः । अथ जया प्रतीहारी बभाषे । हे देवि ! भुवनविजयकर्त्र्यां उज्जयिन्या
नायकः सम्पदां स्थानं जयनामाऽयं राजा विजयते । अहो ! अयं राजा दिग्विजयसमर्थसैन्यभारपरिश्रान्तां पृथिवीं कमलदण्डसम-
दोर्युगले स्वहस्ते वहति । हे वरवर्णिनि ! लघ्वीकृतोद्धतरिपुममुं राजानं वृणु, तथा महासागरवसना वसुन्धरा तव सपत्नी
शोभताम् । अस्मिन् राजनि स्वदण्डसदृशीमविकस्वरनयनां तां नृपसुतां विलोक्य ते शिबिकावाहा विमानमन्यप्रदेशं निन्युः ।

कमलं स्वमस्तके धृतवान् । अस्य स्थाने त्वां स्थापयिष्यामीत्यस्यै राजसुतायै कथयन्निव कश्चिद्राजा निःसीमं निजमुकुटमणिं पस्पर्श । तां राजकुमारीं प्राप्तुं कङ्कणरथान् नवग्रहान् पूजयन्निव कोऽपि भूवल्लभः क्रीडया स्वकङ्कणे हस्तकुसुमानि स्थापयामास। कश्चिद्धरणीरमणोऽग्रे स्थितस्य मित्रस्य वेणिं हस्ते बिभ्राणस्तस्यै स्वं वशंवदं कथयितुं सर्पं दिव्यं विदधन्निव बभौ । कश्चिद्राजकुमारो नतमस्तकत्वेन तस्याः सान्त्वे प्रवेशं कुर्वन्निवाधोमुखः सन् पादसमीपोपविष्टान् सुहृदो बभाषे । इतरः कोऽपि कामदेवस्य शरेण हृदयेऽत्यन्तं कृतप्रहार इवेमां राजकन्यां पश्यन् मस्तकं कम्पयामास । अन्यश्च राजकुमारस्तां परयोग्यां ज्ञात्वा नम्रवदनो निःश्वासं मुञ्चन्निव मालापरागेण व्याप्ते हृदये वदनवायुं चिक्षेप । तव वदनं चन्द्रवत्सुन्दरमस्तीति तां राजकन्यां निवेदयन्निवान्यो राजपुत्रः क्रीडाकमलदलश्रेणिं मुष्ट्या न्यमीलयत् । राजकुमारीशरीरेष्वर्पितनयनः सञ्जातरोमाञ्चः कश्चिद्राजसूनुर्नखाङ्कुरैर्हैमं केतकीपत्रं विलिलेख । राजकुमारीविलोकनोत्पन्नस्वेदविन्दुसमूहव्याप्तः कश्चन राजपुत्रः "अहो ! अयं संघर्षस्वेद" इति हृदयस्मितान् सुहृदो बभाषे । कोऽप्यत्र तत्क्षणं मन्मथेन क्षिप्तं बाणं द्रष्टुमिव तां मृगनयनां वीक्ष्य हृदये दृष्टिं स्थापयामास । एवं प्रकारेण विविधचेष्टां कुर्वतां भूपतीनामग्रमार्गे जयानामप्रतीहारी पतिंवरां राजकुमारीमानिनाय ॥

अथ वादित्रादिकं प्रतिषिध्य भूभर्त्तॄनवलोकयन्ती चञ्चलभ्रुकुट्यग्रभागा सा जया शृङ्गारसुन्दरीमवोचत् । हे नेत्रकुमुदचन्द्रिके ! तवाधीना एते बहवो धरणीपतयः समाजग्मुः, एषु कमपि भूजानिं चन्द्ररूपं त्वं विधेहि ! । हे देवि ! श्रीनाभिराजस्य पुत्रस्य वंशे समुत्पन्नो महायशस्वी सोऽयं हंसनामा काशीपुरमहेन्द्रोऽस्ति । अयं हंसनामा राजा दिवसे जगतां समक्षाणि रात्रौ च स्वप्नमयानि सुरपूजावितरणादीनि कुर्वन् विश्रामं न प्राप्नोति । केवलं धर्मकर्मैककरणव्यसनवानयं शक्ति-

प्राप्नोति। तस्य सिंहनृपस्य शरीरजन्मा किरणप्रकाश इव तत्र यौवनस्वरूपयोर्योग्योऽयं सनत्कुमारो राजते। अस्यान्तःकरणे
यथेष्टं मातुमशक्याः सदाचारवन्तो निर्मला गुणा आकाश इव गम्भीरेऽस्य चित्ते तारागणव्याजात् तिष्ठन्ति स्म "अहं
कमलवासिन्यस्मी"ति विचार्य शत्रोर्लक्ष्मीः समरेऽनुपमकान्ति कमलमिव तेजस्विनमस्य पाणिं गृह्णाति। सकलानां कलानां
स्वीकारेऽनुरक्तो गुणानां समुपार्जने समासक्तोऽयं राजकुमारस्तत्कार्यविनाशभयेनेव पूर्वं पाणिग्रहणं नाकरोत्। अयि सुन्दर-
शरीरे! अस्य राजकुमारस्य कण्ठे वरमालां स्थापय! सदृशवरप्राप्तित्वात् त्वां देवा अपि प्रणमन्तु। अथ समुत्पन्नरोमाञ्चे
स्वेदबिन्द्वार्द्रं शरीरं बिभ्राणा राजकुमारी शृङ्गारसुन्दरी चम्पिकया दत्ते वरमाल्ये कम्पमानं स्वीयं हस्तकमलं न्यस्य पुनर्वरे
वाष्पभरितां दृशं शनैः शनैः ददौ तदाचेयं मञ्चस्थं सनत्कुमारयुगलं ददर्श। अथ द्वौ सनत्कुमारौ विलोक्य सपदि राजसमूहे
विस्मयाकुलमानसे, "कं वृणोमि!" इति वारंवारं राजकुमार्यां विचारयन्त्यां 'हे राजपुत्रि! अयं मम समीपमुपविष्टः
कोऽपि धूर्त्तस्तन्मां वृणीष्वे'ति तयोर्द्वयोर्मुखात् तदा तुल्यं वचनं निस्ससार। ततो यो यथार्थः सनत्कुमारोऽस्ति स मम
हृदये स्थितोऽस्ति तदहं निजकण्ठनिहितयैन मालया तं सनत्कुमारं वृणोमीति दृढं वचनं सभोपविष्टाङ्गनाञ्छ्रावयन्ती शृङ्गा-
रसुन्दरी स्वकीये कण्ठे वरमालां निहितवती। इत्थं शृङ्गारसुन्दर्या बुद्धिचातुर्याद्विच्छायवदने मायामये सनत्कुमारेऽदृश्यं
जाते स सत्यः सनत्कुमार एक एवाभूत्। कपटविजयाद् गुणिनो वरणादस्यां गुणज्ञायां नृपसुतायां त्यक्तेर्ष्ये राजसमूहे जयजय-
शब्दः कृतः। स्वयंवरदर्शनार्थमागतैर्देवयूथै राजकुमारीचातुर्यप्रसन्नै राजकुमारीमस्तके कुसुमवृष्टयश्चक्रिरे। अथ प्रमोदमार्गामन्द-
पथिको नाभाकराजपुत्रः सन्मानानन्दितैर्भूपतिभिः समेतस्तयोः शृङ्गारसुन्दरीसनत्कुमारयोः कामदेवनिकस्वरोत्साहं विवाहो-

अथ पुनर्जया बभाषे । हे देवि ! धनुर्विद्याविचक्षणराजं पाण्डुवंशोत्पन्नममुं दर्पकनामानं भूजानिमवलोकय । स्वप्नेषून्नतायुधममुं राजानं दृष्ट्वा त्यक्तनिद्राः शत्रवोऽस्य भ्रान्त्या चित्रशालायां चित्रितकामदेवं प्रणमन्ति । एलाविपिनमनोहरेषु समुद्रस्य तीरेषु ताम्रपर्णीनदीमौक्तिकवालुकासु यद्यनुरागस्तवास्ति तदा हे सुन्दरनयने एनं नृपं वृणीष्व, घनसारमलयजामोदिता वायवस्ते मानसमानन्दन्तु । अस्माद्राज्ञोऽस्याश्चपलनेत्रायाः सरलं विलोकनमवलोक्य विनयवती जया किञ्चिच्चलित्वा तां राजकन्यामिदं वचो बभाषे । हे देवि ! विविधगुणगरिष्ठोऽसौ काश्मीरदेशनायकश्चित्राङ्गदनामा राजा कस्मै मुदं न ददाति ? । अस्य राज्ञोऽन्तःपुरं किं प्रशंसामि ? याः स्त्रियः स्वप्ने प्रतिविम्बरूपेऽपि चित्रे स्वामिनममुं स्पृशन्ति ताः कामिन्योऽपि प्रशंसनीयाः । अतो हे चपल-नेत्रे ! अमुं राजानं वृणु, भूपोऽयं च शुद्धान्तरमणीषु सततं कृताभ्यासं चित्रं तव कपोले विलिखतु । सरस्वतीपूजनोत्तमकाव्य-कर्त्तुरस्य भूपस्य प्रेमयोग्याः स्तुतीः केसरकलिका इव सततं श्रवणयोर्धारय । अथ यो जनः पूर्वमेव कृतविवाहोऽस्ति स परपुरुष एव ममास्तीति कोमलस्वरा राजकुमारी प्रतीहारीमवोचत् । तत उत्तमनादवती जया, यथा विपिनभ्रमरी पुष्पं दृष्ट्वा दृष्ट्वा गच्छति तथा परं परं राजानं प्रणम्य प्रणम्य जगाम । यथा भागिरथीतटगमनोत्सुका हंसी जलाशयान्तरे न तिष्ठति तथा सनत्कुमारे बद्धस्नेहा सा राजकुमारी तेषां राज्ञां समीपे न तस्थौ । लक्ष्मीरिव सा राजकुमारी यस्य यस्य राज्ञः पुरतो जगाम स स भूपतिः प्रभावानभूत्, यं यं च सा तत्याज स स विच्छायवदनोऽभूत् । ततो राजकुमार्या पूर्वमेव दृष्टिरूपया वरमालया वृतं सनत्कुमारं समेत्य जया बभाषे । जम्बूद्वीपस्य लक्ष्म्या मस्तक इवात्र भरतखण्डे श्रीकान्ताभिधाना नगरी मुकुटसाम्यं प्राप्नोति (अर्थात् तद्वच्छोभते) । तस्यां नगर्यां त्यक्तभयः कलाभिर्दर्पणीकृतः सिंहनामा भूजानिर्मुख्यमाणिक्यसादृश्यं

जनन्याऽनुधावितं, मृतेऽस्मिन नगरादस्माद् रूपं लज्जा सुनृता वाणी शीलम् पराक्रमो दानमिमानि षड् गतानीति लोकैरभिनन्दितं, सदैव गमनं कर्त्तुं विहितसकलशृङ्गारया दानं कुर्वन्त्या अश्वारूढया वैधव्यभयवत्या स्त्रियाऽनुव्रजितं, निजजातीयजनैरुत्पाटितं, कौसुम्भवस्त्रेणाच्छादितं, मृतं पूजितं पुरुषं सस्त्रीकः सनत्कुमारो ददर्श। तस्मिन् मृतके किञ्चिदतिक्रान्ते शोकानुत्पत्तिसत्तमं "मनुष्यस्यास्य मरणयोगो नैवास्ती" ति सहगमनकारकैः सह वदन्तं शान्ताकारगमनचित्तं समीपस्थं नरं स्वयमेव विहितासनं स सनत्कुमार इत्थं पृच्छतिस्म, त्वं नगरनिवास्यपि पश्चात् कथमागतः शोकरहितश्च कथमसि? "अस्य मरणसमयो नास्ती" ति सहानुगतैरेभिर्जनैः कथं वदसि?। अथायं गुणैः प्रशंसनीयः कोऽपि निश्चयं पृथिवीपतिपुत्रो जिनभक्तानां वार्त्तानां योग्य इति विचार्य सोऽवदत्। हे देव! भवत आकृतित एव कुलं विज्ञायते, पुनर्वृत्तान्तप्रश्नेन प्रत्यक्षं समर्थत्वं विभाव्यते। हे चतुरपुरुष! सकलवृत्तान्तकथनपात्रं त्वमसि, त्वं मामकीनं विमर्शवर्म वचनं शृणु। आनन्दनामाहं धर्मकर्मणि प्रमोदी नन्दिग्रामालयेऽत्र नगरे वास्तव्यो वस्तुव्यापारकर्त्ताऽस्मि। सम्यक्त्वमूलानि गृहस्थव्रतानि पालयन् प्रतिमा वहिष्ये अमूरेकादशविधाः तद्यथा—सम्यक्त्वेऽतीचाररहितो गृहस्थस्त्रिकालं मासमेकं यावज्जिनमर्चेत् सा प्रथमा "दर्शनप्रतिमा" भवति। मासयुगलेन पूर्वोक्तस्य क्रियासहितस्य गृहस्थस्य शुद्धाणुव्रतानि परिपालयतो द्वितीया "व्रतप्रतिमा" भवति। पूर्वकथितक्रियायुक्तस्य गृहस्थस्य मासत्रयं यावद् द्विसन्ध्यं सामायिकं सेवितं भवति सा तृतीया "सामायिकप्रतिमा" भवति। यत्र श्राद्धो मासचतुष्कं यावत् क्रियान्वितश्चतुष्पर्वसु चतुर्विधं पौषधं दधाति सा चतुर्थी "पौषधप्रतिमा" भवति। निर्मलाभिप्रायो मुक्तस्नानोऽचित्तभक्षणकर्त्ता दिवा ब्रह्मचारी रात्रौ च निजस्त्रियां विहितप्रमाणः श्राद्धश्चतुष्पर्वसु पौषधयुक्त एकरात्रिकीं प्रतिमां वहति सा

त्सवं चकार, यस्य विवाहोत्सवस्य दर्शनादिवेन्द्रोऽपि सहस्राक्षोऽभवत्। शृङ्गारसुन्दर्याऽवलम्बितहस्तपल्लवः कुमारः सनत्कुमारः कल्पलतया पारिजातवृक्ष इवाधिकं शुशुभे। अथ कृतार्थेन वासन्तीनगरपुरन्दरेण कृतसत्कारा राजानः स्वयंवरमहोत्सवानन्दितहृदयाः सन्तः स्वं स्वं नगरं ययुः। नूतननूतनोत्सवैः मीतमानसः सनत्कुमारः कानिचिद्दिवसानि शृङ्गाररससमुद्रे श्वशुरस्य गृहे तस्थिवान्। "स मायाकारकः कथं विज्ञातुं शक्यः" इति चिन्तैकचिह्नितस्तस्य प्रमोदश्चन्द्र इव प्रतिदिनमैधिष्ट॥

अथ यथाकथञ्चिद्वासन्तीपुरपुरन्दरस्यानुमतिं प्राप्य सनत्कुमारः प्रियासमन्वितः स्वनगरं प्रति चचाल। क्रमशो वर्त्म विलङ्घयन् स सनत्कुमारः कतिभिश्चिद्दिवसैः स्वर्गवन्मनोहरे नन्दिग्रामाभिधाने नगरेऽगमत्। अस्मिन् नन्दिग्रामे समीपस्थे निविडशाद्वलेऽतिस्वादुजलवत्या नद्यास्तीरे राजपुत्रस्य निवासस्थानमभवत्। तत्र तटे शृङ्गारसुन्दरीसहितः कृतचञ्चलतरङ्गमज्जनः सुन्दरकमलाभरणः सनत्कुमारः सपरिवारो यावद्भोजनं कर्त्तुमुपाविशत् तावत् कुतोऽपि श्रवणदुष्टं नीरसं वादित्रमश्रोष्यत्। एतत्किमस्तीति दुःखपीडितैर्भुक्तभक्षणपात्रैः परिच्छदजनैर्जवनिकाञ्चले ऊर्ध्वीकृते—हा! निजवंशसद्मस्तम्भ! हे नयनानन्दकर! हे पुत्र! क्व यातोऽसि? इति पित्रा वारंवारं शोच्यमानं, हे निजगुणप्राप्तख्याते! हे भ्रातः! इमं भ्रातृसमूहं मुक्त्वा कथं गच्छसि? इति क्रियमाणविलापैर्भ्रातृसमूहैः परितः परिवेष्टितं, रे दैव! अस्माकं मनोरथैः सहेमं किमसमय एव संहरसि? इति प्रबलफुत्कारकारकैः स्वजनैः परिवृतं, हा! हा! हताऽस्मि! कस्य मङ्गलकार्यं विधास्ये? इति विलापान् विदधन्त्या साश्रुनेत्रया भगिन्या सहितं, रे कठोरहृदय! त्वं सहस्रधा कथं न भवसि? इति वक्षस्ताडयन्तीभिर्भ्रातृपत्नीभिर्गुरुकृतं, हा पुत्र! मम वचनं यच्छ! हा पुत्र! वदनं निजं दर्शय! इति विलापं कुर्वन्त्या वारंवारं प्रधावन्त्या मूर्च्छां गच्छन्त्या

कथितं यज्जैनशासने प्रख्यातमिदमस्ति यत्सर्पेण दष्टस्य जनस्य पञ्चमी, षष्ठी, अष्टमी, नवमी, चतुर्दशी, अमावास्या चैतास्तिथयो मृत्युप्रदायिन्यः सन्ति। सर्पदष्टस्य प्राणिनः सूर्य–मङ्गल–शनैश्चरदिनानि, प्रातःसन्ध्या सायंसन्ध्या तथा संक्रान्तिसमयो मृत्यवे सन्ति। भरणी, कृत्तिका, अश्लेषा, विशाखा, मूलं, अश्विनी, रोहिणी, आर्द्रा, मघा, पूर्वात्रयं चैतानि नक्षत्राणि सर्पदष्टस्य प्राणिनो मृत्युप्रदानि सन्ति। सर्पेण दष्टस्य यस्य जलं स्रवन्तश्चत्वारो दंशा यदि सरुधिरा दृश्यन्ते तदा स नूनं मृत्युं लभेत। अथवा दष्टस्य प्राणिन एको दंशः सशोणितच्छिद्रवान् वायसचरणाकारः शुष्कः कृष्णोऽथवा त्रिरेखश्च मृत्युं सूचयति। सचक्राकारः समन्ततः शोफयुक्तः सङ्कुचितवदनो दंशोऽत्रसंसारे जीवितं नष्टं स्पष्टयति। केशान्ते, शिरसि, ललाटे, भ्रूमध्ये, नेत्रे, कर्णे, नासिकाग्रे, ओष्ठे, चिबुके, कण्ठे, स्कन्धे, हृदये, स्तने, कक्षायां, नाभिकमले, लिङ्गे, सन्धौ, हस्तचरणतले, गुदे च दष्टः प्राणी यमजिह्वया स्पृष्टो विज्ञातव्यः। हे पुरुषश्रेष्ठ! उपरिकथितानामेषां मध्यादस्य किञ्चिदपि विरुद्धं नाभूत्, येनासौ नागनामा पुरुषः सर्पान्नाशं प्राप्नुयात्। किन्त्वस्मिन् नन्दिग्रामे कोऽपि लोकोत्तरो मान्त्रिको न वर्तते, लवणसागरः किं कर्पूरलक्ष्म्याः समूहं पूरयेत्? इत्थं कथयन्तं विहितप्रमोदमानन्दं दिग्गजदशननिर्मलबुद्धिः स राजकुमार प्रत्यब्रवीत्। हे कलानिपुण! त्वयात्र यो लोकोत्तरो मन्त्रवादी कथ्यते स कः? एवं राजकुमारे पृच्छति स आनन्द उवाच, यो विषाणामौषधैर्मन्त्रैश्चिकित्सां चिकीर्षति स सज्जनानां माननीयो लोकसामान्यो मान्त्रिको ज्ञायते। परन्तु शुद्धतपोध्यानैः सिद्धलब्धेर्यस्य प्रभावाद्विषदोषा नष्टा भवन्ति स लोकोत्तरो मान्त्रिकः कथ्यते। किमीदृशोऽपि कल्याणकरः कोऽपि कुत्रापि दृश्योऽस्तीति विस्मितमानसे राजकुमारे कथयति शोककोकरजनीकरो वादित्रमनोहरध्वनिविस्ता-

पञ्चभिर्मासैः "पञ्चमी प्रतिमा" भवति । पूर्वकथितविधेः षण्मासैर्ब्रह्मचारिव्रतिनः " षष्ठी प्रतिमा " भवति । तथा सकलं सचित्तं मुञ्चतो ब्रह्मचारिणः सप्तभिर्मासैः " सप्तमी प्रतिमा " भवति । स्वयं समारम्भे मुक्ते सत्यष्टभिर्मासैः "अष्टमी प्रतिमा " भवति । अन्यैरपि समारम्भेऽकृते नवभिर्मासैः " नवमी प्रतिमा " भवति । यत्रोद्दिष्टविहितभोजनत्यागकारकस्त्यक्तद्रविणः शिखामात्रधारी मुण्डीव श्राद्धो मासान्दश गमयेदसौ " दशमी प्रतिमा " भवति । यत्रैकादशमासांल्लुञ्चितकेशोऽथवामुण्डितकेशो रजोहरणसमन्वितः पात्रयुक्तश्च, "एकादशप्रतिमाधारिणे मह्यं भिक्षां यच्छ" इति वदन् स्वजातावेव विचरति सा " एकादशी प्रतिमा " ज्ञेया । तत्सम्यक्त्वसहितान्यणुव्रतानि विशेषतया रक्षमाणोऽहं साम्प्रतमेतासु प्रतिमासु दर्शनप्रतिमां वहमानोऽस्मि । तत्र दर्शनप्रतिमां प्रभाते मध्याह्ने तथा सायन्तने काले त्रिभुवनार्चनीयो जिनो मासमेकं यावद्यथाविधि पूज्यते ततोऽद्य मध्याह्ने जिनेश्वरस्य सपर्यां विधायागमसतो लोकाचारेऽहं पश्चाद्गतिकोऽभूवम् । निजकर्मतः शान्तेश्चोरकाननन्तान् संसारान् भ्रमतः कोऽपि कुत्रापि केनापि सम्बन्धेन ममाभूत् । अतः कस्य मृतस्य जनस्य शोकमहं करोमि ? अथवा शोके कृते किं भवेत् ? तत एव बहलोऽपि शोको मां न दुःखीकरोति । " अस्य मृत्युयोगो नास्ती " ति यन्मया प्रसङ्गवशात् कथितं तत्र हे राजकुमार ! कारणं श्रूयताम्—

अस्मिन् नन्दिग्रामेऽम्बिकाभिधानया स्त्रिया परिपालितगृहस्थधर्मो ग्रामाग्रणीः सारङ्गाभिधान एकः कौटुम्बिको वर्त्तते । तस्य पुत्रो नागनामाऽभूत् । अतीतदिने सायंकाले विपिने पुष्पाणि चिन्वन्तं तं दुष्टः सर्पोऽदंशत् । ततो निपुणैर्मन्त्रवादिभिर्भिषग्वरैश्च परिरक्ष्यमाणोऽप्ययं जनो दीर्घनिद्राधीनां दशां (मृत्युं) प्राप्तवान् । कपटरहितैर्ज्ञानिभिर्गुरुभिः कथान्तरे मे

न्दा मुख्यं तच्चार्थमित्थमब्रवीत् । यथा गुणेषु विनयस्तथाऽर्थेषु धर्मः प्रशस्यते, यथा जीवं विना शरीरं तथा धर्मं विना पुरुषो
ऽयर्थः । सर्वसामग्रीवानपि मनुष्याणां भवो धर्मं विना न प्रशंसनीयः, मनोहरोऽपि देवरहितः प्रासादो विद्वद्भिर्न प्रणम्यते ।
यो धर्मश्चिन्तितं स्वल्पं सुखमचिन्तितमधिकं सुखं ददाति स चिन्तामणिर्धर्मो मामकीने हृदये चमत्कारमुत्पादयति । सज्जना यदि
संसारग्रीष्मकष्टदतरङ्गसन्तापिताः सन्ति ततो धर्मसुधायां कृतस्नाना भवन्तु । तस्मिन् समये मुनिराजस्य विलोकनादाश्चर्यविकसि-
तलोचनः श्रेष्ठभक्तिमान् सनत्कुमारः कृताञ्जलिरवोचत् । हे प्रभो ! योऽद्भुतो धर्मो भवद्भिः प्रशस्यते सोऽयं धर्मो गृहस्थैर्म-
नुष्यैः क्रियमाणो भवेन्नवेति ? । यथाविधि कृतो धर्मः सकलानां भव्यप्राणिनां भवेदिति यतिराजस्य कर्णामृतं वचनं समाकर्ण्य
ग सनत्कुमार उवाच । यद्येवमस्ति तन्माननीयैरिदं श्रेष्ठतमं यौवनं वयः, इदं च मनोहरं रूपं तिरस्कृत्य कथं व्रतमङ्गीकृतम् ? ।
अथ भुवनप्रमोददाता यतिराजः प्रथितसागरगम्भीरशब्दं वचनमब्रवीत् । दुष्कर्मबन्धरूपवंशोत्पन्नः, मोहरूपधूमयुक्तः, चतुरजन-
पतत्रिसमूहगीड्यः, समीपस्थात्मतापकारकः, असाध्यगदस्फुलिङ्गभयङ्करः, क्लेशरूपत्राद्(तडतड इति)शब्दकर्त्ता, असत्यज्ञानवायुप्रे-
रितः, सकलानां शोषपोषकारकः, मिथ्यादृष्टिमूर्खालसैर्मोक्तुमधिकमशक्यः, पुष्पितान् मनोरथवृक्षान् मृत्युकीलालैर्भस्मसाद्विदधन्
संसारदावानलो निर्भयं सततमानन्दरूपं पदं गन्तुं श्रेष्ठे मार्गे व्रते मम तावदेको हेतुरभवत् । हे प्रभो ! भवतां संसारत्यागकार-
यिता द्वितीयो हेतुः कः ? इति सनत्कुमारेण सज्जनानामभिलषिते पृष्टे यतिपतिरवादीत् ।

इह प्रशंसनीयविस्तारवती ताराभिधाना मनोहरा नगर्यस्ति, या हि नगरी कोटिपतीनां प्रसादस्थध्वजपताकाभिर्व्याप्ता
मती सूर्यतापेन न खेदिता भवति । तस्यां नगर्यां शास्त्राणां पुनीतार्थेन कृतार्थीकृतमानसो नीतिधर्मयोः स्थापकस्तारापीड-

खान् कोऽपि प्रोन्नतः प्रमोदकलकलरवो दूरादुदभूत्। एतत्किमिति राजकुमारेण पृष्टोऽग्रमार्गे गच्छन् कश्चित्पुरुषस्त्वरां मुक्त्वा कोमलमिदं वचनं जगाद। अस्मिन् ग्रामे मम नागाभिधानो बन्धुः सर्पेण दष्टो मृत्युमाप, परन्तु स्मशानं निशम्छीघ्रं शिबिकान्तरादुदतिष्ठत्। दैववशात् तस्मिन्नेव समये मृत्युलोकासम्भवसुगन्धिः कृतनिःश्वासनासिकास्वाद्यो वायुर्ववौ। एष विषरहितः कथमभूदिति, असौ पवनः कस्मान्निर्गत इति च तत्र शोकरहिते जने तस्मिन् समये प्रसन्नतया वार्त्तालापोऽभूत्। यावन्निपुणजना दिक्षु नेत्राणीतस्ततो विक्षिपन्ति तावच्छुभभावनासमूहतेजस्विपरिपन्मध्याभरणो देवरचितसुवर्णकमलरत्नसिंहासनपीठः पृथिवीपावनकर्त्ता मुनिर्दूराद्धर्ममुपदिशन् दृष्टः। अहो ! मुनिराजस्पर्शमाहात्म्यातिसुगन्धिरेष वायुरस्य नागनाम्नः पुरुषस्य विषदोषविनाशको बभूवेति वारंवारमाकाशवाणीं समाकर्ण्य कृतज्ञो जनो मुदा नागमग्रे कृत्वा मुनीश्वरमभिवादयितुमगमत्। देवासुरमनुष्यैः स्तूयमानातिशयवैभवं मुनिं प्रणम्य गृहीतजैनधर्मो मम भ्राता महोत्सवैरागच्छति। हे न्यायपते ! इदानीं मया शीघ्रं गृहं गत्वा तोरणस्वस्तिकादिकः पदार्थो विस्तारणीय एवास्ति। एवं कथयित्वा तस्मिन् नरे गते सुन्दरमुख उत्तमभावोत्पादको राजकुमारः सनत्कुमार आनन्दश्राद्धमुत्साहपूर्वकमुवाच। आलस्यसङ्कुचितहृदयेनोन्निद्र आगमार्थ इवेदृशो लोकोत्तरो मान्त्रिको मया न पूर्वं कदापि श्रुतः। हे विवेकिन् ! त्वं सिद्धवचनो धन्योऽसि, येन कथितोऽलक्ष्योऽर्थः शीघ्रमेव प्रत्यक्षं मे दर्शयिष्यते। तदागच्छ ! मुनिराजस्य विलोकनादस्मान् पुनीहि ! इत्युक्त्वा मार्गे गच्छन्तमानन्देन दर्शितं नागं सत्कृत्यासौ सनत्कुमारो निर्मलश्रद्धानिश्चयवत्या शृङ्गारसुन्दर्या सहानन्दद्वयेन सह मुनिराजप्रणामाय जगाम। तत्र मुनिराजं प्रणम्य मुनिराजात् गृहीताशीर्वादः पुरन्दरकान्तिः सपरिवारः सनत्कुमारः सभां भूषयामास। दर्शनैः सभायां निजहृदयदयामृतं वर्षन् मुनिराज-

हारलतया महागतमिमं सन्देशं स्वीकुरु, यथा–हे हृदयेश्वर! विततितेजस्विकान्तिमतीं मनोरमां कृतनिजविशेषरसप्रियां मां हारलतां च हृदये निधेहि। अथाहो! सा मम मनोहारिणी इति वदित्वा हारलतां कण्ठे निधायासौ श्रीषेणो विशेषतया समालिलिङ्ग यतो मन्मथातुरस्य विवेकत्वं कुतः?। तदुक्तं–"कामान्धो नैव पश्यति"। अथ निर्लज्जं तं श्रीषेणं क्षणं परिश्रमः, क्षणं भ्रमः, क्षणं चिन्ता, क्षणं धैर्यं, क्षणं त्रासः, क्षणं हासश्च व्यडम्बयत्, ततोऽनया रीत्या कामदोषेण विषमीकृतेऽस्मिञ्छ्रीषेणे दुष्टचेष्टासमूहपुष्टकर्त्ता प्रदोषसमयः सञ्जातः। 'तस्या गृहं चल! तस्या यौवनं पवित्रं विधेहि!' इति तया स्त्रिया कथितो दुष्टाशावान् स श्रीषेणो दर्पेणाचलत्। असत्पथगमनेन हृदयोत्थितमान्मथविकारोऽन्धकाराछन्नः स श्रीषेणो यथाऽऽत्माऽज्ञानाच्छन्नो दुर्गतिं गच्छति तथा तया दुष्टबुद्ध्या स्त्रिया सह रोहितां प्राप्नोति स। दुर्दैवदुःखितया रोहितया सह यावदसौ वार्त्तालापं करोति तावत् प्रगच्छत्पज्जिनस्तारको प्रतीहारभूमावागमत्। भयपीडितः सः श्रीषेणः कात्यायन्या हाहा! नरकं व्रजितुं प्रयाणकर्त्तरीव क्षालकूपके प्रक्षिप्तस्तस्थौ। तत्र कूपे तीरघर्षणसंजातव्रणशरीरः स श्रीषेणोऽत्यन्तदुर्गन्धमये कीटव्याप्ते पङ्कबहुले जले कण्ठदेशपर्यन्तं मग्नोऽभूत्। तत्र थूत्काकृतोत्कारवमनभोजनवेगताडितैरुत्थितैः क्वथितैः क्षालनीरैर्मुखं प्रविशद्भिर्वदनान्निःसरन्तीभिश्चिकणाभिर्वमनलालाभिः समन्ततो वृतः स श्रीषेणः सशृङ्गारोऽप्यङ्गी बीभत्सरस इव बभूव। तत्समयेऽसौ श्रीषेणो मुखे मशकैर्दंशैः शरीरे कृमिभिर्जलचरैश्चरणतले कर्परैः ('कांकरा' इति भाषायाम्) तथा कीलैर्नितान्तं पीडितोऽभूत्। नासिकायां जले प्रविशति निजजीवनाशाशङ्कितोऽयं श्रीषेणः कूपकण्ठे पाणी क्षिपंस्तीक्ष्णदंशवद्भिर्वृश्चिकैर्हतोऽभूत्। इत्थं नारकीयं महादुःखं सहमानोऽसौ नारकीयः श्रीषेणो मध्यरात्रे समये गृहे कोलाहलमश्रौषीत्। तत्समयेऽर्धजरती निपुणासौ स्त्री यथा दुष्कर्मविनाश उपद्रवाज्जीनमाकर्षति

नामा भूजानिरभवत्। सम्पत्तीनां भाजनं स्वीयबुद्ध्यावगतज्ञातव्यपदार्थः श्रीपतिनाम्नो मन्त्रिणः पुत्रः श्रीषेणनामा तस्य राज्ञो मित्रमासीत्। एकस्मिन् दिने कामिनीजनचञ्चलनयनावलोकितो नूतनतरुणः वसन्तर्त्तौ रमणं कर्त्तुमुद्यानं जगाम। तत्रायं नयनकमलदलामृताञ्जनं सुकृतसौन्दर्यपण्यापणमिव क्रीडन्तीं कामिनीं ददर्श। हरिणनयना सा चतुरं श्रीषेणं प्रत्यक्षं मन्मथं दृष्ट्वा कटाक्षविक्षेपलक्षैरुत्क्षिप्य हृदये धृतवती। परस्परदर्शने तृप्तिमप्राप्तवन्तौ परस्परं सञ्जातप्रेमाणौ व्याकुलौ तौ सायंकाले निजनिजगृहमगच्छताम्। तत्र हरिणनयनावियोगेन व्याकुलोऽयं मन्त्रिपुत्रः श्रीषेणो रात्रौ निद्रामलभमानोऽमुद्रमिति विचारितवान्। प्रशंसायाः सीमारूपायास्तस्या अहो! रूपमहो! सुन्दरकान्तिः! अहो! नेत्रविलासः! तथाहो! मद्विषये कियान् स्नेहानुबन्धोऽस्ति!। यदि तस्याः स्त्रिया मम सङ्गमो न स्यात् तदा भूपतिना सह मम सख्यत्वं व्यर्थम्, सचिवपुत्रत्वं व्यर्थम्, इदञ्च जन्म निरर्थकम्। इत्याद्यनेकविकल्पव्याकुलमानसः स पुरुषः प्रतिप्रहरं युगपरिमाणत्वाद्दुःक्षिपां विभावरीं निनाय। ततो द्वितीयदिने मध्याह्नसमये स एकान्ते बाह्योद्यानं जगाम, चिन्तालिङ्गितहृदयं तं कापि कात्यायन्युवाच, यथा—

अस्मिन् नगरे एतन्नगरनिवासी प्रशंसनीयगुणालङ्कारस्तारकनामा तारापीडमहीपस्योपाध्यायोऽस्ति। अयं तारकः प्रथमस्त्रियां मृतायां वंशसम्पत्तिशीलशाली परमरूपवतीं रोहिताभिधां स्त्रियमुद्ववाह। अहं वृद्धावस्थालिङ्गितशरीरः, इयं तु नवयौवना कामिनी, इन्द्रियाणि च चञ्चलानि, इत्यादि विचिन्त्यासौ स्त्रिया अस्या बहिर्गतिं न ददाति। धरेशितुराज्ञयाऽसौ तारकोपाध्यायो गतदिने शाखापुरं गतः, इयं रोहिता च धात्र्या मया सह कथमप्युपवनमागता। हे सुभग! तत्र दर्शनप्रियस्त्वं तया रोहितया तथा विलोकितो यथा मन्मथज्वरसमूहपीडिता सा रोहिता मोहिताऽभूत्। मम पुत्र्याः कामज्वरशमनार्थमद्य दर्शनं देहि! तथा

ततोऽदृष्टैर्घातैर्हता सा रोहिता तथा कटुशब्दमारराट यथास्य सेवका अन्ये च जनाः कोलाहलरवाकृष्टाः शीघ्रं समाजग्मुः।
अत्रान्तरे च कुतोऽपि वसुधापतिरागमत्, निजोपाध्यायममतावशात् स नम्रो भूत्वा क्षणाद् धूपमुत्क्षिप्य तामित्थमवादीत्। हे
महाप्रभावे! त्वं कासि? हे देवि! ममादिश! दयाभाजनेऽत्र स्त्रीमात्रे कथं कोपः कृतः?। एतैर्भक्तियुक्तैर्वचनैः किञ्चित्क्रोधं त्य-
क्त्वा सा देवता गगनजातया गिरा राजानं जगाद। अहं श्रीजिनेश्वरशासने भक्तिमती सम्यग्दृष्टिर्देव्यस्मि, धर्मकर्मप्रवृत्तानां
सज्जनानां विघ्नान् दूरीकरोमि। अतस्तत्त्वज्ञातारं दृढसम्यक्त्वं परनारीपराङ्मुखं निजभर्त्तारं मारयन्तीयं दुष्टा मया बद्धाऽभूत्।
'किमियं निजभर्त्तारं हन्ति?' इति भूभुजा कथिता देवताऽब्रवीत्, राजन्! बद्धो यस्त्वया मोचितस्तमेव निजरमणं विधातुं
छिनत्ति। अस्य पुरुषस्य यदि दोषं वदसि, नामाप्यस्य प्रकटं करोषि तदा तव श्रीजिनेश्वरशपथोऽस्तीति कथयित्वा भूपो देवतां
निवारितवान्। किन्तु दयालुना तारकेण भूपतिना कथिताऽप्यसौ देवी निजपतिहितरहितां रोहितामद्यापि न बन्धनमुक्तां
करोति। एवं श्रवणेषु तप्तत्रपुसदृशं वचनं श्रुत्वा वलाद्वैराग्यं समुपाश्रितः श्रीषेणश्चिन्तयामास। अस्मिन् कोलाहले संजाते तत्समये
तया दुष्टया मलव्याप्तोऽहं शीघ्रं क्षालतो बहिः क्षिप्त इत्यहं मन्ये। दुर्बुद्धिर्ब्रह्मा दुराचाररूपवृक्षोद्यानवनभूमिसदृशीः स्त्रीः कथं ससर्ज,
अथवा ममासौ चिन्तैव व्यर्था, यदि दुष्कर्मकरणात् स्त्रियो निन्दनीयास्तदा पुरुषोऽप्यहं महानिन्दनीयोऽस्मि, यतो दुष्कर्मबीजरू-
पदुराचारस्य भाववानहमेवास्मि। मम मानुषं जन्म धिगस्तु, येन मया स्ववंशोऽपि कलङ्कितः, या विद्या पापात्मनि मयि स्थिता
सा विद्याऽपि दोषवती बभूव। अस्यां वसुन्धरायां निश्चयं जितेन्द्रियत्वं गुणवल्लीपङ्क्तेर्मूलसदृशमस्ति। तदद्य मया हा! दुरा-
चारफलभक्षणैररुतिक्षिप्तम्!। तस्मिन् समये मामविचारकार्यकारिणं ज्ञात्वा सा लज्जाऽपि तिरोऽभूत्, हंसी किं पङ्कबहले जले सर्वदा

तथा सज्जरज्जुना तं श्रीषेणं क्षालत आचकर्ष। "तस्मिन्नुद्यान आगत्य भाविनं सकलं समाचारं निवेदयिष्यामि, गच्छ! प्रतीहारदेशे कोऽपि नास्ति!" इत्येवं तया स्त्रिया कथितः क्षालतोयलिप्तशरीरः स श्रीषेणो यमराजपाशच्युत इव ततः शीघ्रं प्रणनाश। अथ कोलाहलमाकर्ण्य शीघ्रमागतैर्द्वाररक्षकैः पुरुषैः स श्रीषेणो नश्यन्नवलोकितः, धनुर्दण्डैर्हत्वा न्यबध्यत च। दुर्गन्धमयैः पङ्कैः पूर्णशरीरो गर्तावराह इवायं कः? इति प्रदीपहस्तैरेभिः पुरुषैरवलोकितः सोपलक्षितश्चाभूत्। असौ महीपतेर्मित्रं त्यक्तुमत्यक्तुं वा क्षमः? इति विचारतत्पराः सर्वे मनुष्या मूर्खत्वं प्राप्तवन्तः (अर्थात् किंकर्त्तव्यविमूढा इवासन्)। तस्मिन् समये निर्मलबुद्धिमान् महीपतिर्वीरचर्यया पर्यटन् कोलाहलशब्दं शृण्वन्नाजगाम तथागत्य च मार्गे तं श्रीषेणमद्राक्षीत्। तं ज्ञात्वा चतुरशिरोमणिः श्रीमान् महीपो विचारितवान्, ममोपाध्यायस्य गृहे कोलाहलस्य कारणमयमेव श्रीषेण इत्यहं मन्ये। अथवास्मिन् संसारे कस्य बुद्धिमतोऽपि जनस्य स्खलितं न भवति? किन्त्वयं श्रीषेणो मम बाल्यसमयादेव सुहृत्, अतोऽयमुपेक्षितुं नार्हः। परन्त्वयं श्रीषेणो मां वीक्ष्य दुःखप्रदबन्धनादपि लज्जितो भविष्यतीति योग्यतापूर्वकं कार्यं निर्णीय स्वभावेनैवोपकारकर्त्ताऽसौ मेदिनीन्द्रस्तारापीडो निजदुःखेन प्रतीहाररक्षकाणामात्मानं प्रकटीविधाय शीघ्रतरं तं श्रीषेणं मोचयाञ्चकार। शरीरप्रमाणाद् गुप्तरीत्योपकारकरणस्वभावात् स्वस्य च शीघ्रतया बन्धनत्यागात् स श्रीषेणस्तं महीमहेन्द्रमद्राक्षीत्। अथ त्रपया निजं मुखमवलोकयितुमक्षमः स श्रीषेणो भूभुजा कृतादेशैर्भटैर्दूरादावृतः स्वगृहमव्राजीत्। प्रक्षालितसकलशरीरः स श्रीषेणः प्रातःकाले तस्मिन्नुद्याने लतागृहेऽतिष्ठत्। तथोपवनरक्षकेभ्यो दुःश्रवां गिरमश्रौषीत्। अद्य विभावर्यां रोहितया परिश्रमान्निद्रायमाणस्य भर्त्तुः कण्ठं छेत्तुं क्षुरिकादुर्धरः पाणिः समुत्क्षिप्तः। तदा क्षुरिका तस्तम्भ, सहसा तारक उत्तस्थौ, रोहिता च रज्जुरहितैर्हृदयबन्धकैर्बन्धनैर्बद्धा जाता।

धार्मिकाऽऽसीनि कथयित्वोत्तमवादित्रशब्देन सहितं जयतुमुलं बहुकालपर्यन्तं विधाय देवता तिरोबभूव। अथ कृशानुना तापितः पारदो यथा जले पीयूषरूपो भवति तथा निजदुराचारव्यथितं मामकीनं मनो व्रते मग्नमभूत्। शरीरधारिणो मम पापतापविनाशाय व्रतपीयूषं यच्छ! इत्थं बहुशः प्रार्थिता सुव्रता मामवोचत्। हे कल्याणवति! त्वं भाग्यवत्यसि, तवात्मापि तत्त्वज्ञो यत्त्वया कर्मवृक्षविनाशाय वज्रतुल्यं व्रतं प्रार्थितम्। परन्तु क्रीडोपवनसमीपे मम श्रीशीलप्रभसूरयो गुरवः सन्ति, तेषां समीपं गत्वा तदन्तिक एव व्रतं सेवस्व!। इति तया कथिताऽहं हन्त! अत्र तव समीपमागमम्, ममापराधः क्षन्तव्यो मां व्रतं स्वीकर्तुमाज्ञापय!। एवं मनोहरभावार्थं वचनं श्रुत्वा प्रबलवैराग्यकल्लोलाच्छादितचेता मन्त्रिपुत्रो विचारितवान्। अहह! विनाशितज्ञानलज्जाकीर्तिभयद्वारपालैर्विषयरूपचौरैरद्य मम पुण्यरूपं धनं चोरितम्। कामदेवेन विलासिनीविलासबाणैर्हृदयं विदार्य येषां धैर्यं न गृहीतं तानेव पुरुषानहं मन्ये। अहो! सुव्रताया व्रतस्य कियन्माहात्म्यमभवत्?, यदेवं हर्षिता देवी प्रभावनां विस्तारयति। ततो निजस्याब्रह्मचर्यस्य साध्व्या ब्रह्मचर्यस्य चान्तरं ज्ञात्वा साम्प्रतं मम व्रतं स्वीकर्तुं योग्यमस्ति। किञ्चैतत्कार्यं विदधतोऽत्र मम वदनकान्तिरुज्ज्वला स्यात्, तथा परत्रभवे महद्भाग्यसम्भवं कल्याणं भवेत्। इत्थं करणीयं कार्यं मनसि निश्चयं विधाय स श्रीषेणः कात्यायनीमवादीत्, हे मातः! निजाशयं कथयन्त्या त्वया साऽहं प्रतिबोधितः। मातः! दुष्कर्मकारिणो मूढहृदयस्य मम कर्मोन्मूलने संसारसागरस्य तीरप्रदमुपायं पूज्या त्वं सूचयाञ्चकर्थ। यद्यत्र उपदेशनादो न भवेत् तदा प्रमादशयनीये मोहनिद्रया शयान् आत्मा कथं जागर्ति?। ततो हे श्राद्धे! निजापराधविनाशाय श्रद्धया त्वया सह गुरुसमीपे श्रीजैनं व्रतं स्वीकरिष्ये। इत्थं तस्याः समीपे प्रतिज्ञां विधाय व्रताभिलाषुकः स श्रीषेणो भृशं वियोगेन खिद्यमानौ मातापितरा-

तिष्ठत् ?। सत्यमित्रत्वभाजनं क्षत्रियवंशावतंसः तारापीडो राजा नूनं स्तुत्यः, यो हि मम लज्जाकरीं सकलां पीडां दूरीचकार। अहो! अनाकर्णनीयाचरणो मलिनताधनवानहं साम्प्रतं परमोपकारकर्त्तुस्तस्य राज्ञो निजाननं कथं दर्शयिष्यामि ?। ये हि मनुष्या विकसिताम्लानसन्मानरूपस्रग्धारिणो निजयशोमौक्तिकभूषणैर्जगन्ति समलङ्कृत्य गतास्तेऽतीव धन्याः सन्ति। इत्थमत्यन्तं विचारयतो वैराग्यमानसस्य तस्य श्रीषेणस्य, तारकोपाध्यायस्य गृहस्य समीपप्रदेशे गगने जयतुमुलशब्दोऽभूत्। तं शब्दं श्रुत्वा साश्चर्यः स यावदूर्ध्ववदनस्तिष्ठति तावद्विरक्तया कात्यायन्या समीपमेत्याभाणि। हे वत्स! निजपुत्र्याः स्नेहान्मूर्खहृदयया मया गतदिवसे सन्मतिभिर्धिक्कृतं दुष्कर्म कृतम्। तेन तव महाकष्टैर्निजवत्साया दुराचारैश्च मया शीघ्रफलप्रदं दुःखमिदमनुभूतम्। त्वदर्थं तया रात्रौ भर्त्तुर्यदप्रियं कृत तल्लोकप्रसिद्धमपि ममात्र कथयितुं न क्षमम्। "हे मातः! तत्सकलं प्रातःकाले वनरक्षकात् मयाऽऽकर्णितम्, परन्तु तस्य गृहसमीपप्रदेश आकाशे मङ्गलनादोऽयं कः" इति श्रीषेणेन कृतप्रश्ना साश्चर्या सेयमवोचत्, हे वत्स! स्तोकस्यापि निजपुण्यस्येदं फलं निशामय!। दयालुना महीपेन कथिताऽपि क्रोधान्विता शासनदेवता मम वत्साया बन्धनत्यागं न करोति। अथ व्यर्थीभूतप्रार्थनश्चित्ते सखेदो वसुधापतिरपि शोकान्वितोऽनल्पजनेन सह निजं गृहमगमत्। अधुना चाकस्मादास्माकीनैः पुण्यैः प्रेरितं, यन्मार्गदर्शनक्षमं साध्वीद्वयं भिक्षार्थं गृहे प्राविशत् तत्साध्वीयुगलं वीक्ष्योच्चपुलककञ्चुका साश्रुनयना बन्धनाभावादकुण्ठा पृथिवीतले लुठन्तीयं मामकीना पुत्री "मम तावकौ चरणौ शरणभूतौ स्तः" इति कथयन्ती साध्वीद्वयं प्रणनाम तथाऽऽकाशवाणी समभूत्। हे रोहिते! यदा त्वं साध्वीमभिवादयितुं हर्षेण शुद्धां श्रद्धां धृतवती तदैव मया दैवताबन्धाः संहृताः। यत्त्वयाऽखण्डब्रह्मचारिणीयं सुव्रतानाम्नी साध्वी नमस्कृता तत्संजातपावित्र्या त्वं मम समान-

क्षमोऽस्मि, किन्तु विपद्दूरकारकं निजभार्यासन्तोषं कुर्वे। ततो दन्तकिरणप्रकट्यमानाज्ञाचन्द्रोदय औचित्यकल्पवल्ल्यारोहभूमिर्मुनि-श्वरोऽवादीत्। हे विचक्षण! सनत्कुमार! विदिततत्त्वया निजबुद्ध्या त्वया योऽभिग्रहः कृतस्तेनैव तव संसारदावानलः शान्तो भविष्यति। यो हि गृहस्थः परस्त्रीपरित्यागं करोति तेन मुक्तिविलासिनीक्रीडं निर्मलं शीलं पालितम्। जगतां प्रीतिप्रदासु भूषण-ततिषु शीलमेकं प्रशस्यते येन कृताभरणोऽयं जीवो मुक्तिस्त्रियाः प्रियो भवति। तस्मात् कारणाद् हे सनत्कुमार! त्वयोत्तमतरं व्रतमङ्गीकृतम्। हे भव्य! व्रतेऽत्र सततं विशेषेण प्रमादरहितेन भवितव्यम्। इत्थं श्रीगुरुदेवैः कथितो राजनन्दन इत्थमदीनं वचनमुवाच, हे प्रभो! तव प्रसादान्मम नियमः प्रामाण्यं प्राप्स्यति। अत्रान्तरे पवित्रहृदया शृङ्गारसुन्दरी दयासागरं श्रीगुरुदेवं प्रणम्येत्थं न्यवेदयत्। हे गुरो! श्रद्धामनोहराहं जीवनपर्यन्तं मनोवचनशरीरेण शुद्धं परपुरुषपरित्यागं करिष्ये। अथ गुरुरुवाच, हे वत्से! त्वं यथार्थाभिधाना शृङ्गारसुन्दर्यसि, यतो यतीनां क्षमेव स्त्रीणां शृङ्गारः शीलमस्ति। इत्थं सनत्कुमार-शृङ्गारसुन्दर्योः स्वीकारं विधाय मुनिराजो यथाविधि तयोरभिग्रहमग्राहयत्। हे प्रभो! भूयो मे भवतां दर्शनं सुलभं भूयादिति कथयित्वा गुरुं प्रणम्य सभ्यैः स्तूयमानो राजपुत्रः सनत्कुमारोऽनन्तरं, धनोपार्जनं कृत्वा यथा व्यापारी परदेशात् स्वस्थानं गच्छति तथा लब्धपुण्यः सस्त्रीको हर्षेण सभामध्यादुत्थायात्राजीत्। कृतसकलकार्यः स सनत्कुमारस्तत्रा-नन्दादीन् धार्मिकवर्गान् सत्कृत्य समये प्राप्ते प्रस्थानं चकार।

अथ प्रबलबाहुदण्डः स सनत्कुमारः प्रतिनगरमपूर्वाणि मंगलानि पश्यन्नविच्छिन्नप्रयाणैर्निजनगरमगच्छत्। विविधाट्टका-न्तिमत्यां क्षोभव्याकुलकामिन्यां तत्र श्रीकान्तायां नगर्यां सभार्योऽसौ सनत्कुमारो महोत्सवैः प्रवेशमकरोत्। स्त्रियः

वापृच्छ्य स्तुत्यं तत्त्वज्ञानिनं क्षत्रियं मित्रं भूपमानन्द्य बान्धवान् संबोध्य याचकजनान् कृतार्थान् विधाय परिजनान् संत्यज्य कात्यायनीद्वितीयः श्रीशीलप्रभसूरीणां समीपमेत्य व्रतमग्रहीत्। अथ तपांसि विस्तारयन् कर्मशोषणः श्रीषेणो गुरुभिः सह विहारं कुर्वञ्छुद्धान्तःकरणः सन्नागमशास्त्रमपठत्। कियत्यपि समये व्यतीते गुरूणामाज्ञां प्राप्य निर्मलध्यानमग्नः स श्रीषेण-मुनिरत्रैव शुद्धभूमावतिष्ठत्। विलोकितब्रह्मचर्यप्रभावाऽपि श्रीषेणे भृशं मोहिता रोहिता कामवासनां न मुमोच, यतः प्रेमबन्धो दुस्त्यजो भवति। निजं स्वामिनं मोदितुं गृहस्थव्रतं परिपालयन्ती रोहितासौ श्रीषेणे मोहममुञ्चन्ती क्षीणशरीरा प्राणांस्त्यक्त्वा श्रेष्ठा व्यन्तरी समभूत्। अवधिज्ञानसंयोगात् तं मुनिमत्रस्थानके ज्ञात्वा पूर्वजन्मजस्नेहसमूहपूरितहृदया सा व्यन्तरी समागमत्। प्रेमयुक्तवचनानां हावैर्भावैर्व्यन्तर्या कृतोपद्रवोऽपि स श्रीषेणमुनिर्गजदन्तप्रहारैः पर्वत इव ध्यानतो न विचलितोऽभवत्। परन्तु क्षपकश्रेणावारूढस्यास्य मुनिराजस्य घातकर्मणां विनाशेन केवलज्ञानं समुत्पन्नमभूत्। तज्ज्ञात्वा त्यक्तमोहा सा व्यन्तरी सुगन्धवायुसुवर्णकमलरत्नसिंहासनादिकामिमां भक्तिमकार्षीत्। अथ नागे विषरहिते जातेऽनया व्यन्तर्याऽऽकाशवाणी कृता, यतः प्रभावनायां सम्यग्दृष्टिदेवताया अभीष्टत्वं भवति। हे राजकुमार! सोऽहं श्रीषेणाभिधानो मुनिरस्मि। तथा तव दक्षिणपार्श्वे स्थितेयं विनयवती व्यन्तरी। हे सौम्य! त्वया यद् द्वितीयं व्रतकारणं प्रपच्छे तदेतादिति विषयदोषसमुत्पन्नं वैराग्यं ज्ञातव्यम्। इत्थं कथाया भावार्थं ज्ञात्वा बुद्धिसागरः संसारविपिनत्यागोद्योगशाली विकसद्वदनपद्मो महाबलवतां धौरेयः स सनत्कुमारः केवलज्ञानदिवामणिं श्रीगुरुदेवं प्रणम्येत्थं निवेदयाञ्चकार। हे सच्चारित्रवन् मुने! मया यत्तव पावनं चरित्रमा-कर्णितं तत् परमं व्रतं मयाऽऽसेव्यते तदा तस्योचितं स्यात्। परन्तु यथा वत्सरो रथं वोढुं न शक्नोति तथा तन्महाव्रतं कर्तुं न

स सनत्कुमारो यं हर्षं प्राप तं हर्षं तस्य मन एव जानाति। दोलाक्रीडाधुताश्च्युताः सनत्कुमारस्य हारमालास्तस्य चरणग्रहतस्या-
काशस्य नियतं नक्षत्रायिताः किम्? अहो! स्नेहैनैकमानससत्वमस्ति! अथ शृङ्गारसुन्दरी दोलामियेष, तथा तत्र दोलायां तां
रमयितुं सनत्कुमारः प्रोत्ततार। सञ्जातरोमाञ्चोऽसौ कुमारो रोमाञ्चितामिमां बालां बाहुभ्यामुदस्य निजमिव प्रमोदशिखरायां
दोलायामध्यारोपयामास। कामदेवो यथा देवविजये यन्त्रेण शक्तिं विलासयति तथा सनत्कुमारो दोलया कृशाङ्गीं शृङ्गारसु-
न्दरीमाकाशे दूरं व्यलासयत्। दोलान्दोलनैस्तस्या द्युतिरेखाकरं शरीरं निकषपाषाणसदृशे गगने सुवर्णमिवाद्योतत। दोलया
वारंवारमाकाशं गत्वा देवाङ्गनाहङ्कारं विनाश्य नीचैरागच्छन्ती सा शृङ्गारसुन्दरी सनत्कुमारेण कुतूहलेन दृष्टा। दोलाहेला-
समूलत्रुट्यति तस्या मुक्तावलिविस्तारे सनत्कुमारो दिने नाक्षत्रितमाकाशमद्राक्षीत्। तादृशविभ्रमसंरम्भविस्तार्यमाणमन्मथोदयो
निजाङ्गनाशरीरगण्याश्लेषं जायमानपूर्णमनोरथः सोत्कण्ठः सनत्कुमारस्तस्मिन् समये गगनाद्दोलावतारस्य निमेषार्धं क्षणमपि वर्ष-
शतादप्यधिकं गणयन् यावद्दोला स्थिरीकरोति तावत् तत्र दोलायां "सा शृङ्गारसुन्दरी नास्त्येवेति" हाहा! शब्दमुच्चारयन् वक्षः
संताड्य कुमारचन्द्रो मूर्च्छामाप। तत एतत् किं? किं? इति व्याकुलवचनेन परिवारेण पुष्परससेकेन स कुमारो मूर्च्छारहितो
व्यधायि। हा प्रिये! क्व गतासि? इति सगद्गदं वचनं वदन् स कुमारः पृथिव्यां मस्तकमास्फाल्य भूयो मूर्च्छामव्राजीत्। हे
वीरशिरोमणे! समाश्वसिहि! हे बुद्धिरत्नाकर! समाश्वसिहि! इति कथयन्तो मन्त्रिणोऽस्य भूयः शीतलोपचारं चक्रुः। अथ
मूर्च्छामयमन्धकारं त्यक्त्वा शोकमयमन्धकारमाश्रितः सनत्कुमारो वृक्षानपि विलापयन् विललाप। ततोऽग्रे समागत्य स्थिरान्
दीनमुखानलान्तं साश्रुनयनान् क्रीडापक्षिहरिणान् रोदनदीर्घया वाण्या जगाद। अरे! मूर्ख हंस! तस्या हस्ताग्रवियुक्तस्य तव

शृङ्गारसुन्दरीं, पुरुषाः सनत्कुमारं, तौ परस्परं विवाहलीलया धन्यौ मेनिरे। हिमांशोः कौमुदिमिव तनयस्य तां भार्यां पश्यन्नराधिपः सागर इव परमानन्दमविन्दत्। कामविलासविलसितललाटया तया शृङ्गारसुन्दर्या समं स रसिकः सनत्कुमारः केन केन विभ्रमेण न विललास? अर्थात् सर्वप्रकारेण विलासमकरोत्। रतिसहितस्य कामदेवस्य निजमित्रस्य भ्रमेणेव भार्याद्वितीयं सनत्कुमारं सेवितुं तदा प्रसन्नतया वसन्तर्त्तुरुदभूत्। पीतकुसुममधुस्तथा भ्रमरशब्दैर्गानं कुर्वन् मलयाचलपवनो मत्त इव शनैः शनैरितस्ततश्चचार। शत्रुरूपेण शिशिरर्त्तुना गृहीतसकलधनः सूर्यः कुबेरस्य दिशं प्राप्य लक्ष्मीवानभूत्। कुसुमानि ग्रहीतुमिव किसलयव्याजान्मन्मथवीरो वृक्षेपु यथेच्छमंगुलीः प्रपञ्चयामास। मन्मथक्रीडानाटकस्य नान्दी शब्दा इव विपिनरङ्गभूमिरङ्गाः कुहूकण्ठीकुहूशब्दा अभूवन्। भ्रमरकामिनीसमूहे कामदेवयशोगानं कुर्वति सिञ्जानमञ्जीरहंसरवै रतिरूपा नटी ननर्त्त। वियोगिनीमानसं भस्मसात्कुर्वञ्जगद्व्यापी कामदेवस्य प्रताप इव कुसुमसमूहात् परागो निर्जगाम। कामदेवस्य भुवनविजयकीर्त्तीरिव पुष्पाणि जितानां दुष्कीर्त्तिसमूहा इव चञ्चरीका आलिङ्गन्ति स्म। कुसुमजालैर्भुवनप्राणान् सुगन्धीविदधन्नेप वसन्तर्त्तुः कस्य कस्य प्रमोदसन्दर्भाय नाभूत्? तस्मिन् समये शृङ्गारसुन्दरीसहितः सनत्कुमारो वसन्तर्त्तुना मनोहरं क्रीडाविपिनमगच्छत्। आकाशदेवीभिर्जलदेवीभिः स्थलदेवीभिश्च सोत्कण्ठं पुनः पुनरवलोक्यमानोऽयं जायाद्वितीयः सनत्कुमारो विभ्रमान् सफलाँश्चकार। पुष्परूपहास्यवता वसन्तर्त्तुना निजमित्रं शरीरधारी मन्मथ इवासौ सनत्कुमार इतस्ततः क्रीडन्नवलोकितः। क्रीडापर्वतरत्नशिखरेषु क्रीडावापीतोयेषु च सनत्कुमारः निजप्रतिविम्बनात् तां मायां कष्टं सस्मार। अथायं राजकुमारो विभ्रमस्योत्कृष्टकोटिं गन्तुमुत्क इव मन्मथविमानसदृशीं दोलां समारोहत्। शृङ्गारसुन्दरीकरलोलितया तया दोलया पुण्यवान्

अपि प्रियतमाप्रेमगूढमदृशं सनत्कुमारस्य शरीरं वारंवारमदहन्। अथानानन्दकरं परिवारं दूरे विमुच्य तारापतेर्भीतः स राजकुमारः स्वेच्छया चित्रशालामगच्छत्। दुःखी स राजकुमारो यावद् रहसि प्रियाचिन्तालीनोऽभवत् तावदग्रे देवाङ्गनेव काऽपि सुनयना रमणी दृष्टिपथेऽवाततार। बुद्धिसागरस्तत्साहसविक्षेपचेताः स राजकुमारः प्रत्यक्षं कटाक्षविक्षेपचतुरामभिमानरहितां तां कामिनीमवोचत्। हे कल्याणि! त्वं कासि? केन च कार्येण कुतश्चात्रागतासि इति राजकुमारेण पृष्टा प्रसन्ना सा प्रमोदेन स्पष्टमवादीत्। हे सौभाग्यभाग्यैकमहासागर! हे नयनचन्द्रोदय! वैताढ्ये पर्वते रथनूपुरचक्रनामकं नगरमस्ति। तत्र नगरे निःसीमधैर्यशाली भयमोहितशत्रुपक्षो विश्वविद्यासमुद्रो महाबलवान् भीमनामो विद्याधरपतिरस्ति। हे चतुरशिरोमणे! भानुमती नाम्नी चाहं तस्य विद्याधरपतेः प्रधानमहिष्यस्मि, तथा तव गुणाधीनमानसात्राकाशमार्गेणागताऽस्मि। हे वीरमणे! एकस्मिन् दिने निर्मलानन्दो मनुष्याणामग्रेसरः स विद्याधरो मया सहाकाशे क्रीडंस्तत्र वासन्तीनगर्यामगच्छत्। आकाशे स्थितः स भीमनामा विद्याधरो वरमालया भवत्कण्ठं भूषयितुं समुत्सुकां शृङ्गारसुन्दरीमपश्यत्। अथ मनोभिलषितरूपधारी स विद्याधरः कुतूहलाद्भवदीयरूपमायां विरच्य तवार्धासनमुपविष्टः सभास्थजनमोहकारकोऽतिष्ठदिव। परन्तु शृङ्गारसुन्दर्यां निजकण्ठस्थापितवरमालायां विलक्षमतिः स विद्याधरोऽप्राप्तपिण्डो द्रोणकाक इवोड्डीय गगनेऽगच्छत्। ततः सानन्दो मया सार्धं क्रीडनयं विद्याधरोऽद्यात्र समागतो मनोहरशरीरां प्रेङ्खालोलां तावकीं कान्तां च ददर्श। ततो धृतप्रेम्णा तेन विद्याधरेण "किमेतदि" ति संमोहप्ररोहरुद्धकण्ठा तव कान्ताऽहारि। मम स्वामिनि तद्व्यसनव्याकुले, तवानुरागाधिक्यादह तावकीं सेवाविधिं मार्गयन्ती व्योम्नि अदृश्यवातिष्ठम्। स्वतन्त्रेण तेन विद्याधरेण निजप्रेम सुदूर पूरितम्, भूयः पराधीनाया मम प्रेमोत्पत्तौ त्वमीशोऽसि। तस्माद्धे नाथ!

लक्ष्मीनिवासपद्मेऽपि कथमानन्दो भविता ?। अरे! बप्पीह! स्नानानन्तरं तस्याः केशान्निस्सरद्बिन्दुषु सर्त्तव्येषु साम्प्रतं दीनः सन् कथं जलधराज्जलमिच्छसि ?। हे मयूर! नृत्यसमये तादृशी हस्ततालिकाः क्काकर्णयसि ? येन कार्त्तिकेयजननी पार्वत्यपि शङ्करेणार्धिताऽभवत्। हे हरिण! पवनवाहनतां भजंस्त्वं हि सर्वत्र गन्तासि धन्यं त्वां कुत्रापि सा शृङ्गारसुन्दरी लालयिष्यति, वयं तु हता एव। रे कोकिल! गर्वं प्राप्य मनोहरशब्दं त्वं कथं न करोषि ? यदधुना सर्वेषां गर्वनिवारकस्तस्याः शृङ्गारसुन्दर्य्याः स्वरो दूरं गतः। इत्थं पीडितं विलपन्तं तं सनत्कुमारं पश्यतां धैर्यवतां योगिनामपि धैर्यं दूरीकृत्य वदनात् फुत्कारा निर्जग्मुः। अथ दृढतरस्वप्रियावियोगजनितपीडां सोढुमदक्षः स सनत्कुमारः प्रेङ्खत्या दोलया स्वमाकाशे क्षिप्त्वा मरणमैच्छत्। अत्रान्तरे विदितकुमारचरित्रः पृथिवीचन्द्रः शीघ्रतरं राजकुमारमाश्वासयितुं काननं प्राप। अथ प्रबलगूढपीडः सनत्कुमारः पितुः प्रणामच्छलेन त्रपया मस्तकं नमयन् स्वं गुप्तं चकार। ततो भूजानिः कुमारमङ्के समुपवेश्य वारंवारमालिङ्गन् नरविमानेन गृहं जगाम। मम वीरत्वं धिग्धिक् ? यन्मम पुरतोऽस्य कुमारस्य प्रिया हृतेत्येवं लज्जयेव निस्तेजाः सूर्यो द्वीपान्तरं जगाम। अथ राजकुमारवियोगानलशिखाश्रेणीभिस्तापितमिव सन्ध्यारक्तं गगनं लोहगोलसदृशं शुशुभे। तस्मिन् समये सनत्कुमारस्य हृदयादुद्भ्रान्तः शोकसागर इवान्धकारसमूहव्याजादाकाशकुक्षिम्भरिरलक्ष्यत। कुमारस्य विस्तीर्णनिःश्वासज्वालाततिवशात् तारायूथव्याजादाकाशस्य स्फुटं पिटकसमूहमभवत्। रतेर्गृहसदृशं तस्य स्वान्तं भस्मसात्कुर्वतो वियोगाग्नेरग्निकणा इव प्रतिगृहं प्रदीपा निष्पेतुः। अथ राजकुमारे कामदेवेन क्षिप्तो यन्त्रपाषाण इवोज्ज्वलश्चन्द्रो दूरादाकाशमार्गे दृष्टोऽभूत्। चन्द्रिका यथा यथा वसुधातले निबिडीभूता तथा तथा तस्य सनत्कुमारस्य मुखकमलं म्लानमभवत्। पीयूषकिरणस्य (चन्द्रस्य) पीयूषधारासदृशाः किरणसमूहा

सर्वथा निष्फलप्रयासोऽहङ्काररहितश्च भूत्वा सन्मार्गमाश्रयेत् तदाहो ! सोऽपि मम महोत्सवः स्यात् इत्थं मनसि निश्चयं कृत्वा सप्रेमवचनैः संप्रार्थ्य सा विद्याधरी निर्दोषाय कुमाराय विधिपूर्वकं विद्यां दत्तवती। अथ कुमारस्याज्ञामादाय सा शीघ्रं निजनगरमगमत्, कुमारस्य च वचनं स्मारंस्मारं पुनः पुनः सरोमाञ्चं शरीरं दधौ। ततो विचक्षण उन्मनाश्च स सनत्कुमारः स्मरणेनैवागतां सिद्धां प्रज्ञप्तिनाम्नीं विद्याधिष्ठात्रीदेवीं प्रियवचनैः स्वकान्तासमाचारमपृच्छत्। अथ विद्याधिष्ठात्रीदेवता सनत्कुमारस्य श्रवणामृतसारणीसदृश्या वाण्या योग्यं वचनमवोचत्। हे राजकुमार ! विद्याधरपतिना भीमेन भवतः कान्ता स्वनगरोद्याने नीत्वा मनोज्ञैर्नम्रवचनैरित्यवादि। अयि मुग्धे ! कज्जलमिश्रितैर्नयनवारिभिर्व्यर्थं कलुषीकृत्य मुखं चन्द्रसदृशं कथं निर्दहसि ?। अयि बाले ! सेवकेऽपि मयि विश्वासाभावान्निश्वासपवनक्रीडाभिः शिरीषकुसुमसमकोमलं शरीरं कथं ज्वालयसि ? हे देवि ! हे कमलनेत्रे ! अमून् जनाञ्छ्यामकमलसदृशान् कुर्वती त्वं तावकाज्ञाविधायिनं मां कथं न पश्यसि ? हे सुदति ! मन्मथाग्निपीडिते मम शरीरेऽमृतस्यन्दसदृशं मुदा मुखे हास्यं त्वं कथं न प्रकटयसि ? पृथिवीपतिमात्रतनयस्य विप्रयोगे कथमातुरा भवसि ? सकलभोगवता मया सहेदं विद्याधरैश्वर्यं भज !। इति कथयन्तं तं पापिनं सा मौनेनैव न्यषेधीत्। यतः सधूलिकः पवन आवरणेनैव वारणीयो भवति। विद्याविनाशभयात् सत्याः शापभयाच्च स भीमः शीलक्रीडाविनाशाय बलात्कारं नाकार्षीत्। इति तस्या वचनं निशम्य भयङ्करक्रोधेन प्रियाशीलाहङ्कारेण च प्रगल्भो नट इव स सनत्कुमार मिश्रितौ द्वौ रसौ सिषेवे। अथायं सनत्कुमारः शीघ्रं विद्यया विद्याधराणां वैताढ्याख्यं पर्वतमगच्छत् तत्र च रथनूपुरचक्राभिधनगरारामं प्राप्तवान्। ततस्तत्र निर्दयाः करुणामया एवं विविधा वाणीः श्रुत्वाऽप्रत्यक्षीभूय पुरतोऽवलोकयन् स सनत्कुमारो विद्याधरेन्द्र

हे दयारूपमृगविपिन ! हे शरण्य ! कामदेवशरैः पीड्यमानहृदयाया मम शरणं भव ! हे हृदयेश्वर ! हे मनोहरयुवावस्थ ! हे शरण्य ! दृढं तव वियोगकृशानुज्वालावलीढाया मम त्वं शरणं भव। हे मन्मथक्रीडाविचक्षण ! हे शरण्य ! विपुलस्पृहासागरलीनस्य मामकीनस्य स्वान्तस्य शरणीभव ! हे अगणितपुण्यसौन्दर्य ! हे शरण्य ! द्वितीयकामिनीसंसक्तमानसेन पत्या संतप्तमानसाया मम त्वं शरणीभव ! इति तस्या वचनं श्रुत्वा काञ्चनशोभः तत्त्वज्ञः सत्त्ववान् स सनत्कुमारः सकर्णपीयूपसदृशीं मुनिजनोचितां गिरं जगाद। हे मुग्धे ! त्वं धर्मस्य रहस्यं न जानासि येनेत्थं ब्रवीषि। चन्द्रवन्निर्मलस्य शीलस्य रक्षणं तत्त्वज्ञानिभिः प्रशस्यते। तस्माद्धेतोरुल्लसत्पाप(कर्दम)व्याप्तं सुमार्गस्याध्वगैर्मुक्तं परस्त्रीसङ्गाभिधं वर्त्म कथमहमाश्रयामि ?। परस्त्रीजङ्घालिङ्गनेन ये सुखं स्पृहयन्ति ते प्रबलैः खदिरकृशानुभिः शृङ्गारं चिकीर्पन्ति। यदि सत्यं तव मानसेऽहं प्रियोऽसि तर्हि दुःखमुखाय सुखाय मां कथं प्रार्थयसि त्वम् ?। अहो ! तवापि प्रकटरीत्याऽन्यपुरुषासक्तिरुचिता न, त्वं कुलीनापि भूत्वाऽस्मिन् कश्मले मले कथमनुरक्ताऽसि ?। तस्माद्धे विद्याधरि ! इदं धर्मविनाशकं कर्म दूरीकुरु ! शीलमाश्रय ! येनेह लोके यशः परत्र च मुक्तिः। या स्त्री सद्धर्ममूलं शीलं भजते सा देवतेव महतामपि जनानामत्र लोकेऽपि पूजनीया भवति। व्यभिचारात् पतिभयादत्र लोके सुखं न, परत्र च परपुरुषसङ्गजपापसमूहात् सुखं न, अतस्त्वं चेतसस्तत्त्वं ब्रूहि यत्परपुरुषसेवायां को लाभः ?। एवं सनत्कुमारचन्द्रस्य वचनामृतधारासम्पातैस्तस्याः स्त्रियाश्चित्त मन्मथविकारजन्माग्निः शान्तो बभूव। साप्येवं विचारयामास। अहो ! मामकीनो भाग्यसमूहः यदयं वृजिनप्रारम्भोऽपि पुण्यसमूहायाभूत्। अयं सनत्कुमारो मम धर्मगुरुरभूत्, तदस्मै गुरवे गुरुदक्षिणां विद्याधरसमृद्धिप्रदायिनीं विद्याततिं दास्यामि। स्वभावेन बलशालिना साम्प्रतं विद्याबलोग्रेण स्वकान्ताहरणवैरेण सकोपेनानेन सनत्कुमारेण सम्पराये धृतो मम स्वामी यदि

इति तया भानुमत्याभिहितः कृपासागरः प्रबलशस्त्रकदम्बः सनत्कुमारो नगररक्षां स्वीकृत्य ततश्चचाल। रे! रे! नगरविनाशकाः! मा मृता भवत! मा मृता भवत! इति भयङ्कर वचनं वदन्तं तं कुमारं चन्द्ररत्नचूडनामानौ विद्याधरौ समेत्याभिवादनं चक्रतुः। चूडामणीकृतकरयोः पृच्छतोरेतयोश्चन्द्ररत्नचूडयोस्त्यक्तान्तःकरणतापः सनत्कुमारो निजसमाचारं सकलं बभाषे।

अथ तौ खेचरौ प्रमोदमार्गवादित्रसदृश्या वाण्या धर्मादिचतुर्वर्गपृथक्कारणसम्बन्धिगुणोदयं तं कुमारमवादिपाताम्। अरे! महाभिमानिनाऽनेन भीमविद्याधरेण रिपुणा कारणमन्तरापि सततमावां ताडितावभूव। तस्मादीदृशावस्थस्यास्य भीमविद्याधरेन्द्रस्य नगरविनाशायागतौ, यत ऋणस्येव शत्रुभावस्य जीर्णता न भवति। भूयश्चेत् क्षत्रियशिरोमणिस्त्वमस्य नगरस्य रक्षकोऽसि तदा परिचारकयोरावयोरपि रक्षको भवेत्युक्त्वा हर्षमापन्नौ तौ विद्याधरौ सनत्कुमारस्य तत्र विद्याधरेन्द्रत्वाभिषेकं चक्रतुः। ततः सनत्कुमारस्य विद्याधरेन्द्रत्वदर्शनेन परमानन्दवती भानुमती भर्तुर्मार्गेऽध्वगा बभूव (अर्थात् तापसी जाता)। तस्य विद्याधरपतेः सनत्कुमारस्याल्पैरेव दिनैर्विद्याधरपतयो दण्डशान्तिप्रभृतिनीत्याधीनत्वं गताः। अथ निजजनकचरणनियोगजायमानपीडः सनत्कुमारो विद्याधरचक्रयुतः शृङ्गारसुन्दर्य्या सह निजनगरं प्रति चचाल। ससम्भ्रमः स कुमारो यावन्नगरस्याभ्यर्णमायाति तावदाकाशे मेघसदृशं धूमसमूहमपश्यत्। "किमेतदि"ति चिन्ताकुलितचेताः स कुमारः पृथिव्यां लोचनं ददन्नगरनदीकूलेऽसंख्यं दुःखिनं लोकमद्राक्षीत्। तन्मध्ये वह्निशिखाततिभिः सङ्कुलां चितां पश्यन् व्याकुलान्तःकरणः कुमारो विमानादुत्ततार। विपुलकोलाहलं कुर्वद्भिः प्रजासमूहैर्दृश्यमानः स कुमारो व्याकुलमनाश्चितासमीपोपविष्टाया जनन्याश्चरणयोरपतत्। हे वत्स! इयन्तं कालं यावत् क्व स्थितोऽसीति वदन्ती सुतवत्सला रुदत्परिवारासौ माता पुत्रस्य कण्ठे लगित्वा रुरोद। हे जननि!

भीमं स्वकान्तां चाद्राक्षीत्। अत्रावसरे खड्गेन भयङ्करो भीम इमामवादीत्, यदि मद्वचनं न मन्यसे तदा वध्यासि स्वेष्टदेवतां स्मर। अथ नीतिनायिका शृङ्गारसुन्दरी जगाद, मम श्रीसिंहराजपुत्रः शरणं यतः स्त्रीणां पतिरेव देवता। इति सनत्कुमारनामोच्चारणादेधितक्रोधः स आकृष्टकरवालो निर्दयो भीमस्तद्वधाय सज्जोऽभूत्। आः पापिन्! किं विदधासि ? रे! साम्प्रतं म्रियसे म्रियस इत्युच्चस्वरेण वदन् स राजपुत्रः सनत्कुमारस्तदा प्रकटो बभूव। आकस्मिकभयाद् भीमनृपस्य करात् खड्गो भूमावपतत्, यतोऽन्यकामिनीलम्पटानां बलसम्पत्तयो न्यूना भवन्ति। हे वीरमणे! करेण खड्गं स्वीकुरु! मया सह युद्धं कुरु! एवं प्रकारेण कथयन् सनत्कुमारोऽकृतप्रहार एवावोचत्। ततस्तथास्थितो विद्याधरपतिर्लज्जान्वितेन युद्धासज्जेन मानसेन चिन्तयामास। खुरलीमध्यं(कसरतशाला इति भाषायाम्) स्थित्वा जन्मपर्यन्तं योऽस्त्रकलासमूहो मयाऽभ्यस्तः स सम्पूर्णः समये ह्युपस्थित एव नष्टो बभूव। यदियं परकान्ता मयाऽहारि तत्तावन्ममैकमकार्यमभूत्, संग्रामे यदस्त्रसमूहो भ्रष्टस्तद् द्वितीयं लज्जाकरमभूत्। तत् त्यक्ताभिमानोऽहं स्वाधीनासु निजान्तःपुररमणीष्वपि स्वीयं मुखं कथं दर्शयिष्यामि ? हन्त! तस्माद्यैः कर्मभिरहमीदृशीं दशां प्राप्तोऽरिरूपाणि तान्येव कर्माणि जेतुमुद्योगमाश्रये। इति विचार्य कान्तान्वितं सनत्कुमारं क्षमयित्वा स विद्याधरेन्द्रो भीमः खेचरविपिने तापसं व्रतमङ्गीचकार। क्षणादुद्यानपालकाद्भीमनृपसमाचारं श्रुत्वा सम्भ्रांता भानुमती यावदाराममागमत् तावदग्रे ग्रीष्मर्त्तौ सागर इवाग्रे प्रगच्छल्लोकोत्थितो भयङ्करः कोलाहलरवः समभूत्। इतः सनत्कुमारोऽपि मनोज्ञवचनकदम्बैर्निर्मलस्वभावां निजकान्तां समाश्वास्य निजनगराभिमुखो बभूव। तं कृतप्रयाणं दृष्ट्वा भयभीता भीमनृपरमणीदमवोचत्, हे दयालो! शत्रुभ्य इमां नगरीं पाहि पाहि!। मम स्वामिन इमं समाचारं विदन्तो भीमनृपशत्रवो विद्याधरेन्द्रा वेगोत्तुङ्गा नगरविनाशाय समागता अभूवन्।

वभृगहितया पट्टराज्या समन्वितश्चन्द्ररत्नचूडादिभूपितपार्श्वयुगलो वन्दिनां वाचालैः समूहैर्वर्ण्यमानसुकृतोदयोऽसौ पृथिवीपतिः परमप्रमोदामृतप्रवाहपरिप्लुतमुत्पताकं नगरं स्वजनैः सह प्राविशत् । महोत्सवप्रदेऽत्रैव काले विचक्षणो भूजानी राज्ये तनयमभिषिच्य मस्त्रीकस्तपोवनमगच्छत् । एवं पैत्रिकं राज्यं प्राप्य परमानन्दितोऽयं सनत्कुमारो मित्रयोर्विद्याधरयोः खेचरनगरततियुगलमदात् । ततो विद्याप्रभावेण वशीकृतपृथिवीमण्डलोऽसौ सनत्कुमारो दिप्यमानैर्यशोभिर्जगत्रयं भूपयामास । सरलशीलव्रतमाधुर्ये धर्मधुरीणेऽत्र राजनि सकलं वसुधातलं निरन्तरं धर्ममयमभवत् । शीलप्रभावसंजातोदयं मनुष्यैर्विद्याधरैश्च सेवनीयं शृङ्गारसुन्दरीपतिं सनत्कुमारं पश्यन् को नाम शीलवान्नाभूत् ? इत्थं पृथिवीराज्यं भुक्त्वा जन्मावसानेऽनशनभाक् सस्त्रीकः स पृथिवीजानिः सनत्कुमारोऽजितेऽनुत्तरे विमाने गतः । शीलरूपमूलवति गुणरूपस्तम्भवति राज्यरूपपत्रवति यशोरूपकुसुमवति धर्मरूपकल्पवृक्षे सैप राजा क्रमशो मोक्षफलं लप्स्यति । भो भावुका जनाः ! सनत्कुमारशृङ्गारसुन्दरीचरित्रश्रवणान्नवीनाश्चर्यकरमोक्षलक्ष्मीप्राप्तये निर्मलं शीलं भजत ! ।

॥ इति शीलधर्मे सनत्कुमारशृङ्गारसुन्दरीकथा समाप्ता ॥

॥ इति श्रीवर्द्धमानसूरिकृतस्य पद्यमयस्य वासुपूज्यचरित्रस्य संस्कृतगद्यानुवादे

तृतीयो भागः समाप्तिमफाणीत् ॥ श्रीरस्तु ॥

श्रीपितृचरणेभ्यः क्षेम ? इति पृच्छतोऽस्य विदितसुतागमनो राजा नगरात् तत्राजगाम। चरणान्तिके पतन्तं सनत्कुमारमत्युत्कण्ठितो राजा वारंवारं पाणिभ्यामालिलिङ्ग, वारंवारं च शिरसि चुचुम्ब। इयं चिता कथमिति शङ्काभीतस्य पृच्छतः सूनोर्वसुधापतिर्बभाषे, हे पुत्र! दूरस्थः किं जानासि ? हे वत्स! तत्समये त्वया त्यक्ता चित्रशाला, प्राणैस्त्यक्ता निजलोकस्य तनूरिव शोकाय बभूव। तत्समये देवराजनिवासतुल्यं सज्जनानां स्थानसदृशं तन्नगरं यमनगरमिव भूतानां निवासस्थानमभूत्। तत्समये चात्यन्तविलापं कुर्वति नगरलोके दूरं शोकेनेव प्रतिध्वनिना गृहैरपि विलापः कृतः। हे वत्स! तव सङ्गमं विना कृत्याकृत्यादिविपयमजानन्तो वयं तत्समये हा! जीवन्तोऽपि मृतो इवाभूम। मनोज्ञस्त्रीलक्ष्मीनगरोद्यानमन्मथक्रीडाप्रभृतयस्तेऽकृतार्थाः पदार्थास्तत्समये गरलसदृशा अभूवन्। अन्यच्च तव वियोगानलज्वालापीडिता प्राणान् धर्तुमसमर्था तव माता परिमुक्ताहारा जाता। वंशविभूषणरूपस्य तवानवलोकनेन दुःखिता तव जननी वंशदेवतामेव भजमाना पुरतः स्थिता। अष्टमस्य तपसोऽवसाने विपुलभक्तिमती ते जननी तयैव कुलदेव्या स्वप्ने स्वयमादिष्टाऽभूत्। हे पतिव्रते! प्राप्तखेचरसमृद्धिः शीलव्रतः कान्तासहितः स तव पुत्रः सत्यं मासस्यान्ते मिलिष्यति। तस्मात् कारणाद्धे वत्से! तादृशपुत्रवियोगोत्कण्ठितान् इमान् प्राणान् धारयितुमाहारं कथं न करोषि ? इति। प्रगे काले स्वप्नमिमं निवेदयतीयं तव जननी मया यथाकथञ्चिदुपरोधेन प्रतिबोधेन च कृतभोजनाऽकारि। अद्य प्रातःकाले मासस्यान्तिमं दिवसं लब्ध्वा मया भृशं निवारितापि महताग्रहेणैषा तव माता चितानिर्माणमकार्षीत्। अत्रान्तर एव देव्या वचनं सत्यं विधातुं मम वाञ्छां पूरयितुं चास्याः प्राणान् परिपालयितुं हे तात! तवागमनमभूत्। हे महाशय! साम्प्रतं लक्ष्म्या निवासपदं चन्द्रेण सदृशं निजमाननं नागरिकनयनचकोराणां दर्शय त्वम्!। अथ तनयभरितक्रोडः पट्टगजोपविष्टो हस्तिनीवाहनया पुत्र-

यस्य धनदस्य गुणा वित्तसमुपार्जने मूर्तरूपा धर्मा इव शुशुभिरे। तस्य सार्थपतेर्गुणैर्मनोहारिणी धनश्रीनाम्नी स्त्री बभूव, या धनश्री रूपशीलयोरादिमित्रत्वस्य सङ्गमतया रराज (अर्थादनुपमरूपशीलवती सासीत्)। दुर्गतितो निस्सृतो महादुष्कर्मवान् कोऽपि जीवोऽभाग्यानां कैश्चिद्भाग्यैस्तस्या गर्भे प्रादुरभूत्। मुण्डिता त्रुटितवस्त्रवती रजोमय्यां पृथिव्यां शयेऽहमित्यस्या गर्भनिर्भाग्यैः दुःखदो दोहदः समुत्पन्नोऽभूत्। सकलदुःखप्रदमिमं दोहदं कुत्रापि न प्रादुष्करिष्यामि, तथा चैनमपत्यं जायमानमेव द्रुततरं मोक्ष्यामीति विचारयन्तीयं धनश्रीर्यावद्दिवसान्यापयति तावद्भाग्यवशाद् धनदो मृत्युमगमत्। यद्धनं यस्य करे जातं तत्तेनैव निखिलं धनं स्वायत्तीकृतं, ततोऽस्या दोहदः प्रकृत्या शीघ्रतरः पूर्णोऽभूत्। पूर्णैर्दुर्दिनैस्तस्याः पापी पीतनयनकेशवान्छ्यामशरीरः कुब्जो न्युब्जो गर्दभस्वरः पुत्रो जातः। दुःखिनी प्रसूतिरोगपीडिता सा परिवारेण त्यक्ता, तत ईदृक्शरीरे तस्मिन् पुत्रे जन्मवत्येव मृता। समानजातिभिः प्रतिगृहवासिभिस्तस्या अग्निसंस्कारः कृतः, तथा सोऽपि शिशुस्तैरेव दयया दुग्धानि पाययित्वा जीवितः। अनेन जातेनैव सर्वं लक्ष्मीपरिजनादि नष्टं जातमिति जनैस्तस्य "संवर" इति नाम व्यधायि। ततो ग्रीष्मर्तुवायुप्रेङ्खितधूलिपातैर्यवास(जवासो इति भाषायाम्) इवायं संवरोऽज्ञानिलोकानां दुर्वचनैस्ताडनैश्चाधिकमैधिष्ट। तस्य बालकस्य वैरूप्यमेव नगरे वर्त्तनमभूद्यतो धूर्त्तानां धूर्त्तविधैव जीविका भवति। युवावस्थयाऽपि तस्येषदपि वैरूप्यं नाहारि, यतो वैकटिको लेष्टुमुत्तेजयितुमसमर्थो भवति। धावद्भिः कोलाहलकारकैः काकोलैरुलूक इव नगरे पर्यटन्नसौ संवरो बालकैरेकत्रीभूय तिरस्कृतो जातः। दुर्बलानां राजवंशः परं बलमिति विचारयन् स यदि तत्र गच्छति तदा राजपुत्रैः सर्वतोऽभिभूयते स्म। दुःखान्मुक्तनगरः स मार्गे कैः पथिकैर्नापीडि ?, अथ ग्रामे प्रविशन् ग्राम्यैरपि पाषाणयष्टिमुष्टिभिरताडि। इत्थं सर्वतः सर्वैरपि भृशं पीडितोऽसौ संवरो निःश्वासोच्छ्वासितवदनो

# ॥ श्रीवासुपूज्यचरित्रम् ॥

## [ चतुर्थो भागः ]

श्रेष्ठकर्माभ्युदये कारणरूपं शीलमिदं सज्जनानां सेवनीयम्। दुष्कर्मविनाशकं सत्कर्मकारकं च तपो विशेषतया सेवनीयम्। अनादिकालात् प्रकटदुष्कर्मशत्रुसमूहविनाशकं कृपाणधारासदृशमिदं तपो धैर्यवद्भिरादियते। तपः सूर्य इवान्धकार(अज्ञान)दूरीकरणात् सज्जनानां ज्ञाननेत्रे निर्मलतां तत्त्वातत्त्वपरिदर्शनं च यच्छति। कर्मेन्धनानि भस्मसात्कुर्वन्नेधितोऽयं तपोऽग्निः खल्वाश्चर्यजनको नूतनश्च, यो हि शरीरिणां संसृतिसमुत्पन्नं दाहं हरति। हे चतुरा जनाः! अतो दुष्कर्मप्रक्षालनजलसदृशं तपः सेव्यताम्। यत्तपःसेवया संवरनामा मुनिरचिरेणैव कालेन पृथिव्यां सेवनीयो जातः। तथाहि—

### ॥ अथ तपश्चरणे संवरमुनीश्वरकथा ॥

जम्बूद्वीपे मनोहारिगुणसमुद्रनागरिका भरतक्षेत्रालङ्कारभूताऽयोध्याभिधाना नगर्यस्ति। अस्यां नगर्यां महासेननामा राजा विख्यातोऽभवत्। यद्दानं लक्ष्म्याः प्रतिबिम्बमिव चिन्तामणिष्वैक्ष्यत। अस्य महीभुजो माननीयो धनदनामा सार्थपतिरभूत्,

कारणरूप एकः सद्धर्म एवोद्यतो वर्त्तते। पुनश्चामुना धर्मेण विना कर्माभिधशत्रुभिर्जीवस्तेषु दुःखेषु पात्यते, येषां दुःखानां तद्दुःख-कारणरूप एकः सद्धर्म एवोद्यतो वर्त्तते। परन्तु मूर्खा एते क्वचित्समयेऽपि तद्धर्मं किञ्चिदपि नाचरन्ति, येन धर्मेण तद्दुःखवृक्षाणां दुष्कर्मरूपमूलं मेरुसमग्रखण्डतुल्यमस्ति। परन्तु मूर्खा एते क्वचित्समयेऽपि तद्धर्मं किञ्चिदपि नाचरन्ति, येन धर्मेण तद्दुःखवृक्षाणां दुष्कर्मरूपमूलं दूरं क्षेप्तुं शक्नुयुः। अथात्यन्तदुष्कर्मतिरस्कृतः प्रबलाशावानसौ संवरो हस्तौ मुकुटतुल्यौ कृत्वा (मस्तके अञ्जलिं कृत्वा) गुरून् पप्रच्छ। हे भगवन्! प्रायः स कोऽप्युपायः किं कुत्राप्यस्ति? येनोपायेनाहो! दुःकर्मरूपाणां शत्रूणां नाशः स्यात्? अथ गुरुः पीयूषसदृशीं वाणीमुवाच, यद् दुष्कर्मणां मर्मस्थानमथने निष्ठुरं तप एवास्ति। हे अङ्ग! यदि दीक्षाया आनुकूल्येन निस्सङ्गता स्थिरा स्यात् तदा संगरहितानां तत्तपोऽपि तीव्रत्वं धारयति, कर्मरूपवनाग्निशिखागमनमहामेघसदृशी सा दीक्षा गम्भीरहृदयैश्चे-तमो निश्चलतया लभ्यते। अथानया रीत्या तत्त्वार्थं निशम्य पराक्रमी क्षमाधारणतत्परः प्रमोदी स संवरः साग्रहः सन् गुरोः समीपे दीक्षां स्वीचकार। ततः सिद्धान्ताभ्यसनोद्रेकाद्विवेकेन भूपितहृदयः स संवरनामा मुनिर्निर्व्याजं तप आरब्धवान्। श्रेष्ठ-धर्मचातुर्योऽसौ मुनिश्चतुःषष्ठाष्टमैस्तपःसमूहैर्बाणासारैः कर्मपञ्जरं जर्जरमकार्षीत्। ततश्च प्रतीन्द्रियं पुरिमार्धमेकभक्तं नैर्विकृत्यमा-चाम्लं चोपवासं कुर्वाणः कार्यज्ञो जितेन्द्रियचूडामणिः स संवरो मुनिः पञ्चविंशत्या दिनैः "इन्द्रियजयाभिधं" तपो यथा-विधि चकार। ततश्चैकभक्तं नैर्विकृत्यमाचाम्लं भक्तवर्जनमेवं षोडशभिर्दिवसैः स "कषायजयं" नाम तपश्चक्रे। योगानां शुद्ध्यर्थं निर्विकृतिकमाचाम्लमेकभक्तमेवं नवभिर्दिवसै"र्योगशुद्धि"नामकं तपश्चकार। अथोपवासमेकाशनमेकसिक्थकं तथा चैकस्थानं ततो निर्विकृत्यमेकदत्तिमाचाम्लमष्टकवलमितिचैकैकस्य कर्मणो विनाशे स संवरो "अष्टकर्मसूदनाभिधं" तपश्चकार। तथा च यतिः स संवरः सततं त्रिभिस्त्रिभिरुपवासैर्ज्ञानस्य दर्शनस्य चारित्रस्य चापि सेवनं व्यधात्। अथैकादशसंख्यकासु शुक्ला-

रहसि विचारयामास। ते वनवासिनो हरिणा अपि धन्यास्ते पतत्रिणोऽपि बुद्धिमन्तो ये राक्षसकर्ममये मनुष्यलोके प्रविशन्ति चापि न। अतोऽहमपि मनुष्यरहिते स्थाने गच्छामीति विचारयनयं शीघ्रमेव कुत्रापि विपिने जगाम।

अथ त्यक्तजातिशत्रुभावेन समुत्पन्नज्ञानेन साश्रुनयनेन हरिणसमूहेन सनाथीकृतसमीपपृथिवीतलं स्वाध्यायनादमाधुर्येण स्वायत्तीकृतभुवनं मुनीनां मध्ये समासीनं सिद्धसेनं मुनिराजमसौ संवरोऽद्राक्षीत्। हे वत्स! त्वमागच्छागच्छ। इति स मुनीश्वरः स्वयं श्रवणैकामृतगण्डुषैरक्षरैस्तं संवरमाकारयामास। अहो! मुनिराजस्यास्यापूर्वा वाणीति विचार्य तिरस्कृतः पुत्रो जनकस्येव मुनेश्चरणयोः पतित्वा सोऽरुदत्। ततो मुनिराजेन कोमलवचनेन पृष्टः समीपस्थफलोदयः स संवरः स्वीयं दुःखचरित्रं सर्वं कथयामास। अथ कारुणिकोऽसौ मुनिः सकलजीवान्नानन्दयँस्तं संवरमुद्दिश्य यथार्थाद्वितीयकवचरूपं वचनं जगाद। अस्मिन् मनुष्यजन्मनि तवेदं दुखं कियन्मात्रमस्ति ? तथामी जीवा यथाऽनन्तं दुःखं क्षमन्ते तन्निबोध!। कषायविषयानुरक्तो जीववधप्रभृतिष्वनुरक्तो जीवस्तद् दुष्कर्म समुपार्जयति येन कर्मणा जन्मान्तरेऽसौ जीवो निरयेषु भेदनच्छेदनोत्तप्तत्रपुपानकृपाणपत्रसमुत्पन्नैः क्षेत्रसम्बन्धिभिर्महादुःखैः कदर्थितो भवति। तथा प्राप्ततिर्यग्जन्मा तोयस्थलाकाशगमनोऽप्येष जीवो ग्रीष्मशीतवायुवह्निभिर्भृशं पीड्यते। अथ च मनुष्यजन्मत्वेऽपि जीवो नारकप्रतिहस्तकैर्महारोगनिर्धनत्वभृत्यत्ववियोगसमुत्पन्नैर्दुःखैर्दह्यते।। देवजन्मत्वेऽपि प्राणी किल्बिषत्वकिङ्करत्वस्वल्पसमृद्धित्वादितः कुपितशतक्रतुकुलिशाद् युद्धेर्ष्याच्यवनान्नहि सुखभागी भवति। अनया रीत्या कर्मविपाकोऽस्मिञ्जन्मनि जीवान् पीडयेत्, यतो जना अस्य कर्मविपाकस्य फलान्येव जानन्ति न स्वरूपम्। ध्यानयोगानां माहात्म्यं परमात्मनां सामर्थ्यं कर्मणां विपाकं च सर्वज्ञमन्तरा नान्यो जनो जानाति। पुनश्चामुं कर्मविपाकं शुभरूपं विधातुमत्र मोक्षसुख–

यतः श्यामाङ्गारेण प्राप्यमाणो मणिः कथं न स्वीक्रियते ? इति तद्वचनं निशम्य प्रसन्नः सञ्जातरोमाञ्चशरीरः स 'हे प्रभो ! इदं गृहाण !' इति हस्तगृहीतान्नो यतिमवादीत् । अथ विद्वान् साधुः संवरो विचारयामास, किमियं ममासावधानता ? यद्गच्छन्ती रात्रिर्न लक्षिता, नभोन्तर्गच्छन् सूर्यो न ज्ञातः ? किमयं स्वप्नः ? उत चेन्द्रजालम् ? अथवा कोऽपि बुद्धिभ्रमः ? उत च केनापि मायाविना देवेन माया कृता ? । अथवा ममत्वरहितात्मनो ममैभिरनेकैर्विकल्पैः किम् ? सन्देहे समुत्पन्ने शरीरार्थं निश्चितमिदमन्नं न गृह्णामि । इत्थं निश्चयं कृत्वा निर्मलात्मवान् स संवरो मुनिस्तौ प्रति शान्तिपीयूषसमुद्रतरङ्गच्छटाभिर्वर्णततिभिरिदमुवाच । मया च सम्प्रत्येव विभावरीप्रारम्भसमये ध्यानं प्रारेभे, सम्प्रत्येव चाकाशमणिः सूर्यो विचरति । तस्माद्धेतोः कर्मसाक्षिणो रवेरयमुदयः सत्यो वाऽसत्य ? इति संशयप्रेङ्खादोलितचेता अहमन्नं न स्वीकरोमि । अयं जीवोऽलक्षितेषु जन्मसु नक्तन्दिवं पर्वतादधिकं भोजनं समुद्रादधिकं जलं चापि जग्राह । ततो यदि तैर्न तृप्तोऽस्मि तदद्य दिवसस्यापि सन्देहेऽमुनाऽन्नेन गृहीतेन किं तृप्तिं गमिष्यामि ? इति कथयित्वा तपःपराक्रमश्रेष्ठो धैर्यवतामग्रेसरो निर्मलश्रद्धासुचेताः स मुनिर्यावद् ध्याने लीयते तावच्छकटानां पङ्क्तिर्न, न तु सूर्यः, किन्तु तेन मुनिना यथावस्था विभावरी विलोकिता । तस्मिन्नेव समये देवानां पथि दूरं दुन्दुभयो नेदुर्निर्मलसुगन्धिजलमिश्राः पुष्पवृष्टयः प्रसस्रुः । क्रीडाचपलझलत्कारमनोहरमणिमयकुण्डलवान् मुखचन्द्रस्यन्दिसुधाबिन्दुमनोहरहारधारी मस्तकस्थापितपाणियुगलद्विगुणीकृतमुकुटः कश्चिद् देव एनं पापविनाशकं यतिमागत्य प्रणनाम आह च दुष्टेनापि मया यः क्वचित्सत्त्वं नामोचि हे प्रभो ! हे विशालबोध निर्मलतपआकर ! त्वं जय जय !! एकस्मिन् दिवसे सुधर्मसभायां समुपविष्टः श्रेष्ठधर्ममयात्मा प्रमुदितचेताः शतक्रतुरकस्मात् सञ्जातरोमाञ्चः स्वपाणी शिरसि दधार । हे प्रभो ! तवाद्येदृश· प्रमोदः कौतस्कुतः ? इत्यम्बरनाम्ना

मोक्षमार्गे विचरन् स तपोधनः संवरः सूर्येऽस्तं गते स्वस्थानादेकपदमपि नाचलत्। क्रूरेण मोहपृथिवीपतिना सह विहितशत्रुभावः स संवरो मुनिराजः सूर्योदये जाते कुत्राप्येकत्र नातिष्ठत्। जाग्रत्कर्मरूपसंग्रामे व्याकुलचेताः स मुनिराजश्चरणयोर्भग्नाँस्तीक्ष्णान् कण्टकानपि नोद्धरति स्म। अयोग्यस्थानविहितप्रेमरूपापराधयोर्लोचनयोरुदासीन इवैष मुनिराजस्तृणं धूलिकणं च न चकर्ष। समीपस्थविलसन्मुक्तिस्त्रीसमासक्तचित्तः इत्थं निजशरीरेऽपि ममत्वरहितोऽयं निर्मलबुद्धिमान् मुनिरग्रे सिंहे स्फुरत्यपि स्वाभाविकीं निजां गतिं नात्यजत्। धैर्यवान् स मुनिः कदाचित् क्वचिद् योग्यतानिपुणैर्जनैर्दत्तं त्याज्यं तुषसौवीरतक्राद्यं जग्राह। एवमप्रतिबद्धेन निजविहारक्रमेण प्रतिकर्मरहितशरीरः स मुनिः पृथिवीं पावनीं चकार। एवं विहरतस्तस्य मुनेः कियत्यपि समये जाते लाभान्तरायस्य कर्मणः कश्चनोदयो वभूव। क्वचिद्भिक्षां न प्राप्नोति, क्वाप्यकल्प्यां नाभिलषति, क्वापि कल्प्यमानामपि भिक्षुकान्तरैरपेक्षितां न स्वीकरोति। एवं यथा यथासौ मुनिः क्लिष्टोऽभूत् तथा तथा प्रसन्नोऽभूत्, यतः कर्मणां विनाशः यतीनां महानुत्सवो भवति। एवमुग्रविहारस्य सर्वथा त्यक्तभोजनस्य सत्तामात्रदेहस्यास्य मुनिराजस्य षण्मासा व्यतिचक्रमुः। अथ कदाचिद्दिवसे क्वापि विपिने सूर्यास्तसमये शान्तमना धर्महस्तिबंधनस्तम्भीभूतशरीरोऽसौ मुनिरतिष्ठत्। अथायं मुनिः संसारतापदूरीकरणसज्जामृतस्नानं कायोत्सर्गध्यानलयमलभत। ततोऽर्द्धरात्रे काले नखंपचीभूतपृथिवीतलधूलिसमूहः कोऽपि महाँस्तापस्तं मुनिमतापयत्। एतत् किमिति यावदसौ फुल्ललोचनो विचारयति तावल्ललाटंतपतीव्रतेजोवन्तं सूर्यमद्राक्षीत्। ततोऽग्रे प्रांशुवृक्षसमूहच्छायालीनां भुञ्जानलोकपङ्क्तिं शकटश्रेणीमसौ मुनिर्ददर्श। लोकसमूहमध्यगतः पुरुषस्तदैवोद्धृतं दग्धमन्नं त्यक्तुमतिमात्रोत्सुको निर्गच्छन्नितरेण पुरुषेण कथितः। त्यक्तविकल्पभावे जिनकल्पक्रियाकरेऽस्मिन् महामुनाविदं कल्प्यमन्नं यच्छ! यतोऽधुना भिक्षासमयः, दग्धेनानेनान्नेन दत्तेन पुण्यं कथं न क्रीणासि?

अथ तस्मिन् समये गुरून् प्रणम्य तथा मुनिगणानामाज्ञां गृहीत्वा गच्छान्निष्क्रम्य स हर्षेण प्रथमां प्रतिमां प्रारभत। असौ **संवरो** मुनिर्मासं यावद्भोजने पाने चैकैकां दत्तिं गृह्णाति स्म एवं मासे पूर्णे भूयो गच्छे प्राविशत्। एवं स मुनिरेकैकशो दत्तेर्मासस्य तानुवृद्धिं चकार यावत् सप्तमासैरियं सप्तमी **प्रतिमा** पूर्णा बभूव। ततश्च कृताचाम्लपारणैः पानभोजनरहितैरेकान्तरोपवासैर्ग्रामात् बहिरुत्तानशयनशाली प्रकम्पनहीनः सकलान्तरायसहनदक्षोऽसौ मुनिः सप्तभिरहोरात्रैरष्टमीं **प्रतिमां** पूर्णां व्यधात्। नियमपालनगरिष्ठः स इत्थं गोदोहिकासनस्थो भूत्वा सप्तभिर्दिनैर्नवमीमपि **प्रतिमां** व्यतनोत्। एवं पूर्वोक्तविधिपूर्वकं श्रेष्ठध्याने निश्चलचेताः **संवरो** मुनिर्वीरासनस्थो भूत्वा सप्तभिरेव दिनैर्दशमीं **प्रतिमा**मुवाह। अथ षष्ठमहोरात्रं निश्चले वीरासने स्थित्वा हस्तद्वयमूर्ध्वीकृत्यासौ मुनिरेकादशीं **प्रतिमां** पूर्णां विदधे। ततो विहिताष्टमभक्तो संकोच्य लम्बपाणिः स्थिरो मुक्तिशिलान्यस्तलोचनः स यतिरेकरात्रिकीं द्वादशीं **प्रतिमां** पूर्णां चकार। इत्थं यथाविधि कौतूहलकरं तपस्तप्यमानः स **संवरो**ऽनेकविधैः साध्वाचारैः पृथिवीमण्डले विचचार।

अथैकदायं मुनिः **संवरः** **सिद्धसेनाचार्यस्य** चरणकमलयुगलमभिवाद्य मस्तकन्यस्तपाणिरिमां गिरमुदाजहार। हे अनन्यदेयोत्तमधर्मज्ञानप्रद! हे स्वामिन्! यद्यहं योग्योऽस्मि तदा **जिनकल्पकृते** ममाज्ञां देहि! अथ श्रुतज्ञानमहासागरो **गुरुरमुं** संवरमाराधकं विदन् मोक्षलक्ष्मीप्राप्तिकल्पवृक्षाय जिनकल्पायाज्ञामदात्। अथ नवतत्त्वज्ञाता पराक्रमवतामग्रेसरः स **संवरो** **मुनिः** प्राप्तभुवनत्रयराज्यमिवात्मानममन्यत। अथोज्ज्वलचारित्रशाली प्रमोदेन वस्त्रपात्रप्रभृतिकं सकलं श्रीगुरोरग्रे त्यक्त्वा परिवारं परिपृच्छ्य महापराक्रमी स **मुनिर्गजततिं** हन्तुं पर्वतात् पञ्चास्य इव कर्मततिं हन्तुं **सिद्धसेनाचार्यस्य** समीपतो निश्चक्राम। बलाद्विपयचौरे

स्वेकादशीषु मौनधारणपूर्वकोपवासविधानैः स शुभं श्रुतदेवीतपश्चकार। ततः शुक्लपक्षेऽष्टभिरुपवासैस्तथाचाम्लपारणैरेवं षोडशभिर्घस्त्रैः सः "सर्वाङ्गसुन्दरं" नाम तपोऽकार्षीत्। पुनश्च कृष्णपक्षेऽपि पूर्वोक्तविधिरेवेति, ग्लानपालनस्पृहो विषयशत्रुः स संवरो मुनिः "नीरुक् सिंह" नामकं तपो व्यधात्। ततश्चैकान्तरितपारणैर्द्वात्रिंशदाचाम्लैर्निर्मलज्ञानोऽयं मुनिः संवरः "परमभूषणं" नाम तपश्चकार। अथैका प्रतिपद् द्वे च द्वितीये एवं यावत् पञ्चदश पूर्णमास्यो निखिलास्तिथयो निरन्तरं ज्ञेयाः। यत्रोपवासैरेतास्तिथयो विशुद्धाः स्युस्तत् "सर्वसौख्यसम्पत्ति" नामकमुज्ज्वलं तपः स संवरो मुनिश्चकार। जिनेश्वराणां देवनिर्मितानि नव कमलानि भवन्ति, तत्र प्रतिकमलं निरन्तरैरुपवासैरष्टाभिः स संवरो मुनिः "पद्मोत्तरं" नाम तपो व्यधात्। सरलचेतसा स मुनिः पञ्चसप्तत्युपवासैः पञ्चविंशतिपारणै"भद्रनामकं" तपो विदधे। श्रेष्ठधर्मवासनः स यतिः शताधिकषण्णवत्युपवासै(१९६)रेकोनपञ्चाशत्पारणै"र्महाभद्रं"नाम तपश्चकार। ततोऽसौ मुनिः शताधिकपञ्चसप्तति(१७५)मयैरुपवासैः पञ्चविंशत्या पारणै"र्भद्रोत्तरं" नाम तपो विदधे। ततः स मुनिर्द्विनवत्यधिकशतत्रयै(३९२)रुपवासैरेकोनपञ्चाशत्पारणैः "सर्वतोभद्रनामकं" तपोऽभजत्। प्रथमं षष्ठेन ततः सततमेकान्तरैः षष्ठ्योपवासैरयं मुनिः"धर्मचक्रवालं" नाम तपश्चकार। एकाद्येकैकैधितैरुपवासान्तैः शतसंख्यैराचाम्लैः स मुनिः "आचाम्लवर्धमानं" नाम तपश्चकार। एवं चतुर्दश वर्षाणि, त्रिमासीं, दिवसविंशतिं यावत् तदाचाम्लवर्धमाननामकं तपः कुर्वन्नसौ संवरो मुनिः शरीरं कर्म च क्षीणमकार्षीत्। अथैकदासौ संवरो मुनिः शुभकार्यप्रकाशकं गुरुमभिवाद्य द्वादशभिक्षुप्रतिमावहने पप्रच्छ। दशपूर्वधारी धैर्यवान् सबलशरीरोऽसौ संवरो मुनिस्तद्दुष्करस्यापि कर्मणोऽस्य योग्य एवेति चिरं विचार्य स सिद्धसेनाचार्यस्तं संवरमाज्ञापयामास, हे वत्स! अयमर्थस्ते योग्य इति त्वं कुरु!

यतः श्यामाङ्गारेण प्राप्यमाणो मणिः कथं न स्वीक्रियते ? इति तद्वचनं निशम्य प्रसन्नः सञ्जातरोमाञ्चशरीरः स 'हे प्रभो ! इदं-गृहाण !' इति हस्तगृहीतान्नो यतिमवादीत्। अथ विद्वान् साधुः संवरो विचारयामास, किमियं ममासावधानता ? यद्गच्छन्ती रात्रिर्न लक्षिता, नभोन्तर्गच्छन् सूर्यो न ज्ञातः ? किमयं स्वप्नः ? उत चेन्द्रजालम् ? अथवा कोऽपि बुद्धिभ्रमः ? उत च केनापि मायाविना देवेन माया कृता ? । अथवा ममत्वरहितात्मनो मर्मभिरनेकैर्विकल्पैः किम् ? सन्देहे समुत्पन्ने शरीरार्थं निश्चितमिदमन्नं न गृह्णामि। इत्थं निश्चयं कृत्वा निर्मलात्मवान् स संवरो मुनिस्तौ प्रति शान्तिपीयूपसमुद्रतरङ्गच्छटाभिर्वर्णततिभिरिदमुवाच। मया च सम्प्रत्येव विभावरीप्रारम्भसमये ध्यानं प्रारेभे, सम्प्रत्येव चाकाशमणिः सूर्यो विचरति। तस्माद्धेतोः कर्मसाक्षिणो रवेरयमुदयः सत्यो वाऽसत्य ? इति संशयप्रेङ्खादोलितचेता अहमन्नं न स्वीकरोमि। अयं जीवोऽलक्षितेषु जन्मसु नक्तन्दिवं पर्वतादधिकं भोजनं समुद्रादधिकं जलं चापि जग्राह। ततो यदि तैर्न तृप्तोऽस्मि तदद्य दिवसस्यापि सन्देहेऽमुनाऽन्नेन गृहीतेन किं तृप्तिं गमिष्यामि ? इति कथयित्वा तपःपराक्रमश्रेष्ठो धैर्यवतामग्रेसरो निर्मलश्रद्धासुचेताः स मुनिर्यावद् ध्याने लीयते तावच्छकटानां पङ्क्तिर्न, न तु सूर्यः, किन्तु तेन मुनिना यथावस्था विभावरी विलोकिता। तस्मिन्नेव समये देवानां पथि दूरं दुन्दुभयो नेदुर्निर्मलसुगन्धिजल-मिश्राः पुष्पवृष्टयः प्रसस्रुः। क्रीडाचपलझलत्कारमनोहरमणिमयकुण्डलवान् मुखचन्द्रस्यन्दिसुधाविन्दुमनोहरहारधारी मस्तकस्थापित-पाणियुगलद्विगुणीकृतमुकुटः कश्चिद् देव एनं पापविनाशकं यतिमागत्य प्रणनाम आह च दुष्टेनापि मया यः कश्चित्सत्त्वं नामोचि हे प्रभो ! हे विशालबोध निर्मलतपआकर ! त्वं जय जय ॥ एकस्मिन् दिवसे सुधर्मसभायां समुपविष्टः श्रेष्ठधर्ममयात्मा प्रमुदित-चेताः शतक्रतुरकस्मात् सञ्जातरोमाञ्चः स्वपाणी शिरसि दधार। हे प्रभो ! तत्राद्येदृशः प्रमोदः कौतस्कुतः ? इत्यम्बरनाम्ना

मोक्षमार्गे विचरन् स तपोधनः संवरः सूर्येऽस्तं गते स्वस्थानादेकपदमपि नाचलत्। क्रूरेण मोहपृथिवीपतिना सह विहितशत्रुभावः स संवरो मुनिराजः सूर्योदये जाते कुत्राप्येकत्र नातिष्ठत्। जाग्रत्कर्मरूपसंग्रामे व्याकुलचेताः स मुनिराजश्चरणयोर्भग्नाँस्तीक्ष्णान् कण्टकानपि नोद्धरति स्म। अयोग्यस्थानविहितप्रेमरूपापराधयोर्लोचनयोरुदासीन इवैष मुनिराजस्तृणं धूलिकणं च न चकर्ष। समीपस्थविलसन्मुक्तिस्त्रीसमासक्तचित्तः इत्थं निजशरीरेऽपि ममत्वरहितोऽयं निर्मलबुद्धिमान् मुनिरग्रे सिंहे स्फुरत्यपि स्वाभाविकीं निजां गतिं नात्यजत्। धैर्यवान् स मुनिः कदाचित् क्वचिद् योग्यतानिपुणैर्जनैर्दत्तं त्याज्यं तुपसौवीरतक्राद्यं जग्राह। एवमप्रतिबद्धेन निजविहारक्रमेण प्रतिकर्मरहितशरीरः स मुनिः पृथिवीं पावनीं चकार। एवं विहरतस्तस्य मुनेः कियत्यपि समये जाते लाभान्तरायस्य कर्मणः कश्चनोदयो बभूव। क्वचिद्भिक्षां न प्राप्नोति, क्वाप्यकल्प्यां नाभिलषति, क्वापि कल्प्यमानामपि भिक्षुकान्तरैरपेक्षितां न स्वीकरोति। एवं यथा यथासौ मुनिः क्लिष्टोऽभूत् तथा तथा प्रसन्नोऽभूत्, यतः कर्मणां विनाशः यतीनां महान्नुत्सवो भवति। एवमुग्रविहारस्य सर्वथा त्यक्तभोजनस्य सत्तामात्रदेहस्यास्य मुनिराजस्य षण्मासा व्यतिचक्रमुः। अथ कदाचिद्दिवसे क्वापि विपिने सूर्यास्तसमये शान्तमना धर्महस्तिबंधनस्तम्भीभूतशरीरोऽसौ मुनिरतिष्ठत्। अथायं मुनिः संसारतापदूरीकरणसज्जामृतस्नानं कायोत्सर्गध्यानलयमलभत। ततोऽर्द्धरात्रे काले नखंपचीभूतपृथिवीतलधूलिसमूहः कोऽपि महाँस्तापस्तं मुनिमतापयत्। एतत् किमिति यावदसौ फुल्ललोचनो विचारयति तावल्ललाटंतपतीव्रतेजोवन्तं सूर्यमद्राक्षीत्। ततोऽग्रे प्रांशुवृक्षसमूहच्छायालीनां भुञ्जानलोकपङ्क्तिं शाकटश्रेणीमसौ मुनिर्ददर्श। लोकसमूहमध्यगतः पुरुषस्तदैवोद्धृतं दग्धमन्नं त्यक्तुमतिमात्रोत्सुको निर्गच्छन्नितरेण पुरुषेण कथितः। त्यक्तविकल्पभावे जिनकल्पक्रियाकरेऽस्मिन् महामुनाविदं कल्प्यमन्नं यच्छ! यतोऽधुना भिक्षासमयः, दग्धेनानेनान्नेन दत्तेन पुण्यं कथं न क्रीणासि?

सुन्दरकान्तप्राप्तिं च धिक्, यल्लोचनसत्तायाः फलं तनयं न पश्यामि। धन्नैः किं? सैव कामिनी धन्या याऽङ्गणरङ्गणं रजोधूसरितं तनयस्य निजस्य वदनं चिरं चुम्बति। उत्सङ्गशयानपुत्रां रङ्ककामिनीमपि स्तौमि, परं मुक्तावलीभारपूरिताङ्गीं भूजानिकामिनीं न। उत्पतन्निपतंश्चलन् हसंल्लालापङ्कीर्वमंस्तनयः कस्याश्चिद् धन्याया एवोत्सङ्गं समागच्छति। उदारनक्षत्रापि चन्द्ररहिता रात्रिरिवोदारालङ्कारभारवत्यपि कामिनी तनयं विना न शोभते। तस्माद्धेतोर्हे विधातः! हे तात! स्फाराभूषणपाषाणवाहिकां मां कथं सृजसि स? एकेनापि तनयेन रत्नरूपेण कथं नाशोभिष्ठाः? समीपस्थक्रीडाचञ्चलपुत्राः पशुरमण्योऽपि धन्याः, क्रोटसंगतपुत्रास्ताः पाषाणमयरमण्योऽपि धन्याः। मम क्रोडं नयने करौ कण्ठं च धिगस्तु, यैरानन्देन पुत्रो नोपवेशितो न विलोकितो नालिङ्गितो न चावलम्बितः। हहा! भाग्यरहिताहं किं विदधामि? क्व व्रजामि? मम सकलानां सौख्यानां पदेऽपि सुत एकोऽपि न बभूव। इति दुःखसमूहसंघट्टस्फुटदुरःस्थलेव सा जयावली निराशा भूत्वा आम्रवृक्षस्य तले वसुधायां न्यविशत। अश्रुप्लावितं वस्त्रं निःश्वासैः शोषयन्तीव, निःश्वासोद्धतं वसुधापांशुं बाष्पैः संघट्टयन्तीव, हृदयकमलदुःखशल्या घूर्णन्तीवेयं जयावली जानुकूर्परेण हस्तयुगलेन धृतं मस्तकं न्यकम्पयत्। दुःखकारणं प्रष्टुमसमर्थाभिः समीपोपविष्टाभिः सबाष्पनयनाभिः सनिःश्वासवदनाभिः सखीभिः सा दृष्टैव। तत्समये विरहदुःखितो रमणीसमालिङ्गनमहोत्सुकः पृथिवीपालः सभां विसृज्यान्तःपुरं जगाम। तत्र जयावलीं स्वप्रियामदृष्ट्वा भूजानिर्नातिष्ठत्, रात्रिरहितः पौर्णमास्यश्चन्द्र आकाशे कियद् भाति? अथोत्कण्ठितो निष्परिवारः क्रीडाविपिनाभ्यन्तरं समागत्य समीपस्थोऽपि महीपतिस्तया रमण्या नादर्शि। ततस्तादृक्स्वरूपां तां जयावलीमलं निरीक्ष्यात्यन्तपीडितो महीजानिरपि शनैः समीपमेत्य सखेदया वाण्या जगाद। हे देवि! तावके मानसे किं नाम दुःख? इति वचनाकर्णनात् सुप्तोत्थितेवेयं जयावली

लान्तर्भावनया शोभां धारयति। दानशीलतपोवतामपि विधर्मस्यापि च भावना चन्द्रोदरस्येव कौतूहलजनकं फलं यच्छति। तथाहि—

## ॥ अथ भावनायां चन्द्रोदरनृपतिकथा ॥

अथ लक्ष्म्या सह विवाहकारिभिः श्रेष्ठैर्जनैः पूर्णा चतुर्धर्मचतुर्वेदिवती हस्तिपुराभिधाना नगरी वर्त्तते। तत्र नगर्यां शत्रुकामिनीजनाश्रुधाराविस्तृतकीर्त्तिवल्लिः सदाचारकृतार्थः श्रीरामो नाम भूजानिर्बभूव। तस्य महीपतेः शतकामिनीचूडामणिर्ललनाभूषणं तेजसा कृतदेवलोकशोभाविजया जयावली नाम्नी स्त्री जाता। स राजा जितसुवर्णं निजशरीरवर्णं तिरस्कृतशतक्रतुपदं निजपदं सर्वं तया कामिन्यैव सफलममन्यत। स्वामिना प्रेमभिर्लाल्यमाना सा जयावली लोकेषु प्रख्यातमुमामहेश्वरयोः शरीरार्धदानभोगवत् प्रेमाहसत्। अपूर्वेण प्रीतिरज्जुना परस्परं नियन्त्रितौ तौ दम्पती एकैकतो दूरे स्थातुं नैव दक्षौ बभूवतुः। अथैकदा भूपतौ परिषद्भ्राजि तदा शोभिताल्पपरिवारा सा राज्ञी पुष्पोद्यानगृहं कामदेवमभिवादयितुं जगाम। कामदेवस्य सपर्यया स्वीयमात्मानं धन्यं मन्यमाना सा श्रीरामकान्ता यथेच्छमुद्यानरमणीयतामद्राक्षीत्। कमललोचना सा सहचरीभ्यो मनोहरतां दर्शयन्ती सहचरीभिश्च दर्शितं मनोहरत्वं वीक्ष्यानन्दमलभत। प्रेममोहेन वारंवारं वलितया दृशा पृष्ठतः पार्श्वयोर्निजान् बालकानवलोकयन्ती, प्रमोदेन खेलयन्ती, पादाग्रभागेन च वसुधां विलिख्य वारंवारमुल्लासितैर्धान्यकणैरानन्देन कुक्कुशब्देन तान् भोजयन्ती, पुत्रवतीषु गृहीतशिरोभूषणेव कापि कुक्कुटस्य प्रिया विपिने भ्रमन्ती श्रीरामभूपप्रियया जयावल्या व्यलोकि। क्रीडामनोहरां पुत्रैः शोभमानां तां कुक्कुटीं विपिने दृष्ट्वाऽनवलोकिततनयवदनचन्द्रा चन्द्रमुखी सा राज्ञी सखेदं विचारयामास। मम जन्म, जीवनं, भोगान्

चालङ्कृतो बभूव। स स्वयमेवामुं सुहृदं पुष्पघनसारमृगनाभिचन्दनप्रभृतिभिः सुगन्धयामास, परन्तु स्वस्य सुगन्धि न चकार। स मूर्धः स्वार्थं उद्योगरहितो दुःखितो दुःखितस्यास्य वाञ्छां पूरयितुं सततं बाढं जगति बभ्राम। स सुहृदपि प्रीत्यधिकत्वं दर्शयंस्तेन सह स्वपिति, तेन सह जागर्त्ति, तेन सह गच्छति, तेन सह च तिष्ठति। इत्थं तस्य सततमासक्ततया महोदारप्रीतिप्रवाहानन्दितममुं "नित्यमित्र" मिति जना आहुः। ततः किञ्चैप कुलगुरुरिति दाक्षिण्यतः कदाचनायं "विश्वहिता"भिधानस्य पुरुषस्य वचनं शृणोति। विलागो- न्मत्तोऽयं मां मन्यतेऽथवा न मन्यत इति द्विधाचेता विश्वहितः कदापि तमुवाच। मनोहरविस्तीर्णरूपशोभावान् महावंशसमु- त्पन्नोऽयं तव वयस्यः कस्यानन्दं नोत्पादयति? परन्तु यथालमस्मिन्नासक्तोऽसि तथायं मनोऽशुद्धत्वात् प्रीतित्वं न दधाति। यतः कदापि यदैव स्नानेन भोजनेन स नालंक्रियेत तदैवाकृतसत्कार इव स विकारवान् स्यात्। तस्माद्दैवसंयोगतो यावदमुना सह वैमनस्यं न भवेत्तावद्दुःखेऽपि समाश्वासकः कोऽपि सखा विधातुं योग्यस्तेऽस्ति। यतो दैवाद्यदाऽनेन सह विघटसे तदा तवेतरो वयस्यो न भावी, जनास्तु दूरस्था एव त्वां हसिष्यन्ति। अत एकं नयनमनयनेष्वेकं पुत्रमपुत्रेष्वेकं मित्रममित्रेषु जगुस्तन्मित्राणि विधेहि। इत्थं विश्वहितस्य वचनेन किञ्चिदञ्चितमानसोऽसौ मन्दीभूतादरः "कृतज्ञा"भिधानं द्वितीयं वयस्यं व्यधात्। ततः स कृतज्ञनामकं वयस्यं पर्वणि पर्वण्यन्नवस्त्रभूषणसुगन्धताम्बूलसमूहैः प्रसन्नं चकार। तेन सकलेषु पर्वसु पूज्यमानं तं विलोक्य लोकाः "पर्ववयस्य" इति नाम कथयामासुः। एतादृशमित्रयुगलगाढद्वन्द्वपातिनममुं शुद्धबुद्धिं भुवनपूजनीयः स विश्वहितो भूयोऽवदत्। स एष पर्व- वयस्यस्तव दुःखे क्षणं खेदवान् भाव्ययमपि भद्रं परन्त्वहमेतादृशसुहृदर्थं न दिशामि। यो नमस्कारेण वा स्तुत्या वा स्वल्पेन सन्तुष्टो भवेत् तथा दुःखेभ्यः समुद्धर्तुं समर्थः स्यात् स कोऽपि वयस्यो विधीयताम्। ततः शुद्धबुद्धिर्विहस्य मस्तके पाणी 'निधायैतदा

कयतो मम मनसीयं चिन्ता जाता, यदस्य नगरस्य यः स्वामी स दूरादेव पापविजयशाली, यतो नीचात्मनोद्यानपालेनोद्यानं न रमणीयं स्यात्। तदत्र तं महात्मानं पश्यामीति प्रबलाशावता मया निहितनेत्रेण भवान्नीदृशदुःखभुगवलोकितः। हे महीपते! तदहं तावकीनं दुःखं ज्ञातुं द्रुततरमागतोऽस्मि, धर्मधुरन्धराणां सज्जनानां दुःखेन को नाम दुःखितो न स्यात्?। तदहो राजन्! वद! धर्मवतस्तेऽपि किं दुःखं? यतश्चन्द्रतेजःप्रक्षालितस्य कुमुदस्य किं कापि पीडा स्यात्?। अथ महीपतिरुवाच, हे प्रभो! लोचनकमलसहस्रांशुना तनयेन विना मम दुःखान्धकारो व्याप्तोऽस्ति। परन्तु साम्प्रतं तत्तमो निरस्तम्, यत्तत्पुत्रसूर्योदयसूचक एष यौष्माकीणपादारुणोदयोऽवलोकितः। अथ वसुधेन्द्रस्य हास्यपुष्पवतीमभिलषितार्थलतां वाणीं स मुनिराजः स्पष्टं भूषयामास (अर्थादुवाच)। हे राजन्! निश्चितं तवाखिलं शुभमेव भविष्यति, यदस्मिन् मार्गे पथिकानां पदे पदेऽभिलषितं फलं मिलति। हे महीप! अत्रार्थे दृष्टान्तं निशामय!

अथ विशालसमृद्धिशालि स्वर्गमर्त्यपातालप्रख्यातं दूरपाराभिधानं नगरमस्ति। ज्ञानवन्तो विद्वांसो यस्य नगरस्य भूमिगृहाणि "अधोलोकं" तथोच्चैःशिरोगृहाणि "ऊर्ध्वलोकं" कथयन्ति। महारम्भाधीनीकृतदेवदानवमनुष्यसर्प "उग्रशासन" नामा वसुधापतिस्तन्नगरं शास्ति। प्रसन्नेनेव येन राज्ञा देवानामुच्चैःस्थानं दत्तं, कोपवतेव येन सर्पाणामधः स्थानं समर्पितम्। तस्य राज्ञो निखिलतन्नगरविशालसकलकार्यपारंगामी शुद्धबुद्धिनाम्ना विख्यातो मन्त्री बभूव। स्वामिन आज्ञया सततमत्रनगरे भ्रमतश्चिरादेकदा "पुरुषाश्रय" नामकः सुहृन् मिलितः। तस्मिन् मित्रेऽस्य परमस्थिरशालिनी सा कापि प्रीतिर्जाता यया प्रीत्या भोजनसमये पात्रस्यापि भेदो न बभूव। तेनैव मित्रेण स्नातेन सुशोभितेन स प्रसन्नो बभूव, स्वयं च कदापि न स्नातो न

यतः श्यामाद्वारेण प्राप्यमाणो मणिः कथं न स्वीक्रियते ? इति तद्वचनं निशम्य प्रसन्नः सञ्जातरोमाञ्चशरीरः स 'हे प्रभो ! इदं-
गृहाण !' इति हस्तगृहीताम्भो यतिमवादीत् । अथ विद्वान् साधुः संवरो विचारयामास, किमियं ममासावधानता ? यद्गच्छन्ती
रात्रिर्न लक्षिता, नभोन्तर्गच्छन् सूर्यो न ज्ञातः ? किमयं स्वप्नः ? उत चैन्द्रजालम् ? अथवा कोऽपि बुद्धिभ्रमः ? उत च केनापि
मायाविना देवेन माया कृता ? । अथवा ममत्वरहितात्मनो ममैभिरनेकैर्विकल्पैः किम् ? सन्देहे समुत्पन्ने शरीरार्थं निश्चितमिदमन्नं
न गृह्णामि । इत्थं निश्चयं कृत्वा निर्मलात्मवान् स संवरो मुनिस्तौ प्रति शान्तिपीयूषसमुद्रतरङ्गच्छटाभिर्वर्णततिभिरिदमुवाच । मया
च गम्प्रत्येव विभावरीप्रारम्भसमये ध्यानं प्रारेभे, सम्प्रत्येव चाकाशमणिः सूर्यो विचरति । तस्माद्धेतोः कर्मसाक्षिणो रवेरयमुदयः
मत्यो वाऽमत्य ? इति संशयप्रेङ्खादोलितचेता अहमन्नं न स्वीकरोमि । अयं जीवोऽलक्षितेषु जन्मसु नक्तन्दिवं पर्वतादधिकं भोजनं
समुद्रादधिकं जलं चापि जग्राह । ततो यदि तैर्न तृप्तोऽस्मि तदद्य दिवसस्यापि सन्देहेऽमुनाऽन्नेन गृहीतेन किं तृप्तिं गमिष्यामि ?
इति कथयित्वा तपःपराक्रमश्रेष्ठो धैर्यवतामग्रेसरो निर्मलश्रद्धासुचेताः स मुनिर्यावद् ध्याने लीयते तावच्छकटानां पङ्क्तिर्न, न तु
वर्गैः, किन्तु तेन मुनिना यथावस्था विभावरी विलोकिता । तस्मिन्नेव समये देवानां पथि दूरं दुन्दुभयो नेदुर्निर्मलसुगन्धिजलै-
मिश्राः पुष्पवृष्टयः प्रसस्रुः । क्रीडाचपलझलत्कारमनोहरमणिमयकुण्डलवान् मुखचन्द्रस्यन्दिसुधाबिन्दुमनोहरहारधारी मस्तकस्थापित-
पाणियुगलद्विगुणीकृतमुकुटः कश्चिद् देव एनं पापविनाशकं यतिमागत्य प्रणनाम आह च दुष्टेनापि मया यः क्वचित्सत्त्वं नामोचि
हे प्रभो ! हे विशालबोध निर्मलतपआकर ! त्वं जय जय !! एकस्मिन् दिवसे सुधर्मसभायां समुपविष्टः श्रेष्ठधर्ममयात्मा प्रमुदित-
चेताः शतक्रतुरकस्मात् सञ्जातरोमाञ्चः स्वपाणी शिरसि दधार । हे प्रभो ! तवाद्येदृशः प्रमोदः कौतस्कुतः ? इत्यम्बरनाम्ना

मोक्षमार्गे विचरन् स तपोधनः संवरः सूर्येऽस्तं गते स्वस्थानादेकपदमपि नाचलत्। क्रूरेण मोहपृथिवीपतिना सह विहितशत्रुभावः स संवरो मुनिराजः सूर्योदये जाते कुत्राप्येकत्र नातिष्ठत्। जाग्रत्कर्मरूपसंग्रामे व्याकुलचेताः स मुनिराजश्चरणयोर्भग्नाँस्तीक्ष्णान् कण्टकानपि नोद्धरति स्म। अयोग्यस्थानविहितप्रेमरूपापराधयोर्लोचनयोरुदासीन इवैष मुनिराजस्तृणं धूलिकणं च न चकर्ष। समीपस्थविलसन्मुक्तिस्त्रीसमासक्तचित्तः इत्थं निजशरीरेऽपि ममत्वरहितोऽयं निर्मलबुद्धिमान् मुनिरग्रे सिंहे स्फुरत्यपि स्वाभाविकीं निजां गतिं नात्यजत्। धैर्यवान् स मुनिः कदाचित् क्वचिद् योग्यतानिपुणैर्जनैर्दत्तं त्याज्यं तुषसौवीरतक्राद्यं जग्राह। एवमप्रतिबद्धेन निजविहारक्रमेण प्रतिकर्मरहितशरीरः स मुनिः पृथिवीं पावनीं चकार। एवं विहरतस्तस्य मुनेः कियत्यपि समये जाते लाभान्तरायस्य कर्मणः कश्चनोदयो बभूव। क्वचिद्भिक्षां न प्राप्नोति, क्वाप्यकल्प्यां नाभिलषति, क्वापि कल्प्यमानामपि भिक्षुकान्तरैरपेक्षितां न स्वीकरोति। एवं यथा यथासौ मुनिः क्लिष्टोऽभूत् तथा तथा प्रसन्नोऽभूत्, यतः कर्मणां विनाशः यतीनां महान्नुत्सवो भवति। एवमुग्रविहारस्य सर्वथा त्यक्तभोजनस्य सत्तामात्रदेहस्यास्य मुनिराजस्य षण्मासा व्यतिचक्रमुः। अथ कदाचिद्दिवसे क्वापि विपिने सूर्यास्तसमये शान्तमना धर्महस्तिबंधनस्तम्भीभूतशरीरोऽसौ मुनिरतिष्ठत्। अथायं मुनिः संसारतापदूरीकरणसज्जामृतस्नानं कायोत्सर्गध्यानलयमलभत। ततोऽर्द्धरात्रे काले नखंपचीभूतपृथिवीतलधूलिसमूहः कोऽपि महाँस्तापस्तं मुनिमतापयत्। एतत् किमिति यावदसौ फुल्ललोचनो विचारयति तावल्ललाटंतपतीव्रतेजोवन्तं सूर्यमद्राक्षीत्। ततोऽग्रे प्रांशुवृक्षसमूहच्छायालीनां भुञ्जानलोकपङ्क्तिं शकटश्रेणीमसौ मुनिर्ददर्श। लोकसमूहमध्यगतः पुरुषस्तदैवोद्धृतं दग्धमन्नं त्यक्तुमतिमात्रोत्सुको निर्गच्छन्नितरेण पुरुषेण कथितः। त्यक्तविकल्पभावे जिनकल्पक्रियाकरेऽस्मिन् महामुनाविदं कल्प्यमन्नं यच्छ! यतोऽधुना भिक्षासमयः, दग्धेनानेनान्नेन दत्तेन पुण्यं कथं न क्रीणासि?

भजत् । स मुनिर्यत्र यत्र शुद्धायां वसुधायां पदं ददौ तां तां प्रथमत एव स सुरः कण्टककर्कररहितां व्यधात् । निष्कपटस्य मुनिराजस्याभिमुखं समागच्छन्तं हिंसकं प्राणिसमूहं स सुरो दूरेण न्यवारयत् । स देवो ग्रीष्मे पवनरूपो भूत्वा, सूर्ये तपति छत्ररूपो भूत्वा, तप्तवसुधायां शीतलो भूत्वा च मुनेः सपर्यां चकार । एवं विहारं कुर्वन् स यावदेव रामपुरनामकं ग्राममगच्छत् तावदेव सूर्य आकाशमण्डलं व्यरोचत । तत्र ग्रामे धनाभिधानस्य कुटुम्बिनः कुटुम्बिनी धन्यानाम्नी त्याज्येन दग्धेनान्नेन तं यतिराजं प्रत्यलाभयत् । तत्समये, अहो ! दानमहो ! दानमिति वदन्नयमम्बरसुर आकाशात् पुष्पवृष्टीर्व्यधात् । एवं पदे पदे विस्तार्यमाणगुरुकृतप्रभावनः स मुनिस्तपोऽस्त्रधारया कर्म विदारयन् विहारं कृतवान् । अथायुषः शेषे कृतानाहारव्रतो विद्वान्, सशोकेन तेन सुरेण सेव्यमानचरणकमलः पञ्चनमस्कारान् स्मृत्वा वृक्षसमीपे निश्चलासनो निर्मलध्यानरसानन्दलयलीनहृदयो यतिराजः संवरः समीपस्थमुक्तिसौख्यसमूहनिष्यन्दैर्भरितमिव सर्वार्थसिद्धिनामकं विमानं प्राप । तस्माद्धेतोर्हे लोकाः ! इत्थं मुनिराजस्य संवरस्य सत्यां कथां निशम्य कर्ममर्मभिदेऽमुष्मै तपसे भवद्भिर्यत्नः कर्त्तव्य इति ॥

## ॥ इति तपश्चरणे संवरमुनीश्वरकथा ॥

प्रभावनाप्रभृत्याभूषणाकृष्टभुवनमानसो दानशीलतपःशरीरस्य धर्मस्य जीवो भावनाऽस्ति । अज्ञानान्धकारसन्निपाते ध्याने मोक्षनगरमार्गे पथिकस्यात्मनो भावना ध्वान्तविनाशाय रत्नदीपसदृश्यस्ति । संसारसमराय प्रधावतां सुपात्रदानशीलतपसामग्रेसरी भावनैकैव महावीराणां कार्यकर्त्री भवति । सत्पुरुषाणां हृदये दमक्षमादिधर्ममुक्तावली तदन्तर्गतप्रधानतेजोवत्या निर्म-

देवेन पृष्ट इन्द्रो जगाद। किं पृथिवीमण्डलपवित्रकारी कोऽपि महातपस्वी वर्त्तेत? इत्यद्य हृदयनयनेन मया भरतक्षेत्रे गतम्। तत्र भरतक्षेत्रे तेजसां पुञ्जो वसुधातलभूषणं सूर्य इव तपसां पुञ्जः संवरो नाम मुनिचन्द्रो व्यलोकि। भुवनैकपूज्यस्य तस्य मुनिराजस्य दुष्करे तपसि दृढत्वमवलोकयतो मम सकलक्लेशापनोदी हर्षावेशोऽभवत्। तत्त्वज्ञानवतां श्रेष्ठोऽयं मुनिः केनापि न चाल्यत इति विचार्य मुदावेशेन मयास्य यतेर्नमस्कारः कृतः। अथ शक्रसामानिकः स देवः कोपेनोवाच, यन्मनुष्यः सत्त्वान्न चाल्यत इति त्वदीयं वचनमसत्यम्। स्वप्रभुत्वान्निजेच्छयोदाहरन् प्रभुरिह केन वार्यते? परं अहं षण्मासाभ्यन्तरे प्रकटतया तं सत्त्वभ्रष्टं करोमि। इति प्रतिज्ञां विधाय मूर्खबुद्धिरसौ शतक्रतुना वारंवारं वार्यमाणोऽपि तत्र नियमभङ्गाय प्रचचाल। धिगस्तु, यतः स निजपुण्यसमूहस्येव तव भिक्षाऽऽदानेषु षण्मासावधिं यावत् प्रचण्डं विघ्नसमूहं चकार। तेनैव पापिनाऽत्र रात्रौ मायामयः सूर्यो भुञ्जाननरसमूहव्याप्तशकटःश्रेणी च तन्यते स्म। एवं महाछलनाट्येनापि त्वं न चालितोऽसि, यद्वा संसारनाटकेनाचालितः केन चाल्यते?। हे यते! येन पापात्मना तवेत्थं विरुद्धमाचरितं सोऽहमेवास्मि, तस्माद् हे प्रभो! मामकीनं सर्वमपराधं क्षमस्व! इति कथयित्वा दुःखानन्दाश्रुमिश्रदर्शनो विविधस्तवनमहास्वरोऽयं देवो मुनेश्चरणयोः पपात। अथ स्वीकृतपुण्यप्राप्तिवचनो मुनिर्विमर्शसागरचञ्चत्कौमुद्या वाण्या प्रणमन्तं तं देवमवोचत्। हे कृतिन्! न हि तावकीनोऽपराधो जातः, किन्तु ममोपकार एव कृतः, तव साहाय्यप्रभावान्मयादुष्कर्म नाशितम्। परन्तु त्वया मदीयोऽपराधः सोढव्यो यदहमेवं तव दुष्कर्मोपार्जनहेतुरभूवम्। एवं कपटरहितयोः पुण्यसंलापं विस्तारयतोस्तयोरुदयपर्वतशिखरे सूर्योऽशोभिष्ट। अथैनं यतिं संवरं प्रणम्यासौ सुरस्तिरो बभूव। अथेर्यासमितिविहारकुशलो यतिश्चचाल। महाबुद्धिमान्निर्मलभावनः स सुरो निजापराधपश्चात्तापेन गृहीतादर्शनभावः सन् मुनीन्द्रं तम-

सुन्दरकान्तशान्तिं न भिद्, यल्लोचनसत्तायाः फलं तनयं न पश्यामि। धनैः किं? सैव कामिनी धन्या याऽङ्गणराङ्गणे रजोधूसरितं तनयस्य निजस्य वदनं चिरं चुम्बति। उत्सङ्गशयानपुत्रां रङ्ककामिनीमपि स्तौमि, परं मुक्तावलीभारपूरिताङ्गां भूजानिकामिनीं न। उत्पतन्निपतंश्चलन् हसंल्लालापङ्क्तीर्वमंस्तनयः कस्याश्चिद् धन्याया एवोत्सङ्गं समागच्छति। उदारनक्षत्रापि चन्द्ररहिता रात्रिरिवोदारालङ्कारभारवत्यपि कामिनी तनयं विना न शोभते। तस्माद्धेतोर्हे विधातः! हे तात! स्फाराभूषणपाषाणवाहिकां मां कथं सृजसि स्म? एकेनापि तनयेन रत्नरूपेण कथं नाशोभिष्ठाः? समीपस्थक्रीडाचञ्चलपुत्राः पशुरमण्योऽपि धन्याः, क्रोडसंगतपुत्रास्ताः पाषाणमयरमण्योऽपि धन्याः। मम क्रोडं नयने करौ कण्ठं च धिगस्तु, यैरानन्देन पुत्रो नोपवेशितो न विलोकितो नालिङ्गितो न चावलम्बितः। हहा! भाग्यरहिताहं किं विदधामि? क्व व्रजामि? मम सकलानां सौख्यानां पदेऽपि सुत एकोऽपि न बभूव। इति दुःगममूहसंघट्टस्फुटदुरःस्थलेव सा जयावली निराशा भूत्वा आम्रवृक्षस्य तले वसुधायां न्यविशत। अश्रुप्लावितं वस्त्रं निःश्वासैः शोषयन्तीव, निःश्वासोद्धतं वसुधापांशुं बाष्पैः संघट्टयन्तीव, हृदयकमलदुःखशल्या घूर्णन्तीवेयं जयावली जानुकूर्परेण हस्तयुगलेन धृतं मस्तकं व्यकम्पयत्। दुःखकारणं प्रष्टुमसमर्थाभिः समीपोपविष्टाभिः सबाष्पनयनाभिः सनिःश्वासवदनाभिः सखीभिः सा दृष्टा। तत्समये विरहदुःखितो रमणीसमालिङ्गनमहोत्सुकः पृथिवीपालः सभां विसृज्यान्तःपुरं जगाम। तत्र जयावलीं स्वप्रियामदृष्ट्वा भूजानिर्नातिष्ठत्, रात्रिरहितः पौर्णमास्यश्चन्द्र आकाशे कियद् भाति? अथोत्कण्ठितो निष्परिवारः क्रीडाविपिनाभ्यन्तरं समागत्य समीपस्थोऽपि महीपतिस्तया रमण्या नादर्शि। ततस्तादृक्स्वरूपां तां जयावलीमलं निरीक्ष्यात्यन्तपीडितो महीजानिरपि शनैः समीपमेत्य सखेदया वाण्या जगाद। हे देवि! तावके मानसे किं नाम दुःखं? इति वचनाकर्णनात् सुप्तोत्थितेवेयं जयावली

लान्तर्भावनया शोभां धारयति। दानशीलतपोव्रतामपि विधर्मस्यापि च भावना चन्द्रोदरस्येव कौतूहलजनकं फलं यच्छति। तथाहि—

## ॥ अथ भावनायां चन्द्रोदरनृपतिकथा ॥

अथ लक्ष्म्या सह विवाहकारिभिः श्रेष्ठैर्जनैः पूर्णा चतुर्धर्मचतुर्वेदिवती हस्तिपुराभिधाना नगरी वर्त्तते। तत्र नगर्यां शत्रुकामिनीजनाश्रुधाराविस्तृतकीर्त्तिवल्लिः सदाचारकृतार्थः श्रीरामो नाम भूजानिर्बभूव। तस्य महीपतेः शतकामिनीचूडामणिर्ललनाभूषणं तेजसा कृतदेवलोकशोभाविजया जयावली नाम्नी स्त्री जाता। स राजा जितसुवर्णं निजशरीरवर्णं तिरस्कृतशतक्रतुपदं निजपदं सर्वं तया कामिन्यैव सफलममन्यत। स्वामिना प्रेमभिर्लाल्यमाना सा जयावली लोकेषु प्रख्यातमुमामहेश्वरयोः शरीरार्धदानभोगवत् प्रेमाहसत्। अपूर्वेण प्रीतिरज्जुना परस्परं नियन्त्रितौ तौ दम्पती एकैकतो दूरे स्थातुं नैव दक्षौ बभूवतुः। अथैकदा भूपतौ परिषद्भ्राजि तदा शोभिताल्पपरिवारा सा राज्ञी पुष्पोद्यानगृहं कामदेवमभिवादयितुं जगाम। कामदेवस्य सपर्यया स्वीयमात्मानं धन्यं मन्यमाना सा श्रीरामकान्ता यथेच्छमुद्यानरमणीयतामद्राक्षीत्। कमललोचना सा सहचरीभ्यो मनोहरतां दर्शयन्ती सहचरीभिश्च दर्शितं मनोहरत्वं वीक्ष्यानन्दमलभत। प्रेममोहेन वारंवारं वलितया दृशा पृष्ठतः पार्श्वयोर्निजान् बालकानवलोकयन्ती, प्रमोदेन खेलयन्ती, पादाग्रभागेन च वसुधां विलिख्य वारंवारमुल्लासितैर्धान्यकणैरानन्देन कुष्कुशब्देन तान् भोजयन्ती, पुत्रवतीषु गृहीतशिरोभूषणेव कापि कुक्कुटस्य प्रिया विपिने भ्रमन्ती श्रीरामभूपप्रियया जयावल्या व्यलोकि। क्रीडामनोहरां पुत्रैः शोभमानां तां कुक्कुटीं विपिने दृष्ट्वाऽनवलोकिततनयवदनचन्द्रा चन्द्रमुखी सा राज्ञी सखेदं विचारयामास। मम जन्म, जीवनं, भोगान्

मार्गं त्यजन्तं, सूर्यमध्यभागादुत्कीर्णमिव शोभासमूहव्याप्तं, जनानां नयनानि कमलवद्विकासयन्तं, चिरं खेलन्तीनां पञ्चमहाव्रतम-
यलक्ष्मीनां विलासगृहकमलायमानचरणहस्तवदनं, विस्तृतशरीरपुनर्भवकान्तिक्रीडया लज्जितैरिवाचेतनैरपि तैः सुवर्णरत्नभारैरशोभितं,
अमुना सहैव मोक्षेऽपि गमिष्यामीति मनोरथाल्लाघवार्थमिव कृशी भवता शरीरेण शोभमानं, विधीयमानतपोभासुरं, कृतैः करि-
ष्यमाणैश्च मूर्त्तिमद्भिस्तपोभिरिव साधुभिः सेवितं, निजाश्चर्यजनकं भाग्यमिव पुरोभागे गगनादवतरन्तं विनयंधराभिधानं
विद्याधरमुनीश्वरमवलोकितवन्तौ। ततश्च स मुनिराजः पृथिव्यां पदमदात्, सहर्षः सपरिवारश्च महीपालस्तं मुनिं त्रिःप्रद-
क्षिणीकृत्य प्रणनाम। अथ वसुधावल्लभश्रेष्ठः शिरसि करौ कृत्वा दत्ताशीर्वचनं नाशिताशुभशत्रुं यतिं तं निवेदयामास, हे प्रभो!
अस्याकाशाङ्गणस्य किमभाग्यं प्रकटमभूत्? अथवा मम पृथिव्याः किं भाग्यं विजृम्भितं? यद्गगनाङ्गणं त्यक्त्वा त्वमिमां पृथिवी-
मश्रिश्रियः? हे नाथ! अद्याहं कृतकृत्योऽभूवमद्य मे जन्म सफलमद्य मे जीवितं प्रशंसनीयमद्य च मदीयं राज्यं निर्मलं जातम्।
तवस्तुतिपीयूषे वचने दर्शने श्वाससुगन्धौ चरणस्पर्शे ममेन्द्रियैः परस्परं स्पर्धया कलहः क्रियते। तद् हे प्रभो! पञ्चेन्द्रियप्रसन्नतार्थं
शब्दवर्तीं निर्मलां सुगन्धिं मधुरां वाचमाज्ञाप्रदानकृपया देहि! अथ तीर्थङ्करप्रभुसिद्धान्तकल्पवृक्षपुष्पैर्वचनैर्मुनिराजः पृथिवीपति-
कर्णं भूषयामास (अर्थादुवाच)। हे राजन्! चिरादाकाशमार्गेण पापसमूहस्पर्शविनाशनसमर्थां तीर्थयात्रां विदधतो ममाद्यैव श्रेष्ठध-
र्मगजबन्धनस्तम्भैरिव जिनेश्वरप्रभुमन्दिरसमूहैरलङ्कृतं, जिनेश्वरप्रतिमासमीपे क्रियमाणधूपधूमतरङ्गनाशितैर्मशकैरिव तावकच-
क्रिक्षीणैरघसमूहैरपीडितप्रजाजनं, पौषधग्राहिणां गृहस्थानां भित्तिलम्बितै रत्नाभरणै रात्रौ पौषधशालास्वपि नाशितान्धकारसमूहं,
विप्रपोदारकान्ति, प्रकटमुक्तामालाकुसुमसमूहमिदं तव नगरं नयनगोचरमभूत्। हे पृथिवीनाथ! तत्प्रेमयुक्तहृदयस्य दूरतो विलो-

स मूर्खः नालङ्कृतो बभूव। स स्वयमेवामुं सुहृदं पुष्पघनसारमृगनाभिचन्दनप्रभृतिभिः सुगन्धयामास, परन्तु स्वस्य सुगन्धि न चकार। स सुहृदपि प्रीत्यधिकत्वं दर्शयंस्तेन सह स्वपिति, स्वार्थं उद्योगरहितो दुःखितो दुःखितस्यास्य वाञ्छां पूरयितुं सततं बाढं जगति बभ्राम। इत्थं तस्य सततमासक्ततया महोदारप्रीतिप्रवाहानन्दितममुं "नित्यमित्र" तेन सह जागर्त्ति, तेन सह गच्छति, तेन सह च तिष्ठति। इत्थं तस्य सततमासक्ततया महोदारप्रीतिप्रवाहानन्दितममुं "नित्यमित्र"मिति जना आहुः। ततः किञ्चैप कुलगुरुरिति दाक्षिण्यतः कदाचनायं "विश्वहिता"भिधानस्य पुरुषस्य वचनं शृणोति। विलासोन्मत्तोऽयं मां मन्यतेऽथवा न मन्यत इति द्विधाचेता विश्वहितः कदापि तमुवाच। मनोहरविस्तीर्णरूपशोभावान् महावंशसमुत्पन्नोऽयं तव वयस्यः कस्यानन्दं नोत्पादयति? परन्तु यथात्वमस्मिन्नासक्तोऽसि तथायं मनोऽशुद्धत्वात् प्रीतित्वं न दधाति। यतः कदापि यदैव स्नानेन भोजनेन स नालंक्रियेत तदैवाकृतसत्कार इव स विकारवान् स्यात्। तस्माद्दैवसंयोगतो यावदमुना सह वैमनस्यं न भवेत्तावद्दुःखेऽपि समाश्वासकः कोऽपि सखा विधातुं योग्यस्तेऽस्ति। यतो दैवाद्यदाऽनेन सह विघटसे तदा तवेतरो वयस्यो न भावी, जनास्तु दूरस्था एव त्वां हसिष्यन्ति। अत एकं नयनमनयनेष्वेकं पुत्रमपुत्रेष्वेकं मित्रममित्रेषु जगुस्तन्मित्राणि विधेहि! इत्थं विश्वहितस्य वचनेन किञ्चिदञ्चितमानसोऽसौ मन्दीभूतादरः "कृतज्ञा"भिधानं द्वितीयं वयस्यं व्यधात्। ततः स कृतज्ञनामकं वयस्यं पर्वणि पर्वण्यन्नवस्त्रभूषणसुगन्धताम्बूलसमूहैः प्रसन्नं चकार। तेन सकलेषु पर्वसु पूज्यमानं तं विलोक्य लोकाः "पर्ववयस्य" इति नाम कथयामासुः। एतादृशमित्रयुगलगाढद्वन्द्वपातिनममुं शुद्धबुद्धिं भुवनपूजनीयः स विश्वहितो भूयोऽवदत्। स एप पर्ववयस्यस्तव दुःखे क्षणं खेदवान् भाव्ययमपि भद्रं परन्त्वहमेतादृशसुहृदर्थं न दिशामि। यो नमस्कारेण वा स्तुत्या वा स्वल्पेन सन्तुष्टो भवेत् तथा दुःखेभ्यः समुद्धर्त्तुं समर्थः स्यात् स कोऽपि वयस्यो विधीयताम्। ततः शुद्धबुद्धिर्विहस्य मस्तके पाणी 'निधायेदृशो

कयतो मम मनसीयं चिन्ता जाता, यदस्य नगरस्य यः स्वामी स दूरादेव पापविजयशाली, यतो नीचात्मनोद्यानपालेनोद्यानं न रमणीयं स्यात्। तदत्र तं महात्मानं पश्यामीति प्रबलाशावता मया निहितनेत्रेण भवान्नीदृशदुःखभुगवलोकितः। हे महीपते! तदहं तावकीनं दुःखं ज्ञातुं द्रुततरमागतोऽस्मि, धर्मधुरन्धराणां सज्जनानां दुःखेन को नाम दुःखितो न स्यात्?। तदहो राजन्! वद! धर्मवतस्तेऽपि किं दुःखं? यतश्चन्द्रतेजःप्रक्षालितस्य कुमुदस्य किं कापि पीडा स्यात्?। अथ महीपतिरुवाच, हे प्रभो! लोचनकमलसहस्रांशुना तनयेन विना मम दुःखान्धकारो व्याप्तोऽस्ति। परन्तु साम्प्रतं तत्तमो निरस्तम्, यत्तत्पुत्रसूर्योदयसूचक एष यौष्माकीणपादारुणोदयोऽवलोकितः। अथ वसुधेन्द्रस्य हास्यपुष्पवतीमभिलषितार्थलतां वाणीं स मुनिराजः स्पष्टं भूषयामास (अर्थादुवाच)। हे राजन्! निश्चितं तवाखिलं शुभमेव भविष्यति, यदस्मिन् मार्गे पथिकानां पदे पदेऽभिलषितं फलं मिलति। हे महीप! अत्रार्थे दृष्टान्तं निशामय!

अथ विशालसमृद्धिशालि स्वर्गमर्त्यपातालप्रख्यातं दूरपाराभिधानं नगरमस्ति। ज्ञानवन्तो विद्वांसो यस्य नगरस्य भूमिगृहाणि "अधोलोकं" तथोच्चैःशिरोगृहाणि "ऊर्ध्वलोकं" कथयन्ति। महारम्भाधीनीकृतदेवदानवमनुष्यसर्प "उग्रशासन" नामा वसुधापतिस्तन्नगरं शास्ति। प्रसन्नेनेव येन राज्ञा देवानामुच्चैःस्थानं दत्तं, कोपवतेव येन सर्पाणामधः स्थानं समर्पितम्। तस्य राज्ञो निखिलतन्नगरविशालसकलकार्यपारंगामी शुद्धबुद्धिनाम्ना विख्यातो मन्त्री बभूव। स्वामिन आज्ञया सततमत्रनगरे भ्रमतश्चिरादेकदा "पुरुषाश्रय" नामकः सुहृन् मिलितः। तस्मिन् मित्रेऽस्य परमस्थिरशालिनी सा कापि प्रीतिर्जाता यया प्रीत्या भोजनसमये पात्रस्यापि भेदो न बभूव। तेनैव मित्रेण स्नातेन सुशोभितेन स प्रसन्नो बभूव, स्वयं च कदापि न स्नातो न

मामुः । इत्थमेतेन वयस्यत्रयेण सततं सन्तुष्टो भवन्नेष शुद्धबुद्धिरुग्रशासननृपस्य शासने चिरं तस्थिवान् । एकदा नित्यमित्रेण साकमेकशयने स्थितः स शुद्धबुद्धिर्विपुलभोगविभूषितः सुखं शेते स्म । ततो यावदयं निद्रां तत्याज तावत् स्वसमीपस्थान् कृष्ण-वर्णान् रक्तनयनान् भयङ्करान्दुर्द्धर्षमुद्गरहस्तान् पुरुषानद्राक्षीत् । सञ्जातक्रोधस्य स्वामिन आज्ञापालका यूयं किमुपस्थिताः ? केना-परावेन स्वामिना मयि किं कारितमस्ति ? एवं तेन शुद्धबुद्धिना कृतप्रश्नास्त ऊचुः-दोषज्ञस्तावत् स्वाम्येव, परन्तु त्वमस्मात् प्रभो-रधिकारादुत्तारयित्वाद्य कूपे क्षिप्तोऽसि ! इति तेषां वचनं निशम्य भयसमूहव्याकुलमनाः सोऽयं शनैर्गुप्तया वाण्या नित्यमित्रं प्रति जगाद । हे सखे ! सखे ! त्वमुत्तिष्ठ ! कथञ्चिदपि मां पाहि ! साम्प्रतं मयि राजोग्रशासनः क्रुद्धोऽभूत् । सम्पत्तौ शरीरिणां कति लुब्धाः सुहृदो न स्युः ? यो विपत्तावपि दृश्यते तेनैव मित्रेण वसुन्धरा रत्नप्रसवयित्री कथ्यते । हे वयस्य ! त्वं मम पितृमातृजा-याभ्रातृतनयादिभ्योऽपि वत्सलोऽसि कष्टादुद्धाराय सद्वयस्यो धार्यते । तत्साम्प्रतमनेन महीपतिना पीड्यमानस्य ममापारकष्टसाग-रतरणाय नौरूपो भव ! अथ म्लानवदनो नित्यवयस्य इत्याह-भोः ! कुपितं राजानं मे नु किं कथयसि ? आवयोः क इव सम्बन्धः ? मामसौ किं न जानाति ? इति भ्रान्त्येव शुद्धबुद्धिस्तमित्यवादीत्-तव कश्चिद् भ्रमः ? किं मां न वेत्सि त्वम् ? अथायमुवाच-विदितोऽसि, किमपि राजविरुद्धं कर्माकार्षीस्तन्न्यायनिष्ठ उग्रशासनमहीपस्त्वां न्यग्राहयत् । अतो राजविरुद्धकार्य-कारिणा त्वया मम किमपि न प्रयोजनं, निजकृतस्य कर्मणः फलमेकोऽपि त्वं दण्डं सहस्व तदुक्तम्,—

"अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् । नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" ॥१॥

वयस्यः क्व प्राप्य' इति विश्वहितं पप्रच्छ। अथ कर्णानन्दप्रदानसमर्थवचनविलास एष विश्वहितः शुद्धबुद्धेरग्रे जगद्धितकरं वचनमुवाच। निशानायककान्तिसदृशनिर्मलकेशं, चञ्चज्जाह्नवीतरङ्गायमानशोभनीयोत्तमवस्त्रं, मुक्तामलयजघनसारसमूहश्वेततरशोभं, मनोहरमुकुटकुण्डलहारकेयूरकङ्कणाभरणं, नाभिपर्यन्तलम्बमानकूर्चं, उच्चविशालशरीरं, सततं हास्यमुखं, पुरतोऽभिवादयतः पुरुषान् प्रेममय्या दृष्ट्यावलोकयन्तं, महासमृद्धिवन्तमेतादृशं पुरुषं हे शुद्धबुद्धे! नगरमध्ये परिभ्राम्यन् कदाचन क्वापि त्वं पश्यसि। अथ शुद्धबुद्धिरुवाच–हे तात! कदाचन जिनमन्दिरे, कदापि मुनीनामुपाश्रये, कदापि सज्जनानां गृहे, कदापि राजमार्गे सञ्चरन्तं श्रेष्ठैर्जनैः सेव्यमानं जनोत्तमं मार्गे संचलन्नहं पश्यामि। इति तद्वचनं श्रुत्वा विश्वहित उवाच–तत् त्वं तं वयस्यं विधेहि! हे अङ्ग! तेन सह मित्रत्वे तव कुतोऽपि दुःखं न स्यात्। यतः स सर्वज्ञो महाँल्लोकनाथाभिधानः सिद्धः पुरुषो निजाश्रितं जनं राजवह्निकूपभुजंगप्रभृत्युपद्रवाद् रक्षति। इत्थं तस्योपदेशेन शुद्धबुद्धिस्तेन सह मित्रत्वं कर्त्तुमिच्छति परन्तु प्रत्यहं विस्मरत्येव। ततो विश्वहितेन वारंवारमभियोगे कृते कदाचिद्वाहनस्थ एव स शुद्धिबुद्धिस्तं लोकनाथं ववन्दे। ततः कदाचित् प्रयोजनवशाद् व्रजन् मार्गे दूरे विलोकितस्य तस्य लोकनाथस्य समीपस्थैर्जनैः प्रणामसन्देशं प्रेषयामास। ततः कदाचित् स केनचिदुपायनी-कृतं मनोहरफलकुसुमादिकं यस्य कस्यापि करेण तस्मै लोकनाथाय प्रेषयामास। 'दूरस्थोऽपि स महात्मा वाहनादुत्तीर्य स्वयं गत्वा प्रणम्यते तथा कुसुमफलप्रभृतिकमस्मै स्वयमुपानीकर्त्तव्यं, हे दक्ष! इत्थं सेव्यमानोऽयं लोकनाथोऽत्यन्तदाक्षिण्यपूर्णः कुतोऽपि तावकं भावि कष्टं स्पष्टं निवारयिष्यति', एवं भूयो विश्वहितेन कथितोऽसौ शुद्धबुद्धिर्हर्षेण वाहनादुत्तीर्य तं लोकनाथं कुसुमफलादिभिः पूजयति प्रणमति च। वर्त्मनि दृष्टममुं लोकनाथमयं शुद्धबुद्धिर्नियमेन वन्दति इति जनास्तं तस्य "प्रणामवयस्यं" कथया-

गिमध्यगगनभयङ्करा अतिविशालहृदया विस्तृतदर्शना मनोहराकारा मुक्तावलीदृढग्रन्थिग्रहावलितवेणयः केचन पुरुषाः सारसरा उत्तरस्या दिशः शुद्धबुद्धिसमीपमाजग्मुः। रे मत्ताः! अमुं शुद्धबुद्धिं त्यजत! अथवा संग्रामं कर्तुं शस्त्रं गृह्णत! इति तेषां वाण्या राजसेवकैर्युद्धे स्थितम्। तत उभयपक्षाणां दूरोद्धुतधूल्यन्धकारः प्रकम्पितभुवनमानसो महान् संग्रामः समभूत्। ते महापुरुषा उच्चैः स्थितस्य जनस्य पश्यतस्तीक्ष्णायुधान् राजपुरुषान् भृशं जघ्नुस्तराम्। तैः सिद्धमहापुरुषैस्ते राजपुरुषास्त्रासिताः, पातिताः, क्षुण्णाः, द्रारिताः, मारिताश्च,ततस्ते महापुरुषा विजयनर्त्तनं चक्रुः। तव प्रणामवयस्यो लोकनाथस्त्वामाकारयेदिति तं शुद्धबुद्धिं कूपान्ता-द्रुन्नेन गृहीत्वा ते महापुरुषा अचलन्। ततस्तैः पुरुषैः सह पुरतो गच्छन् स शुद्धबुद्धिः शिखरोल्लिखिताकाशं, असदृशशोभायमान-सुवर्णमयसर्वाङ्गमनोहरं, ध्वजाग्रभागमिलन्मौक्तिकदामवलयमनोज्ञं निजविस्तारगुणैरधिकभरितदिक्समूहं, स्वीकृतमहारङ्गघोटकस्यन्द-नगजं, एकमालयं सुविमर्शपूर्वकं परमप्रसन्नः सन्नद्राक्षीत्। अथ क्वचित् कामिनीशृङ्गारैर्लोचनोत्सवे, क्वचिद् गीतपीयूषसागरतरणो-त्सुककर्णे, कचिद्विपुलगृहोद्यानसुगन्धिप्रमोदिनासिके, क्वचित्सुभक्ष्यशतदर्शनचपलजिह्वाञ्चले, क्वचिच्च विलाससरोवायुरोमाञ्चितश-रीरे तस्मिन् गृहे निर्मलानन्दः स शुद्धबुद्धिः प्रविवेश। अथागत्रिकसदृशभ्रमकृतसूर्यमण्डलं, दुर्वाराजितरजतमयार्धभाजनतुल्य-निशापतिं, कल्याणाश्रतगमूहतुल्यव्याकीर्णनक्षत्रमण्डलं, प्रसन्नैर्देवासुरमनुष्यपतिभिरभिवन्द्यमानं, सर्वदर्शनाचार्यैर्निजबुद्धिशक्त्या स्तूयमानं, किङ्करान् प्रति प्रसादनिर्मलां दृष्टिं वितरन्तं, भाग्येनापि सुदुर्लभैश्चतुर्भिः पादैः समन्विते जनाभिलषणीये महासिंहासने निषण्णं, तस्य विश्वहितस्योत्सङ्गे विहितावष्टम्भसुस्थिरं, दीप्तशरीरं लोकनाथं प्रणाममित्रं स ददर्श। अथ तदवलोक्य साश्चर्योऽयं शुद्धबुद्धिरचिन्तयत्, मम योग्यतां धिक्, नित्यमित्राय सर्वस्वं दत्तमयं तु सत्कृतोऽपि न। यदि विश्वहितस्य वचनैरस्य

अथ शुद्धबुद्धिरुवाच–हे मित्र! त्वदर्थं सततमकार्यं कर्म कृतं यतस्तुभ्यं सकलमुपकृतं हा! मयोपकृतानि त्वया मुक्तानि! अथात्यन्तव्याकुलो नित्यवयस्यः क्रोधेन जगाद–रे निर्लज्ज! त्वं किमपवदसि ?, मदर्थं त्वं किं कृतवान्? अहं यथा यथा त्वया दत्तमश्नि तथा तथा तव प्रीतिर्जाता, ततस्त्वं स्वस्मै सर्वं कृतवान्न तु मदर्थं किमपि। रे असत्यवादिन्! राजविरुद्धकारिणा त्वया मे न कार्यं तस्मान्मम सामीप्यं त्यजेत्युक्त्वा स तस्य कण्ठं जग्राह। अत्रान्तरे शुद्धबुद्धिमुग्रशासननृपविरुद्धमाकर्ण्य स पर्ववयस्यः शीघ्रं गृहाभ्यन्तरमाजगाम। नित्यमित्रे त्यक्ताशः किंकर्त्तव्यविमूढोऽसौ शुद्धबुद्धिः पर्वमित्रं प्रति दीनं तोयपूर्णं नेत्रं न्यधात्। हे मित्र! एतत्ते किमभूत? अधुना मदीयं सर्वं द्रव्यादिकं दत्त्वाऽथवाऽत्र कष्टे मां नियुज्य कथञ्चिन्मुक्तो भव! एवं पर्वमित्रस्य वाणीमाकर्ण्य लोचनयुगलं झरदश्रुजलपूरं कलयंस्तदा शुद्धबुद्धिर्विचारयामास। धिगस्तु! विनाशितधनेन मया पुरुपाश्रयः पोषितः, परन्तु हहा! कृतोपकारस्यास्य कदाचन किमपि न कृतम्। इति विचारयन्नेवायं शुद्धबुद्धिर्नित्यमित्रेण दृढतरं कण्ठे धृत्वा स्वतः शीघ्रं दूरे क्षिप्तः। अथैनं मा नयध्वमस्य स्थाने मां नयध्वमिति वेगेन पर्वमित्रे विहिताक्रन्दने राजसेवकास्तमग्रहीषत। तैः सेवकैस्तस्मिन् प्रसभं कृष्टे पर्वमित्रे दुःखमभूत्। परन्तु नित्यमित्रं पुनः सुतां विवाह्येव चिरादशेत। द्वादशसूर्यकान्तिसमूहकर्कशेन वह्निना दीप्तमध्यभागस्य कूपस्य समीपे तैः सेवकैरसावनीयत। हहा! अतिनिर्दयाशयैरमीभिरहं दीप्ते कूपेऽस्मिन् क्षेप्यस्तत्कथं नु जीविष्यामि? इति सञ्जातवेपथुरयमचिन्तयत्। मां विश्वहितोऽवादीत्, यद्यदा त्वं कष्टे पतिष्यसि तदासौ सिद्धः सर्वज्ञो लोकनाथस्त्वां रक्षिष्यति। इदानीं करालोऽतिभयङ्करोऽयं मामकीनः समय उपस्थितस्तद्दयासागरोऽसौ श्रीमाँल्लोकनाथो मे शरणं भवतु। इति, शुद्धबुद्धावस्मिन् ध्यायति विस्तार्यमाणमनोहरकान्तयः पट्टवस्त्रपरीधानदृढबन्धकृशमध्यभागाः श्वेतवज्रम-

गिन ! इति वादिनीर्मनोहरहारप्रभृतिभूषणाः शृङ्गाररसस्य देवता इव जलशालारक्षिकाः श्रेष्ठबालिका ददर्श। यथा पथिकसमूहचर-
णाग्रपातेन रुग्णे धूलीव्याप्ते तृणे तथा तत्र कामिनीसमूहे शुद्धबुद्धेर्नेत्राणि सदृशान्यपतन्। यत्र स क्षुधातुरोदरोऽभवत् तत्र पुरतः
पक्वान्नपूरितभोजनाः सज्जाः पात्रराजीरपश्यत्। पथिकश्रेणिखेदतोयपिच्छले धूलिसमूह इव तत्र भोजनसमूहेऽपि स तुल्यदर्शनोऽभवत्।
सूर्यकान्तितापेन यत्रासौ व्याकुलो जातस्तत्र कुसुमगायद्भ्रमराञ्छायावृक्षानद्राक्षीत्। परन्तु ज्वलच्छिखे वनवह्नौ तत्र च विशाले
वृक्षसमूहेऽसौ शुद्धबुद्धिः सदृशीं दृष्टिं ददौ। तत्पालनपरेषु नरेषु कोमलवचनैराह्वाययत्सु स शुद्धबुद्धिः क्रीडयापि नयनं न प्रप-
ञ्चयामास। इत्थं सम्पूर्णप्रतिज्ञः स शुद्धबुद्धिः शीघ्रं गच्छन्ननुपमाकारं केवलैः स्फटिकरत्नैर्निर्मितं भाग्यरहितैर्भाग्यवद्भिश्चानालोकि-
तपूर्वं लोकनाथेन दर्शितं महत् सद्माग्रतोऽद्राक्षीत्। तद्गृहदर्शनेन समुत्पन्नपरमहर्षलीनहृदयः स शुद्धबुद्धिर्विष्णुशतक्रतुप्रभृतिस-
मृद्धीस्तृणममन्यत। तदेतन्महागृहं शीघ्रं प्रविश ! तव कुतोऽपि न भयमिति तं शुद्धबुद्धिं कथयित्वा लोकनाथो लोकोपकार-
सिद्धये ततोऽचलत्। हे पृथिवीनाथ ! इत्थं सकलवाञ्छितप्रदं सकलदुःखविनाशकमेनं लोकनाथं प्रभुं त्वमपि वयस्यं विधेहि !
त्वं खेदं त्यज ! खेदेन कुत्रचिद् वाञ्छितकार्याणि न सिद्ध्यन्ति, वाञ्छितार्थसिद्धये शीघ्रं लोकनाथमाराधय ! अथ भूजानिर्बभाषे
हे प्रभो ! स लोकनाथः कोऽस्ति ? तथायं कथमाराध्यते ? कथय ! स्त्रीसमन्वितस्तमाराधयिष्यामि। ततो भूपतिनेत्थं कथिते
विद्याधरमुनिरुवाच—हे राजन् ! अन्तरङ्गबुद्ध्येमां कथां विचारय ! संसार एव दुष्पारस्तेन दूरपाराख्यं नगरमस्ति, अस्मिन् नगरे
कर्मपरिपाको भयङ्करः उग्रशासननामा महीपोऽस्ति। निर्मलात्मा जीव एवैतस्य राज्ञो शुद्धबुद्धिर्मन्त्री कथितः, पुनर्यथोचारि-
तगुणं शरीरं तस्य नित्यमित्रम्। उत्पादितसज्जनभावो लोकस्तस्य पर्वमित्रं कथितम्, तथा गुरोरुपदेश एवास्य विश्वहिता-

प्रणतिं नाकरिष्यं तदा यथेच्छं पृथिव्यां चरतो मम का गतिरभविष्यत्? इति चिन्तापीडितमानसोऽयं शुद्धबुद्धिर्लोकनाथं ववन्दे स च प्रमोदपराधीनं तमालिङ्ग्य क्रोडे धृतवान्। हे मित्र! कथं त्वं विह्वलोऽसि? इति तेन महात्मना पृष्टः शुद्धबुद्धिः स्वस्मिन्नुग्रशासननृपाद्भयमवोचत्। अथ स लोकनाथोऽमुं प्राह–मम शरणागतस्य तव किं भयं? क उग्रशासनो राजा? तस्य शिरसि दुःखं वदने धूलिः। "मयायं किञ्चिन्न सत्कृतः" इति चिन्तां मा कुरु! यतः सकलेभ्यः सत्कारेभ्यः प्रणामो महान् सत्कारोऽस्ति। लक्ष्मीं ददानो राजा किङ्कराणां शौर्यादेरनृणः स्यात् परन्तु तेषां प्रणामस्य कथमपि नानृणः स्यात्। ततः कृताभिवादनस्य तव त्रिभुवनसाम्राज्यादप्यधिकं पदमनर्पयन्ननृणो न भवामि। हे सज्जन! यावदस्य ऋणस्य किञ्चित्कलान्तरं ('न्याज' इति भाषायाम्) ददे तावन्मम पार्श्वे तिष्ठैव, कुतोऽपि भयं मा कुरु! इति कथयित्वा तेन लोकनाथेन गृहस्याग्रभूमावधिरोपितः स शुद्धबुद्धिः सुखवाञ्छासदृशसमयपूर्णमनोरथस्तस्थौ। अथ कैरपि दिनैर्लोकनाथ एनमित्यवदत्, चिरादत्र तिष्ठन्नुग्रशासननृपसेवकैर्विदितोऽसि। दुष्टैककार्यकारिणोऽमी शत्रवः कदाचिन्मम सम्यग्दृष्टिं वञ्चयित्वा त्वां ग्रहीष्यन्त्येव। अतो हे मित्र! भवन्तं तत्र कुत्रापि मुञ्चामि यत्र ते राजपुरुषाः सन्मुखदर्शनेऽपि कथञ्चिद्धर्तुं समर्था न स्युः। परन्तु तत्र सुदूरं व्रजतां मार्गो दुःखतरः, क्षुत्तृष्णाप्रभृतिमहाकष्टं सहमानैः स पन्था विलङ्घ्यते। ततो हे सज्जन! गहने कष्टसहने स्वान्तं दृढं कुरु! मामनुगच्छ! शत्रूणां कण्ठासने पदं देहि! मार्गे पदे त्वां मनोहरैर्भोजनैर्लोभयित्वा शत्रवः स्नेहं दर्शयित्वाऽऽकारयिष्यन्ति। शरीरेण वचनेन मनसा च तान् सेवकान् यदि सम्भावयिष्यसि तदा कपटेन तै राजपुरुषैर्गृह्यमाणं त्वां निश्चितमहं न पास्यामि। इत्थममुं शिक्षयित्वा लोकनाथोऽयं मार्गे प्रचलितः, शुद्धबुद्धिरपि तद्बद्धविश्वासो हर्षेण तमनुजगाम। गहने मार्गे यत्र यत्रैष शुद्धबुद्धिस्तृषितोऽभूत् तत्र तत्रागच्छ शीतलं तोयं

जप्यते तदा प्रगल्भनिखिलकरणोऽयं धर्मः प्रीयते। इति कथयित्वायं मुनिराज एकान्ते शुचिशालिने महीपतये सरहस्यं पञ्चन-
मस्कारमन्त्रं ददौ। ततो मन्त्रं लब्ध्वा पृथिवीजानिः स्त्रिया साकं प्रीतो बभूव, मुनिराजश्च शरीरकान्तिशोभिताश आकाशं
जगाम। अथ मुनिराजस्य दर्शनेन प्रमोदरसास्वादविचेतनो महीपतिश्चिरं तत्रैव स्थित्वा गृहं जगाम। अथ पृथिवीपतिः स्त्रीसहितः
प्रतिदिवसं विधिपूर्वकं पञ्चनमस्कारमन्त्रध्यानं व्यधात्। तत्समयेऽस्य राज्ञो देशो यथासमयपतज्जलो रोगरहित उपद्रवहीनः
सस्याङ्गसमुत्पादकोऽभवत्। तत्समये यशोभिरिव गवां पयोधरतो मार्गे क्षरद्भिर्धारावद्भिर्दुग्धैस्तस्य महीपस्य पृथिव्यशोभि। तदा
तस्य राज्ञो वसुधायां सकलेषु पर्वतेषु मणिनिधयः प्रादुरभूवन्, सर्वेषु विपिनेषु गजाः समुत्पन्नाः। इत्थं महासमृद्धिवर्धिष्णुसकलदेश-
समृद्धो भूजानिः कदाचिदपि रात्र्यन्ते निद्रान्ते विचारयामास। अहो! मन्त्रस्य माहात्म्यं! यत्कृपावशान्मम राज्यं मनोहरं
शतक्रतोरपि स्पृहणीयमभूत्। परन्तु साम्प्रतमपि निशाकरः क्षीरसागरमिव लोचनहर्षसमूहस्थानं पुत्रो मां नानन्दयति। इति
विचारयन्तं पृथिवीन्द्रं शीघ्रं निद्रारहितलोचना राज्ञी हर्षोल्लाससमृद्ध्या निवेदयामास। समुत्पादिताञ्जलिभिर्लोकैः पीयमानममृत-
समूहं वर्षन्निर्मलैः किरणैर्बिम्बान्मलिनं चिह्नं कर्षन् योगिराजैरपि साश्चर्यं दृश्यमानो मुखमार्गेण जठरं प्रविश्य स्थितश्चन्द्रो मया
साम्प्रतं स्वप्ने व्यलोकि। इत्यद्भुतस्वप्नचन्द्रां कथां निशम्य संजातपुलको महीपतिर्मुखकमलकरन्दसदृशीं वाणीमुवाच। हे देवि!
निष्कलङ्ककलाशोभमानो धार्मिको मनोज्ञशरीरो भुवनोपकारकारी तनयो भविष्यति। एवमस्त्वित्येतस्यां वस्त्रे ग्रन्थिं बध्नत्यां
बहिः शंखानां प्रातःकालीनो मङ्गलध्वनिरुदभूत्। अथोद्यदानन्दोल्लासः पृथिवीपतिः प्रियासहितः क्षणं नमस्कारमन्त्रध्यानस्थमना
बभूव। इत्थमेतौ दम्पती तत्र मन्त्रे विशेषतो विस्तीर्णादरौ कष्टं शमयामासतुर्दिवसांश्च गमयामासतुः। ततो दिवसेषु परिपूर्णेषु जया-

भिधान उपदेशकोऽस्ति। हे राजन्! तस्य विश्वहितस्योपदेशेनानेन यः प्रणामवयस्योऽभिहितस्तं धर्ममेवाद्भुतं लोकनाथाभिधं प्रभुं जानीहि! सुप्तोत्थितेन तेन पुरतो ये निर्दयाः पुरुषा विलोकितास्ते रोगमृत्युदुर्गतिकारणरूपा दुष्कर्मपूरा ज्ञेयाः। तैर्दुष्कर्मभी रुद्धः शुद्धबुद्धिर्जीवः शरीरं क्रियारहितं दृष्ट्वा तत्समये तस्मिन्नुपकृतं भस्मनिक्षिप्तमिवामन्यत। कदाचित्किञ्चिदपि शुद्धबुद्धिरेष यत्स्वजने पर्वमित्रे ददौ तदा कष्टपीडिते धावति तत्साधुवन्मेने। अत्रान्तरे शरीरेण कण्ठं धृत्वाकृष्टः स्वजने शोकेन क्रन्दति जीव एष नीतो यत्र दुःखवह्निपूरितोऽसौ नरकरूपः कूपः। लोकनाथो मम शरणमस्त्विति तेन कथिते ये पुरुषाः समागतास्ते धर्मसाक्षिकाः कर्मगणा ज्ञेयाः। ततो जितदुष्कर्मभिरसौ यत्र निन्ये स धर्मस्यातिशुद्धो विवेकनामा क्रीडालयो ज्ञेयः। तत्रासौ शुद्धबुद्धिर्दानशीलतपोभाव-रूपवरचरणोपशमनामविष्टरं गुरोरुपदेशावलम्बनं धर्ममद्राक्षीत्। ततः श्रीधर्मेण निजप्रासादाग्रभूमौ देवेषु सम्यग्दृष्टित्वपदेऽयं शुद्धबुद्धिः कमपि समयं सौख्येनानन्दितः। ततः शिक्षया स्थिरचित्तं वर्त्मनि विषयैरप्रलोभितं तं शुद्धबुद्धिं धर्मोऽकुतोभये मोक्षमन्दिरे मुक्तवान्। प्रणाममात्रेण प्रसन्नेन येन धर्मेणेति कार्यं कृतं स विधिपूर्वकं समाराधितो धर्मो हे राजन्! किं किं न ददाति? अथ धर्मक्रियोत्सुकचेताः पृथिवीपतिरुवाच–प्रियासहितं मां धर्मस्य समाराधने शीघ्रमुपदेशय! ततः स मुनिराजः शान्तिपीयूषसागरतरङ्गजलकणसमूहैरक्षरै राजानं धर्मविधौ शिक्षयामास। हे राजन्! तस्य धर्मस्य पञ्चेन्द्रियाणीवार्हत्सिद्धाचार्यो-पाध्यायसाधवो यथा प्रसन्नाः स्युस्तथा विधेहि! हे महीपते! अहो! सुखसाध्यमसंभाव्यविघ्नलेशमपि तत्प्रीतेर्विस्तीर्णमुपायं निशा-मय! जलवह्निविषावष्टम्भः प्रियवाञ्छितवस्तुप्राप्तकारयिता पञ्चानां परमेष्ठिनां नमस्काररूपो महामन्त्रो जयति। अस्य मनुष्यदेवदानवपङ्क्तिकर्षणे विस्मयः कः? यदसौ नमस्कारो मोक्षमपि सम्मुखीकरोति। भूपते! पवित्रीभूय स एष यदि त्रिकालं

वल्या राज्ञ्याः शुभे दिने शुभलक्षणः पूर्णचन्द्राननस्तनयो जातः। यो यो मनुष्यो महीपतये तनयजन्मोत्सवं जगाद तस्य तस्योल्लासितप्रमोदः स नृपोऽधिकमधिकमदात्। तदा तस्मिन् पुत्रे समुत्पन्ने तत्समये भूभुजो मुक्तबन्धनानन्दमनसां शत्रूणामप्युत्सवोऽभवत्। अत्र पुत्रे गर्भस्थे मात्रा जठरे निशापतिर्व्यलोकीति विचार्य स्वप्नानुसारेण राजा तस्य "चन्द्रोदरः" इति नाम चकार। राजलक्ष्म्या सह स बालको दिने दिने ववृधे, तयोः पञ्चपरमेष्ठिनमस्कारस्योत्कृष्टश्रद्धा चैधिष्ट। पञ्चवार्षिकः स चन्द्रोदरो भूभुजा सानन्दं सकलकलोपदेशाय कलागुरुभ्यः समर्पितः। यथेष्टमभ्यासं कुर्वतस्तस्य कुमारस्य बुद्धिविशालतां द्रष्टुमिव कलाः कौतूहलेन तत्समीपं समागताः। लालयन्तीभिर्वारंवारं सञ्जातानन्दाभिः कलाभिर्यथेष्टमाश्चर्यादयं बालः क्रोडात्क्रोडमनीयत (अर्थात् सकलकलापारंगतोऽभूत्)। चतुराभिः कलाभिरयं बालः कथञ्चित् तथा लालितो यथा ताभिर्विना क्षणमप्ययं क्वचिदपि न तस्थौ। एवं क्रमशः कलासमूहेषु विपुलाभ्यासतेजस्वी बालोऽयं ज्ञानाधिक्येन गुरूणामपि गुरुरभवत्। व्याकरणवर्त्मनि खिन्नं सूर्यसमकठिनन्यायशास्त्रव्याकुलं चन्द्रोदरस्य मनः पथिकवद् वारंवारं साहित्यपीयूषवापीषु प्रविवेश। दानमनोज्ञं सुविद्यावन्तं च चन्द्रोदरं देशान्तरस्था विद्वांसो लक्ष्मीसरस्वत्योः सङ्गमरूपजङ्गमतीर्थमवेत्याजग्मुः। अभ्यासाच्छरीरस्य समन्ततोऽपि शस्त्रं भ्रमयन्नयं चन्द्रोदरः प्रेक्षकैर्लोहपञ्जरमध्यगत इवादर्शि। अभ्यासकौतूहलेनाप्यस्याग्रे कोऽपि न तस्थौ, स दक्षः कुमारः स्तम्भमेव लक्ष्यं विधाय धनुर्विद्यामसाधयत्। संयतकचपातिनः कुसुमादभिन्नचरणन्यासः, त्वरावेशादविदितपूर्वपश्चाच्चरणगतिः, वामदक्षिणमण्डलैः खुरलिकास्थाने('कसरतशाला' इति भाषायाम्) क्रीडन् स चन्द्रोदरो न शरीरश्रमं न स्वेदं न च श्वासमदर्शयत्। स चन्द्रोदरो वीरो बाणैः सगुडगजभेदनाभ्यासे तुरगस्य नीरसं नखं महिषत्वचां च शतं विवेध। अयं चन्द्रोदरोऽविदितादानसन्धानाकर्षणमो-

सहितेपु पुरुपेपु त्वया प्रेम कर्त्तव्यम्। इति, सचिवाचार्यवचनेन प्रीतोऽसौ **राजकुमारः** सुहृदयान्पीयूपेनोन्मुदो देवानपि व्यर्थममन्यत।

अथ कदाचिदुत्तमनक्षत्रमाकाशं निशापतिरिव **राजा** तेजस्विकिङ्करं सभामध्यभागं शोभयामास। कमलस्योत्सङ्गे हंस इव भूपवदनदिवसपतिहास्यस्य सचिवराजस्योत्सङ्गे **राजकुमारोऽभूत्**। कलावद्भिः सह कलासम्बन्धि वार्त्तालापं कुर्वन्तं तनयं पश्यन् **पृथिवीनाथः** स्वस्मै व्रतं पुत्राय राज्यसमृद्धिं चेयेप। ततो **महीपतिः** स्वदीक्षायां तनयविवाहं विघ्नरूपं मेने। अत्रान्तरे नम्रेण वेत्रवता निवेदितः। हे प्रभो! नम्रीभूतसकलशत्रोः काम्पील्यपुरपतेः **श्रीरत्नसेनस्य** सन्देशहरो द्वारि वारितोऽस्ति। अतो हे प्रभो! पृथिवीकल्पवृक्ष! तावकवदनेन्दौ नयनमानन्दयितुमभिलषतोऽस्य **मनोरथं** पूरय! इति, तद्वचनं निशम्य भ्रूलतासंकेतेन भूभुजा नियुक्तोऽयं वेत्रधारी तं दूतं शीघ्रं राजसभादेशमवेशयत्। अथ प्रकटानन्दो मस्तकन्यस्ताञ्जलिः स दूतस्तदा राजानं प्रणम्य दर्शिते आसनेऽग्रत उपविष्टः। मामकीनः परमसुहृच्छ्रीरत्नसेनः कुशली किम्? राजशिरोमणिः स त्वां मयि किमर्थं प्रैषीत्? इति पृथिवीधवेन पृष्टः स दूतः स्वध्वनितिरस्कृतमेघो बभाषे। हे प्रभो! यस्तव करे समर्पितोदयस्तस्य कुशलप्रश्नः कः? सूर्यस्य क्रीडाकमलं किं क्वापि संकुचति? हे राजन्! चन्द्रस्यान्तःपुरे लीलाचकोर इव भवदाधीनः स निजस्य किञ्चिदपि स्तोकं न मन्यते। हे मर्त्यभुवनश्रेष्ठ! हे पृथिवीकामिनीश्रवणकुण्डल! तस्य मामकीनस्य प्रभोर्यत्कार्यं तच्छृणु। **श्रीरत्नसेनस्य रत्नमञ्जरी** नाम्नी स्त्री विद्यते या तस्य पुण्यवृक्षस्य मञ्जरीव शोभते। पुनश्च तस्य भूधवस्य रत्नमञ्जरीजठरकमलैकहंसी नयनानन्ददायिनी **कलावती** नाम्नी पुत्र्यस्ति। तदवलोकनगृहीतोत्कण्ठमिवासंसारादप्यनवलोकितपूर्वं शीलं रूपं च समागतम्। तस्यां कन्यायां स्वतोऽप्युपरि-

श्रणैर्बाणैर्दूरचञ्चलसूक्ष्मदृढानि वेध्यानि विद्धवान्। ततः सकलेषु चित्रेषु दुष्करकार्येषु दुर्धरः स एष चन्द्रोदरो महीपतिभिर्धनुर्धरा-
ग्रेसरः कथितः। हृदयबद्धपराक्रमगजराजमदराजिद्वयसदृशे तस्य हस्तयोर्मेचके धनुर्गुणचिह्नपङ्क्ती शुशुभाते। स राजकुमारश्चन्द्रो-
दरस्तरङ्गेषु सूर्यस्य प्रतिबिम्बमिव चपलेषु घोटकेषु परिस्फुरञ्छुशुभे। बलाहकैर्वायुरिवेतस्ततस्तरलितैर्द्रुतं वालितैश्चालितैर्गजैः स
कुमारः स्वैरमरमत। महासन्दंशकापीड्यमानग्रीवं प्रमत्तमपि गजं सर्पमिवायं कुमारो निजेच्छया चालयत्। इति, समस्त-
कला प्राप्तिविशेषमनोहराकारो युवा स चन्द्रोदरः पूर्णेन्दुसादृश्यमभजत। ततो महीपेन चन्द्रोदरोऽयं श्रेष्ठधर्मविधिसारस्य
नीतिशास्त्ररहस्यवेदिनो **मतिसारस्य** शिक्षार्थं समर्पितः। दशनच्छविभिः कूर्चकुन्तलानधिकं श्वेतीकुर्वन् मन्त्री कुमार-
स्याग्रे वाणीं नर्त्तयामास (अर्थादुवाच)। हे वत्स! त्वां यच्छिक्षयामि तत्सूर्ये प्रज्ज्वलयामि, तथापि भूभुज आदेशो न लङ्घ-
नीय इत्यहं किञ्चिद्ददामि। तीर्थङ्करोपदिष्टो धर्मः परलोकलक्ष्मीनामिव नीतिरिह लोकलक्ष्मीनां पुष्टिकर्त्री विद्यते। धर्मेणैव भूभुजा
सेवकानां मनोरथः पूरणीयः, प्रत्युत पापेनेव दुःखोदयो न तेषां कर्त्तव्यः। कल्पवृक्षः सेवकानां मनोरथं शीघ्रं ददाति धर्मस्तु
निरादवाञ्छितं दत्ते परन्तु शीघ्रमयाचितमेको भूपो ददाति। या जीवतामधिककष्टाय मृतानां नरकाय च तासु लक्ष्मीषु कामि-
नीषु च नासक्तिर्न च विश्वासः कर्त्तव्यः। धर्ममूलाय यशसे सततमुद्यमः पालनीयः। अन्यं यशो भूमौ जाततृणपङ्क्तिरिव शीघ्रं
विनश्यति। पुरुषाणां रूपं न रूपं परन्तु दानं रूपं भुवनानन्दाय, यतो वर्षन् मेघः कृष्णोऽपि वरं न तु श्वेतोऽवर्षन् मेघो
वरम्। नगरेऽपि वसन् कष्टभाक् समर्थैः सदा पालनीयो यतो दुःखश्रेण्याः पापमिव पापानां मूलं कष्टम्। धर्मस्य कष्टाभावो मूलं,
सकलसुखलक्ष्मीनां मूलं धर्मः, कृशानौ शैत्यमिव व्यसने मूर्खाः सुखं वाञ्छन्ति। हे तात! ततः सकलव्यसनरहितेषु सुकृतोत्सवैः

धरणमार्गं दूरचञ्चलसूक्ष्मदृढानि वेध्यानि विद्धवान्। ततः सकलेषु चित्रेषु दुष्करकार्येषु दुर्धरः स एष चन्द्रोदरो महीपतिभिर्धनुर्धरा-
ग्रसरः कथितः। हृदयबद्धपराक्रमगजराजमदराजिद्वयसदृशे तस्य हस्तयोर्मेचके धनुर्गुणचिह्नपङ्क्ती शुशुभाते। स राजकुमारश्चन्द्रो-
दरस्तरङ्गेषु सूर्यस्य प्रतिबिम्बमिव चपलेषु घोटकेषु परिस्फुरञ्छुशुभे। वलाहकैर्वायुरिवेतस्ततस्तरलितैर्द्रुतं वालितैश्चालितैर्गजैः स
कुमारः स्वैरमरमत। महासन्दंशकापीड्यमानग्रीवं प्रमत्तमपि गजं सर्पमिवायं कुमारो निजेच्छया चालयत्। इति, समस्त-
कला प्राप्तिविशेषमनोहराकारो युवा स चन्द्रोदरः पूर्णेन्दुसादृश्यमभजत। ततो महीपेन चन्द्रोदरोऽयं श्रेष्ठधर्मविधिसारस्य
नीतिशास्त्ररहस्यवेदिनो मतिसारस्य शिक्षार्थं समर्पितः। दशनच्छविभिः कूर्चकुन्तलानधिकं श्वेतीकुर्वन् मन्त्री कुमार-
स्याग्रे वाणीं नर्त्तयामास (अर्थादुवाच)। हे वत्स! त्वां यच्छिक्षयामि तत्सूर्यं प्रज्ज्वलयामि, तथापि भूभुज आदेशो न लङ्घ-
नीय इत्यहं किञ्चिद्वदामि। तीर्थङ्करोपदिष्टो धर्मः परलोकलक्ष्मीनामिव नीतिरिह लोकलक्ष्मीनां पुष्टिकर्त्री विद्यते। धर्मेणेव भूभुजा
सेवकानां मनोरथः पूरणीयः, प्रत्युत पापेनेव दुःखोदयो न तेषां कर्त्तव्यः। कल्पवृक्षः सेवकानां मनोरथं शीघ्रं ददाति धर्मस्तु
चिरादवाञ्छितं दत्ते परन्तु शीघ्रमयाचितमेको भूपो ददाति। या जीवतामधिककष्टाय मृतानां नरकाय च तासु लक्ष्मीषु कामि-
नीषु च नासक्तिर्न च विश्वासः कर्त्तव्यः। धर्ममूलाय यशसे सततमुद्यमः पालनीयः। अन्यं यशो भूमौ जाततृणपङ्क्तिरिव शीघ्रं
विनश्यति। पुरुषाणां रूपं न रूपं परन्तु दानं रूपं भुवनानन्दाय, यतो वर्षन् मेघः कृष्णोऽपि वरं न तु श्वेतोऽवर्षन् मेघो
वरम्। नगरेऽपि वसन् कष्टभाक् समर्थः सदा पालनीयो यतो दुःखश्रेण्याः पापमिव पापानां मूलं कष्टम्। धर्मस्य कष्टाभावो मूलं,
सकलसुखलक्ष्मीनां मूलं धर्मः, कृशानौ शैत्यमिव व्यसने मूर्खाः सुखं वाञ्छन्ति। हे तात! ततः सकलव्यसनरहितेषु सुकृतोत्सवैः

वर्तिनीं शुद्धिं वीक्ष्य कलाश्रेणिर्लज्जयेव हृदये लीना गुप्तमतिष्ठत्। जिनेश्वरस्यागमेन जिनेश्वरस्यादेशेन जिनेश्वरस्य भक्त्या च न्याय-पथश्रवणमस्तकहृदयैर्गौणसकलालङ्कारा शोभते। अयं राजा यथा तया कन्यया तथा तनयैर्न शुशुभे, हिमालयो यथा गङ्गया तथा तुङ्गैर्न गजते। एषा तनया सततं शोभेव सभादानसुरार्चनादिकार्येषु महीपेन साकमेव सञ्चरति। अथैकदा तां कन्यां स्वाङ्के समुपवेश्य भूपोऽनेकैः राजभिरलङ्कृतां सभामशोभयत्। रूपकलाशीलैरस्याः सदृशो वरः पृथिव्यां कोऽस्ति? इति राजाऽनेकपृथिवीचारिणो दूतान् पप्रच्छ। यावदमी दूताः किञ्चिद् गदन्ति तावदानन्दशालिनी सा राजकन्येति जगाद–"विवाहं नेच्छाम्यहम्" इति। अथ वैलक्ष्यमानसः पृथिवीपतिरेनां कन्यामवादीत्। हे वत्से! तावकी बुद्धिर्विवाहसम्बन्धात् कथं पराङ्मुखी? येन केन विना तव मानस आनन्दो न स्फुरति, स शरीरच्छायवच्छ्वशुरगृहे त्वया सहागमिष्यति। तडागस्य कमलिनीव चेन्मम वियोगे दुःखी भविष्यसि तदा हंसमिव तावकं वरमत्रैवानेष्यामि। अथवाऽन्यत् किञ्चित् ते वाञ्छनीयं स्यात् तद् दुःसाध्यमपि पूरयामि। हे वत्से! अतो ममेच्छया त्वं विवाहासद्ग्रहत्वं दूरीकुरु! इत्थं धरेशस्य महाग्रहेण वचनेनापि सेयं राजकुमारी विवाहवार्त्तामपि न स्वीचकार। ततः पृथिवीपतिभार्यया रहसीयं राजकुमारी विवाहार्थं वारंवारमभ्यर्थ्यमाना चिराद्वाणीमुवाच। हे मातः। यः पुरुषो राधावेधं कर्त्ता यः रणान्तरं न गन्ता तेन केनापि विदुषा मामुद्वाहयय! इति तस्या वचनं राजीवदनाच्छ्रुत्वा धराधवो राधावेधकरणाय वीरगणानाकारयितुं दूतान् प्रेषयामास। मित्रतायाः परां कोटिं गन्तुमनसा नृपेणाहं त्वत्र प्रेषितोऽस्मि। तथेदं वचनं निवेदितम्। हे प्रभो! मद्राजकन्यया वरवरणाय राधावेधे चन्द्रोदरस्य वीरत्वसिद्ध्योल्लासितमना अस्म्यहम्। चन्द्रोदरं विना कोऽपि राधावेधाय न समर्थ इति विचार्यास्यैव यशो वितनितुं परेऽपि वीरा आकारिताः। अतो हे राजन्! इह राधावेधोद्यमे चन्द्रोदरमाज्ञापय! इह

सहितेषु पुरुषेषु त्वया प्रेम कर्त्तव्यम्। इति, सचिवाचार्यवचनेन प्रीतोऽसौ **राजकुमारः** सुहृदयान्पीयूषेनोन्मुदो देवानपि व्यर्थममन्यत।

अथ कदाचिदुत्तमनक्षत्रमाकाशं निशापतिरिव **राजा** तेजस्विकिङ्करं सभामध्यभागं शोभयामास। कमलस्योत्सङ्गे हंस इव भूपवदनदिवसपतिहास्यस्य सचिवराजस्योत्सङ्गे **राजकुमारोऽभूत्**। कलावद्भिः सह कलासम्बन्धि वार्त्तालापं कुर्वन्तं तनयं पश्यन् **पृथिवीनाथः** स्वस्मै व्रतं पुत्राय राज्यसमृद्धिं चेयेष। ततो **महीपतिः** स्वदीक्षायां तनयविवाहं विघ्नरूपं मेने। अत्रान्तरे नम्रेण वेत्रवता निवेदितः। हे प्रभो! नम्रीभूतसकलशत्रोः काम्पील्यपुरपतेः **श्रीरत्नसेनस्य** सन्देशहरो द्वारि वारितोऽस्ति। अतो हे प्रभो! पृथिवीकल्पवृक्ष! तावकवदनेन्दौ नयनमानन्दयितुमभिलषतोऽस्य **मनोरथं** पूरय! इति, तद्वचनं निशम्य भ्रूलतासंकेतेन भूभुजा नियुक्तोऽयं वेत्रधारी तं दूतं शीघ्रं राजसभादेशमवेशयत्। अथ प्रकटानन्दो मस्तकन्यस्ताञ्जलिः स दूतस्तदा राजानं प्रणम्य दर्शिते आसनेऽग्रत उपविष्टः। मामकीनः परमसुहृच्छ्रीरत्नसेनः कुशली किम्? राजशिरोमणिः स त्वां मयि किमर्थं प्रैषीत्? इति पृथिवीधवेन पृष्टः स दूतः स्वध्वनितिरस्कृतमेघो बभाषे। हे प्रभो! यस्तव करे समर्पितोदयस्तस्य कुशलप्रश्नः कः? सूर्यस्य क्रीडाकमलं किं क्वापि संकुचति? हे राजन्! चन्द्रस्यान्तःपुरे लीलाचकोर इव भवदाधीनः स निजस्य किञ्चिदपि स्तोकं न मन्यते। हे मर्त्यभुवनश्रेष्ठ! हे पृथिवीकामिनीश्रवणकुण्डल! तस्य मामकीनस्य प्रभोर्यत्कार्यं तच्छृणु। **श्रीरत्नसेनस्य रत्नमञ्जरी** नाम्नी स्त्री विद्यते या तस्य पुण्यवृक्षस्य मञ्जरीव शोभते। पुनश्च तस्य भूधवस्य रत्नमञ्जरीजठरकमलैकहंसी नयनानन्ददायिनी **कलावती** नाम्नी पुत्र्यस्ति। तदवलोकनगृहीतोत्कण्ठमिवासंसारादप्यनवलोकितपूर्वं शीलं रूपं च समागतम्। तस्यां कन्यायां स्वतोऽप्युपरि-

इत्थं राजकुमार्यां वचनं वदन्त्यां पृथिव्याः क्रीडावातायनतलाद् राजमार्गादयं श्लोक उदभूत्।

"ईदृक्षराधावेधेन कलावत्या मनःप्रियः। एकश्चन्द्रोदरो विश्वमौलिवर्त्ती जयत्ययम्" ॥१॥

इति श्लोकश्रवणमनुमोदना हर्षान्विता राजकान्ता तनयया सह जालान्तरे लोचनं दत्तवती। अत्रान्तरेऽग्रे पठद्वन्दिसमूहं तुरगारूढं मार्गे संचरन्तं वीरं चन्द्रोदरं राज्ञी ददर्श। चन्द्रोदरस्य स्वतनयायाश्च वदनं वारंवारं पश्यन्ती रत्नमञ्जरी योग्यमिलनान्मस्तककम्पं चकार। विद्वच्छिरोमणिरयं क्व गच्छतीति तया पृष्टा कापि युवतिः शीघ्रं गत्वा सर्वं विदित्वा समीपमागत्य निवेदयामास। हे देवि! अद्यायं मन्त्रीश्वरमतिसारवाण्या नगरमध्यतीर्थङ्करमन्दिरयात्राकरणेच्छया चचाल। ततस्तेन समाचारेण चन्द्रोदरस्य शोभावलोकनेन च किञ्चित्प्रसन्ना कलावती विवाहवाञ्छामकार्षीत्। अथ भूप आसमुद्रमिलितपरिवारसमूहं चन्द्रोदरकलावत्योर्विवाहमहोत्सवमकारयत्। पण्डितानापि "हे पठन्मूर्ख तिष्ठ!" इति साक्षेपमकस्मादानन्दाद्गोत्रवृद्धाष्वाचारं कारयन्तीषु, ताम्बूलभरितस्थूलकपोलासु शोभमानकुङ्कुमकेशरकान्तिषु युवतिषु माङ्गलिकगानतत्परासु, समन्ततो वैतालिकसमूह उत्ताले वंशगुणगानं कुर्वति, सान्द्रगम्भीरनादपूर्वकं वादित्रेषु वाद्यमानेषु, लज्जयाधोमुखयोर्निजैर्निजैरुन्मुखीक्रियमाणयोर्वधूवरयोर्वारंवारं तारेक्षणे जायमाने, आभरिताकाशो भग्नजगत्कर्णेन्द्रियो दिग्भित्तिभ्रंशोत्पन्न इव कोऽपि कोलाहलः प्रादुरभवत्। ततः किमिदमित्यूर्ध्वभ्रूलते निकसितलोचन उत्कन्धरे पृथिवीपतौ चन्द्रोदरे च कोऽपि राजपुरुषः समागत्य त्वराचलनकण्ठशोषेण रूक्षया वाण्या वैधुर्यग्लपितनादमवादीत्। हे प्रभो! आकाशस्य सङ्कोच इव विन्ध्याचलस्य विस्तार इव कृतान्तस्य क्रूरत्वदीक्षायाः प्रथमगुरुरिव शुण्डावलि-

पश्यन्नयं कुमार इदं वारंवारमिहागच्छतीति स्थिरां दृष्टिं विधाय दृष्टिलक्ष्यसंमुखीं वाणस्य शिखां धृत्वाऽऽकृष्टचापोऽसौ चिरं चित्रन्यस्त इव तस्थौ। तत्समये भूभुजां नयनयुगलं कुमारस्य शराग्रे लक्ष्ये च हृदयस्पर्धया वारंवारमागमनगमने कुरुते। तत्समये च साश्चर्यैं राजभिः स बाणं त्यजन् नालोकि, गगने सञ्चरन् वाणश्च न प्रैक्षि, किन्तु वेध्यमेव विद्धमदर्शि। अथ राजसु महविस्मयक्रीडास्थानेषु श्रीरामतनयश्चन्द्रोदरः परिश्रमदूरीकरणाय कैः प्रशंसापीयूपरसं नापायि ? ततो योग्यादरसन्मानसहानीतेतरभूपतिना राजकुमारो नगरप्रवेशं कारितः। ततो हर्षालीने राजकीयजने विवाहसम्बन्धिमाङ्गलिकोत्कण्ठिते सा राजकुमारी म्लानं वदनं धृतवती। अथ दुःखेन पाण्डुवर्णा रत्नमञ्जरी तादृशसमुत्पन्नहर्षमन्थमन्थरया वाण्या राजकुमारीमुवाच। हे वत्से! अद्यापि सकलपरिवाराननकमलविभावरीं श्यामतां मुखे कथं धारयसि ? रूपे सादृश्यरहितः काम्यकलाश्रेणिविलासस्थानं शुद्धवंशोत्पन्नो राजकुमारस्तव श्रद्धामपूपुरयत्। धीरोदात्तलक्षणवान्छरव्यनैपुण्यदाक्षिण्यालङ्कारोऽयं कुमारस्तव कदाचित् सपत्नीकष्टं न दर्शयिष्यति। अतो हे वत्से! वैमुख्यं त्यज! अत्र समये स्वजनहर्षक्षीरसागरस्य निशाकरस्तव वदनहास्यं शोभताम्! इति जनन्या वचनं निशम्य चन्द्रवदना सा कुमारी भ्रूचेष्टितैर्हृदयविशालशोकं सूचयन्ती जगाद। हे मातः! सपत्नीभ्यो मम किञ्चिद्भयं नास्ति, यदि ताः सपत्न्यो मत्तः स्पर्धासु कर्मबन्धं कुर्युस्तद्भयमस्ति। अथ यदि सपत्न्यो भविष्यन्ति तदाऽत्यन्तप्रेमरीतिभिस्ता भर्तृसुन्दरीः सोदरी इव विचारयिष्यामि। हे मातः! तदेतन्मालिन्यकारणं मम मनसि न, यतः सूर्यः किं कमलिन्याः संकोचकारणतां धारयति ? किन्त्वमुना राधावेधेन मम प्रतिज्ञा न पूरिता जाता, येन मम हृदयमहोत्सवः स राधावेधोऽन्योऽस्ति। सत्कर्मदुष्कर्मचक्रयोः सृष्टिविनाशक्रमेण शीघ्रत रैर्भ्रमद्भिर्वेदनामयैररैरन्तरितं संशययन्त्रेण भ्रान्तं सूक्ष्मं परं तत्त्वं विमर्शवाणेन यश्छिन्द्यात् स राधावेधी मम प्रियः स्यात्।

द्वादशारयोश्चक्रयोरुपरि भ्रमन्तीं दारुकच्छपीं न्यस्य महीतले मनोहरैर्घृतैः पूर्णं सुवर्णपात्रमधात्। सकलवीराणां पश्यतां राजा हस्तमूर्ध्वीकृत्य सजलमेघसमधीरगम्भीरनादोऽवादीत्। घृतमध्यगतप्रतिविम्बमये लक्ष्ये दत्तदृष्टिर्वेगप्रभावभ्रमचक्रयुगलारान्तराकाशमार्गेण वाणं क्षिप्त्वा यः भ्रभ्रमत्कच्छपीवामनयनकनीनिकां भेत्स्यति स एव मम सुतां परिणेष्यति। इति वचनं श्रुत्वा युद्धनिर्घिकाभिमानः कोऽपि भूभर्त्ता धनुरुद्धश्रयन् राधायन्त्रतलमाजगाम। तेन राज्ञा त्यक्तः शरः शीघ्रं भ्राम्यदरोद्घट्टाच्छरीरभङ्गभयादिव वामतश्चक्रं त्यक्त्वा दिवं जगाम। स एव वेध्यमार्गं वारंवारं रुणद्धीति क्रोधादिव कस्यापि वसुधेशस्य शरश्चक्रस्यारं विद्धवान्। असौ वाणो वेगेन सहास्माभिः स्पर्धत इति क्रोधेन चक्रस्य भ्रमद्भिररैः कस्यापि भूभर्त्तुर्बाणो विखण्डितः। ऊर्ध्वमुखस्य कस्यापि कच्छपीनयनभेदनाय त्यक्तश्चक्रारैः स्खलितः पतितो वाणस्तस्यैव नयनं विद्धवान्। कश्चिल्लोकैर्विगुप्यतो हास्यमानान् भूपान् दृष्ट्वाऽहं स्वयंवरोत्सवं विलोकितुमागत इति मञ्चाग्रादुत्थितोऽपि नाभूत्। शिक्षितां कलां कामिनीकृते दर्शयन्नहं किं न लज्जे ? इत्युत्तरकर्त्ता कोऽपि हसन् राधां तिरस्करोतिस्म। राधावेधनिषेधकर्तृणामुत्तरेष्वपि रुद्धेषु कश्चिदवदन्नेव मञ्चादुत्थाय जगाम। इत्थं नृपसमूहे निराशे जाते काम्पील्यनगरपतिश्चन्द्रोदरस्य पुरत आगत्य गर्जनसदृशं वचनं जगाद। हे धनुर्धराग्रेसर ! उत्तिष्ठ, उत्तिष्ठ ! यतो वीरा वीरत्वगर्हित्यदुष्कीर्त्तिमिव वदनेषु श्यामिकां धृतवन्तः। यद्यपि वीराः सन्ति परन्तु राधावेधसाधने त्वमेव समर्थोऽसि, यद्यपि तेजस्विनः सन्ति तथापि रात्रिविनाशे सूर्य एव समर्थो भवति। केनापि मनुष्येण राधा न वेध्येति भूभुजां त्रपापहं परस्परं निश्चयं गाढ्यलक्ष्म्या सह दूरीकुरु ! इत्यस्य राज्ञो वचनैरुत्थाय सानन्दं गमनं विदधन् हसद्भिर्भूपैरवलोकितो रामपुत्रश्चन्द्रोदरो राधां ययौ। तत्र स्वैरं गृहीतवन्दितसज्जिते षोडशे धनुषि स विद्वान् कुमारः सूच्यग्रशिखं वाणं संदधे। घृते प्रतिविम्बितं भ्रमल्लक्ष्यं

जगत्यावयोः स्नेहग्रन्थिरधिकं दृढत्वं धारयतु ! इति श्रीरत्नसेनस्य सन्देशेन प्राप्तसन्मान आनन्दसञ्जातपुलकशरीरः पृथिवीनाथो राधावेधोत्कण्ठितं विवाहवचनैर्लज्जमानं चन्द्रोदरमस्मिन् महोत्सवे सादरमाज्ञापयामास। ततः कृपादानाद् हर्षस्यूते दूते गते चतुरङ्गसेनासमूहः कुमारः सानन्दं चचाल। जगति महत्त्वनिर्जितेन सागरेणोच्चैः करीकृतमिव नादं प्रकटयन्त्या सेनया समन्ततोऽन्वितः, रत्नैर्विभूषितान् निर्झरन्मदनिर्झरान् विजयलक्ष्मीजङ्गमलीलापर्वतान् गन्धगजानवलोकयन्, वेगेन त्वरासमूहमनोहराणि लोकचेतांस्यपि वारंवारमाकर्षन्तीषु तुरङ्गश्रेणिषु दत्तदृष्टिः, धुर्यतुरगेभ्यः कलां शिक्षितुं पताकाच्छलेन सहिताभिर्गङ्गोर्मिभिर्मनोहरान् रथान् पश्यन्, निजधैर्यतोऽस्तन् भुवनत्रयं च तृणं मन्यमानैरभिन्नात्मपरैर्मुनिश्रेष्ठैरिव वीरैरभिवृतः, आकर्णिततादृशस्वयंवराः पातालस्वर्गयोः कन्या विलोकितुं तुरगखुरैः पृथिवीं खनन्, धूलिसमूहैः पद्यां विदधन्, प्राप्तानन्दाभिर्विकसितदृग्भिरसंस्कारमनोहराभिर्ग्रामरमणीभिरकस्माद्विलोकितः, मार्गे निजैश्चित्तैरिवोज्ज्वलैर्नवनीतदधिदुग्धैर्विस्तारितोपायनान् नगरवृद्धान् सन्मानयन्, गजसमूहानां मदजलैर्विपिनवृक्षान् सिञ्चन्, पृथिवीरजःसमूहैर्दुस्तरा नदीः सुतरा विदधन्, रथचक्रैः पर्वतमध्यमार्गजन्यवैषम्यं भिन्दन्, वीराणां सिंहध्वनिभिर्विपिनकेशरिणः क्षोभयन्, पण्डितानां कथारसैरविदितमार्गसञ्चारो राजकुमारश्चन्द्रोदरः क्रमशः काम्पिल्यनगरसमीपं ययौ। ततो रत्नसेनेन राज्ञा सन्मानपूर्वकं निशापतिकिरणविनाशितोद्दामप्रकाशे गृहे राजकुमारः स्थापितः। स्वमेकं धनुर्धरं मन्यमानै राधावेधाय धावितैरन्यैरपि वीरैरियं नगरी शीघ्रं पूर्णाऽभूत्। ततश्चञ्चलपताकाच्छायासर्पपालितैर्मदनस्पष्टनिधानघटैरिव घटैः सुशोभितं मणिपङ्क्तिशोभाहसन्मञ्चसमूहं विलासमण्डपं पृथिवीपतिरकारयत्। ततो महीपतिना वीरराजकुमारा आकारयित्वा तत्र मण्डपे न्यवेश्यन्त, नक्षत्रेषु हिमांशुरिव चन्द्रोदरो रराज। यत्राग्रे गगने चक्रयोः सृष्टिविनाशरूपेणाधऊर्ध्वयोर्भ्राम्यतोः षोडश-

इत्थं राजकुमार्यां वचनं वदन्त्यां पृथिव्याः क्रीडावातायनतलाद् राजमार्गादयं श्लोक उदभूत्।

"ईदृक्षराधावेधेन कलावत्या मनःप्रियः। एकश्चन्द्रोदरो विश्वमौलिवर्त्ती जयत्ययम्" ॥१॥

इति श्लोकश्रवणमनुमोदना हर्षान्विता राजकान्ता तनयया सह जालान्तरे लोचनं दत्तवती। अत्रान्तरेऽग्रे पठद्वन्दिसमूहं तुरगारूढं मार्गे संचरन्तं वीरं चन्द्रोदरं राज्ञी ददर्श। चन्द्रोदरस्य स्वतनयायाश्च वदनं वारंवारं पश्यन्ती रत्नमञ्जरी योग्यमिलनात्मस्तककम्पं चकार। विद्वच्छिरोमणिरयं क्व गच्छतीति तया पृष्टा कापि युवतिः शीघ्रं गत्वा सर्वं विदित्वा समीपमागत्य निवेदयामास। हे देवि! अद्यायं मन्त्रीश्वरमतिसारवाण्या नगरमध्यतीर्थङ्करमन्दिरयात्राकरणेच्छया चचाल। ततस्तेन समाचारेण चन्द्रोदरस्य शोभावलोकनेन च किञ्चित्प्रसन्ना कलावती विवाहवाञ्छामकार्षीत्। अथ भूप आसमुद्रमिलितपरिवारसमूहं चन्द्रोदरकलावत्योर्विवाहमहोत्सवमकारयत्। पण्डितानपि "हे पठन्मूर्ख तिष्ठ!" इति साक्षेपमकस्मादानन्दाद्गोत्रवृद्धाष्वाचारं कारयन्तीषु, ताम्बूलभरितस्थूलकपोलासु शोभमानकुङ्कुमकेशरकान्तिषु युवतिषु माङ्गलिकगानतत्परासु, समन्ततो वैतालिकसमूह उत्ताले वंशगुणगानं कुर्वति, सान्द्रगम्भीरनादपूर्वकं वादित्रेषु वाद्यमानेषु, लज्जयाधोमुखयोर्निजैर्निजैरुन्मुखीक्रियमाणयोर्वधूवरयोर्वारंवारं तारेक्षणे जायमाने, आभरिताकाशो भग्नजगत्कर्णेन्द्रियो दिग्भित्तिभ्रंशोत्पन्न इव कोऽपि कोलाहलः प्रादुरभवत्। ततः किमिदमित्यूर्ध्वभ्रूलते निकूणितलोचन उत्कन्धरे पृथिवीपतौ चन्द्रोदरे च कोऽपि राजपुरुषः समागत्य त्वराचलनकण्ठशोषेण रूक्षया वाण्या वैधुर्यगलपितनादमवादीत्। हे प्रभो! आकाशस्य सङ्कोच इव विन्ध्याचलस्य विस्तार इव कृतान्तस्य क्रूरत्वदीक्षायाः प्रथमगुरुरिव शुण्डावलि-

पश्यन्नयं कुमार इदं वारंवारमिहागच्छतीति स्थिरां दृष्टिं विधाय दृष्टिलक्ष्यसंमुखीं बाणस्य शिखां धृत्वाऽऽकृष्टचापोऽसौ चिरं चित्रन्यस्त इव तस्थौ। तत्समये भूभुजां नयनयुगलं कुमारस्य शराग्रे लक्ष्ये च हृदयस्पर्धया वारंवारमागमनगमने कुरुते। तत्समये च साश्चर्यं राजभिः स बाणं त्यजन् नालोकि, गगने सञ्चरन् बाणश्च न प्रैक्षि, किन्तु वेध्यमेव विद्धमदर्शि। अथ राजसु महाविस्मयक्रीडास्थानेषु श्रीरामतनयश्चन्द्रोदरः परिश्रमदूरीकरणाय कैः प्रशंसापीयूषरसं नापायि? ततो योग्यादरसन्मानसहानीतेतरभूपतिना राजकुमारो नगरप्रवेशं कारितः। ततो हर्षालीने राजकीयजने विवाहसम्बन्धिमाङ्गलिकोत्कण्ठिते सा राजकुमारी म्लानं वदनं धृतवती। अथ दुःखेन पाण्डुवर्णा रत्नमञ्जरी तादृशसमुत्पन्नहर्षमन्थमन्थरया वाण्या राजकुमारीमुवाच। हे वत्से! अद्यापि सकलपरिवाराननकमलविभावरीं श्यामतां मुखे कथं धारयसि? रूपे सादृश्यरहितः काम्यकलाश्रेणिविलासस्थानं शुद्धवंशोत्पन्नो राजकुमारस्तव श्रद्धामपूपुरयत्। धीरोदात्तलक्षणवाञ्छरव्यनैपुण्यदाक्षिण्यालङ्कारोऽयं कुमारस्तव कदाचित् सपत्नीकष्टं न दर्शयिष्यति। अतो हे वत्से! वैमुख्यं त्यज! अत्र समये स्वजनहर्षक्षीरसागरस्य निशाकरस्तव वदनहास्यं शोभताम्! इति जनन्या वचनं निशम्य चन्द्रवदना सा कुमारी भ्रूचेष्टितैर्हृदयविशालशोकं सूचयन्ती जगाद। हे मातः! सपत्नीभ्यो मम किञ्चिद्भयं नास्ति, यदि ताः सपत्न्यो मत्तः स्पर्धासु कर्मबन्धं कुर्युस्तद्भयमस्ति। अथ यदि सपत्न्यो भविष्यन्ति तदाऽत्यन्तप्रेमरीतिभिस्ता भर्तृसुन्दरीः सोदरी इव विचारयिष्यामि। हे मातः! तदेतन्मालिन्यकारणं मम मनसि न, यतः सूर्यः किं कमलिन्याः संकोचकारणतां धारयति? किन्त्वमुना राधावेधेन मम प्रतिज्ञा न पूरिता जाता, येन मम हृदयमहोत्सवः स राधावेधोऽन्योऽस्ति। सत्कर्मदुष्कर्मचक्रयोः सृष्टिविनाशक्रमेण शीघ्रतरैर्भ्रमद्भिर्वेदनामयैररैरन्तरितं संशययन्त्रेण भ्रान्तं सूक्ष्मं परं तत्त्वं विमर्शबाणेन यश्छिन्द्यात् स राधावेधी मम प्रियः स्यात्।

परिश्रमान्मुञ्चन्मदं प्रोधश्निःश्वासं मीलन्नयनं तं गजं कुमारः पुर आगत्य स्वहस्तेन शुण्डेऽताडयत्। कोपखेदाद्गलद्रुधिरे इव रक्तवर्णे लोचने धारयन् दुष्टो गजः सर्पः फणमिवास्मिन् कुमारे शुण्डं चिक्षेप। ततो यथा दुष्टऋणिको धनिकं व्याकुलयति तथाऽग्रहो नश्यंस्तिष्ठन्पतन्नुद्यन्नृपकुमारस्तं कुम्भिनं व्याकुलयामास। अथ यथा योगी लोकस्याग्रभागं सिद्धशिलामारोहति तथानवलोकितोत्पतनो राजपुत्रः किल शिलामयं स्थिरं गजं रभसाऽऽरोहत्। ततस्तदवलोकनाश्चर्योत्ताले शरीरिणां समूहे गते गजराजः पक्षीव वसुधाभागादाकाश उदपतत्। आकाशे लसन् कृष्णकान्तिशोभमानः स गजः कुमारस्य कान्तिभिश्चञ्चलविद्युद्वान्मेघ इव तैर्जनैरवलोकितः। एष गच्छत्येष गच्छतीति लोके विहितकोलाहले राजकुमारमाणिक्यचौरोऽयं गजोऽन्तर्दधे। एतत्किमिति चिन्तापीडानिश्चलैश्चित्रलिखितैरिव लोकैर्दुःखस्य चित्रशालेव सा नगरी जाता। ईक्षणैकप्रिये तस्मिन् कुमारे चन्द्रोदरे गजेन हृते निजसर्वस्वमिव लोकानां लोचनैर्जलमत्याजि। आयूरुद्धदशेन्द्रियरूपद्वारे शरीररूपगृहे प्रियं राजकुमारमन्वेष्टुं मनुष्याणां व्याकुलैः प्राणैः समन्ततोऽभ्रमि। तत्समये तेन राजपुत्रेण सहैव हृदये गते धराधवस्य तनया कलावती मूर्च्छामगच्छदित्युचितम्। दग्धस्योपरि विस्फोटकोद्भेदं तं वीक्ष्य दुःखसमुद्रे मज्जन् पृथिवीनाथः किंकर्त्तव्यविमूढोऽभवत्। पुनश्चैतन्यं प्राप्ता तद्गजमार्गदत्तलोचना सा राजकुमारी हा! जीवितेश! क्व गतोऽसीति वचनगर्भं रुरोद। अहो! तत्समये लोकानां महोदग्रं दुःखं किं ब्रूमः? यत् तस्यां कुमार्यां रुदत्यां वृक्षेषु पाषाणेषु चापि पीडा जाता। अथ विस्मृताक्रन्दहेतुरपि स लोकस्तया राजकन्यया हा! तात! हा! मातः! हा! देव! इत्यादिकथितश्चक्रन्द। अथ रसीभवन्त्या शुचा सह विलासं कुर्वतस्तल्लोकस्य सततस्तत्समये त्रुटिमाहात्म्यवान् दिवसो ययौ। चक्रवाकध्वनिभिः क्रदन्ती नक्षत्रैरश्रुबिन्दुधारिणी ध्वान्तैश्च त्यक्तकेशा विभावर्यपि दुःखिनीवाभूत्। अथ निशापतावप्युद-

तदशनाग्रभागो गर्जननादतिरस्कृतदिग्द्विपो नयनगोचरस्य जनस्य शरीरखण्डैर्नामापि नाशयन् नगरापणपङ्क्तियुगलकूलङ्कषमहावेगो हिंसामहानदीपूर इवात्यन्तसमुन्नतो दानजले लुब्धकैः षट्पदैर्गीतकीर्त्तिः कश्चिद्विपिनवासी गजः कुतोऽपि नगरसमीपं समागतः। तस्य हस्तिनो भयेन स्वीया गजा स्वस्य गर्वमिव स्तम्भमुत्पाट्य श्रवणेभ्यश्चरणेषु चञ्चलत्वं धृत्वा पलायाञ्चक्रिरे। वेगोपहतवायवः पलायमानास्तुरगाः क्रोधोद्धताः परस्परं वर्त्मनिरोधं ललङ्घिरे। येषां नयने पतितभुवनमपि न क्षणत्करोति, अहो! करस्रस्तायुधैस्तैर्वीरैरपि पलायाञ्चक्रे। अथवा किमधिकं वच्मि? असमयकल्पान्तनीरद इव गर्जन्नेष गज आगतः स्वयमेव दृश्यतां, इति तद्वचनेन सपरिवारौ वेगेन समुत्थितौ तौ चन्द्रोदरमहीपती कथिताधिकं गजमपश्यताम्। यावन्महीपतिः पश्यति तावद्वायुना तृणैरिव गजाद्भीतैस्तैर्जनैरग्रतो महीतलं शून्यमकारि। अस्मिन् हस्तिन्यापणसमूहाट्टालकश्रेणिका भञ्जयति नगरस्य दयया कम्पमानो धराधवोऽवोचत्। कुत्रचिन्मम सेनासमुदाये कोऽपि क्षत्रियातनयोऽस्ति? यो बाहुपराक्रमेण गजेन भज्यमानं नगरं रक्षेत्? इति कथयित्वा भूजानिर्यस्य यस्यानने नयनमदात् स स वीरो नवोढेव शीघ्रमधोमुखत्वं दधार। ततो विहितमहाक्रन्दने तत्र नगरेऽतिव्याकुले वधूत्तरीयेण बद्धमुत्तरीयं तरसा त्यक्त्वोच्चपुलकावलिः कुमारश्चन्द्रोदरः पर्युत्प्लुत्य कृतसिंहध्वनिः "रे रे! मा मा!" इति हस्तिनमवोचत्। तस्य कुमारस्य ध्वनिभयेन भीतः क्षणं स्तब्ध इव गजः स्थित्वा निजं मानसं स्थिरं विधाय कोपेन कुमारं प्रत्यधावत। गजो वामभागेन शीघ्रं चलितुं न शक्नोतीति विचार्य गजपार्श्वभागमाश्रित्य कुमारः पुच्छसमीपं ययौ। बलवान् कुम्भी कोपात् तं कुमारमन्वचलत्, प्रबलः कुमारः पेचकमूलस्थ एवामुं गजं पीडयन्नभ्रमत्। इत्थं क्रोधद्वेषप्रभृतिदोषवाञ्जीवः कर्मणेव कौतूहलाद्वीरेण कुमारेण गजश्चिरमभ्रामि। उद्दामवामपार्श्वातिभ्रमणपरिश्रमस्फुटच्छरीरः स गजस्तत्समये कृत्रिम इव कुपित एव स्थितः।

मुनिराजः कायोत्सर्गं पारयित्वा साक्षात् तिरस्कृतद्राक्षालताफलं वचनं बभाषे। गार्हस्थ्ये पुण्यसम्पत्त्या दानशीलतपोभावविजयशालिनी शासनस्य प्रभावना त्वत्तो भाविनी। तद् हे कल्याणिनि! साम्प्रतं संयमोद्यमं मा विधेहि! यतस्त्वयि च किञ्चिद्विशेषभोगफलं कर्म चकास्ति। यदर्थमयं प्रयासः, स चतुर्थे दिवसे समागमिष्यति तथा स राजकुमारश्चन्द्रोदरो यथा वर्त्तते तथा त्वं निशामय!

अथ कल्याणभरितलक्ष्मीवती वैताढ्यपर्वतालङ्काररूपा नगरसमूहशिरोमणिर्मल्लिका नाम्ना प्रख्याता नगर्यस्ति। न्यायशाली विशालपराक्रमो मनोहरविद्याशक्तिसम्पन्नो रत्नाङ्गदो नाम विद्याधरश्रेष्ठस्तां नगरीं भुनक्ति। तस्य नृपस्य लीलावतीनामश्रीजठरकमलैकहंसी रूपवती स्वरूपलक्ष्मीरिव रुक्मिणी नाम तनयाऽस्ति। गतदिवसे तां सुतामङ्के रमयन् स रत्नाङ्गदः सभास्थिताञ्जनानिदं बभाषे, पृथिव्यामेतत्सदृशः कश्चिद्वरोऽस्ति न वेति? ततो विद्याधरवदनेभ्यस्तत्र पतिं तदधिकशोभावन्तं निशम्य स विद्याधरपतिः कुमारमह्वारयत्। ततः स्वतनयाविवाहार्थं तेन प्रार्थितो नयधर्मसदाचारमती राजकुमार इदमुवाच। दैवमर्यादाङ्कविम्बरूपशोभावतीं नयनविलासकथितशीलप्रभृतिगुणवतीं वधूमहमेवाहमुद्ववाह। सतीं सुरूपवतीं चैकां हरिणलोचनां स्वीकृत्य द्वितीया सुवदना कस्मै सुखाय परिणीयते? कारागृहनिवासो वरं, देशान्तरभ्रमणं श्रेष्ठं, नरकसंचारी वरं, पुनर्द्विभार्यः पुरुषो न वरम्। भार्याद्वयपतिः पुरुषोऽनलङ्कृतो गृहाद्गच्छति, जलच्छटां न प्राप्नोति, प्रक्षालनरहितचरणश्च शेते। दुर्भगापि विरूपापि सपत्नी कामिनीनामपि सदा हि हृदयतप्तलौहशल्यवच्छरीरमात्रं लसेत्। तत् तादृशकामिनीप्रीतिरसव्यसनिना मया तव तनयासम्बन्धबन्धो मनोहरोऽप्युचितो न लक्ष्यते। इति कथयित्वा धर्मासक्ते राजकुमारे तूर्णीभूते विद्याधरचक्रवर्त्ती बभाषे। हे महाभाग!

यमाने कुमाराननशङ्कया प्रसन्नीभवतो लोकस्य लाञ्छनरेखैव विघ्नं चकार। कण्ठविलग्नां रोदनक्रियां नयनेऽनुभवन् मोहनिद्रासुप्तः स जनो गच्छन्तीं विभावरीं न विवेद। ततः सूर्यकान्तिचिन्तासमूहेऽस्तंगतहिमांशुरूपपतिवियोगिनीस्तारकाः पतन्तीर्दृष्ट्वा हृदयंगमपतिवियोगपीडिता सा राजकुमार्यपि मम दुःखौषधं कृशानुरस्त्वित्युच्चैर्वचनमवादीत्। तत्समय आनृपरङ्कपर्यन्तं मरणमभिलषतां लोकानां वदनेष्वपि तदेव वचनमुत्पन्नमभूत्। इत्थमेकमतमाश्रित्य कर्मसाक्षिणि सूर्य उदिते लोको नदीतीरपृथिवीतलं श्मशानमगच्छत्। इह निजस्य चिताकृते लोकैर्दूरादङ्गुलैर्मितं वसुधायाः खण्डं खण्डं कृपाणाकर्षणैर्व्यभज्यत। तत्र लोकैरहं पूर्वमहं पूर्वमिति रीत्या सुवर्णसदृशमूल्यगृहीतैर्दारुखण्डसमूहैश्चिता निर्मिताः। तच्चितासमूहमवलोक्य भविष्यत्तापशङ्कया तत्सीमाकाशजलस्थलदेवताः समकम्पन्त। ततस्तृणपूलेषु कृशानुं विन्यस्य लोको जीवितस्याग्रेसरमिव पवनमाननतोऽक्षिपत्। वारंवारं प्रेरिताभिराननवायुवीचिभिर्भूयो वह्निर्नाज्वलत् ततोऽयं जनो विलक्षोऽभवत्। उत्पादितज्वलनोपायसमूहेनापि लोकेन कुतुकीव पवनैर्हसन् स वह्निर्ज्वालयितुं न समर्थोऽभूत्। ततो विलक्षा राजकुमारी दिक्षु विक्षिप्तनयना दूरतः शरीरोत्सर्गध्याननिष्ठं मुनिमद्राक्षीत्, विचारयामास च, दयापीयूषसागरस्यास्य मुनिराजस्य समीपे चैतावज्जनतासंहारकारणो वह्निर्न ज्वलतीति युक्तम्। तदहं संशयरहितं स्वार्थसिद्ध्यर्थं शीघ्रममुं वन्दे, यत ईदृशा गुरवो भृशं वाञ्छाकल्पवृक्षाः शोभन्ते। इत्थं विचार्य निर्मलबुद्धिर्मुनिवन्दनस्पृहावतीयं राजकुमारी मुनिदर्शनसानन्दैः सकलैर्लोकैः समन्विता ययौ। अथ प्रकटभक्तिदेदीप्यमानहृदया पृथिवीकान्ततनया तं यतिं प्रणम्य स्वदुःखसूचकं वचनं जगाद। हे दयासागर! भवता स्वतपःप्रभावेण किं वह्निनिरोधः कृतः? कृशानुप्रकटतापपीडितममुं जनं किं न वेत्सि? हे भगवन्! हे भुवनकल्याणकर्त्तः! तर्ह्येतादृशतापव्याकुलमिमं जनं संयमपीयूषसमुद्रे निमज्जय! अथ संसारपारदर्शी

अभ्याकृते स्थिता । तत्समये केचिद्बलेनापरे योग्याचरणेन परे त्रपया शीघ्रं स्वीयां स्वीयां चितां सज्जयामासुः । बलस्य निकषसदृशे तत्समये भयभीतमानसाः केऽपि नदीस्नानाचरणप्रभृतिव्याजात् पलायिताः । परे लज्जाभययुगलकूलंकषया चिन्तया व्याकुलाः शनैः शनैश्चितागमूहप्रपञ्चनं चक्रुः । केऽपि सत्त्वधारिणः स्वकपोलरोमाञ्चोत्तरं प्रसन्नमनसो राजकुमारीतो द्विगुणं चितोत्साहं धारयामासुः । स्वक्रूरताविजयाद् यमराजत आच्छन्नं दण्डमिव धूमं मस्तके उच्चैर्भ्रमयन्तश्चितावह्नयो जज्वलुः । ततः पृथिवीं ज्वालासमूहैर्गगनतलमपि कणैर्दिशोऽपि तापयन्तोऽमी वह्नयः कस्य भयजनका नाभवन् ? । तत आकाशे दत्तलोचना सा राजकुमारी लोचनानन्ददायिनं प्रियासहितं विमानेन समागच्छन्तं कान्तमद्राक्षीत् । मम कान्तस्याप्यसौ प्रियतमा तद्ध्रुवं ममातिप्रियेति सा राजकुमारी कलावती सपत्न्यामपि प्रीतिसरसां दृष्टिं ददौ । किं जीवितं ? किमानन्दः ? किमुल्लासः ? किमुत्सवोऽसौ समागच्छतीति निचार्य विकसितदृष्ट्या केनापि चन्द्रोदरो न विलोकितः ? अथ सूर्यः पद्मानीवायं राजकुमारो लोकवाहनानि विकसंश्चरणन्यासैः पृथिवीमशोभयत् । अथ प्रणामं कुर्वन् स चन्द्रोदरो भूपेन गगनसंग्रामादि पृष्टो बभाषे । असौ युष्माकं वञ्चनाय कस्यापि मायाप्रपञ्चोऽभूत् । ततः कृतराजकुमारागमनोद्भवः पृथिवीकान्तो दानैर्याचकसमूहानानन्दयन् नगरीं प्रविवेश । ततश्चिरं निर्मितविशेषनमजामातृगौरवः स कृती महीपः स्वं कृतार्थममन्यत । अथ वारंवारमापृच्छ्यमानः स राजकुमारो बद्धबाष्पेण मेदिनीनायकेन सत्कृत्य कान्तासहितः प्रेषितः । ततः पत्या सह गच्छन्ती राजकुमारी जनकस्य चरणावभिवन्द्य विनयेन शोभमाना वचनमिदं बभाषे । धर्मज्ञो यो युष्माकं धर्मरुचिनामा धार्मिको मन्त्री वर्त्तते स धर्मकथाकथनाय मया सह प्रेष्यताम् । अथ महीपेन राजकुमाराय चन्द्रोदराय निवेद्य धर्मपवित्र आबाल्यब्रह्मचारी धर्मरुचिरसौ तनयया सह प्रेषितः । ततो वरोऽसौ राजकुमारः

मामकीनाऽसौ तनया परिणीय त्वया कदापि द्रष्टव्या न भवतु वरं, तथापि त्वमेनां परिणय ! एतावतापि मम भाग्यम् । इत्यादिवचनसमूहैरुपरोध्य विवाहितः कुमारः स मण्डपरात्रिं विधाय सभार्योऽत्रागमिष्यति । इति तद्दयया वह्निस्तम्भं तां कथां च कथयित्वा स चारणमुनिर्नरप्रचाररहिते मार्गे (गगने) चचार । इहैव स्थितैः कुमारागमनमहोत्सवः पाल्य इति विचार्य तैर्लोकैर्नदीपुलिन एव तस्थे । अद्य राजकुमारचन्द्र आगमिष्यति यतो मुनिवाणी नान्यथा भविष्यतीति चतुर्थे दिवसे मध्यरात्रेऽपि स जनो जागरीकृतः । रे रे ! मया हृतां कन्यां परिणीय नीत्वा क्व गमिष्यसि ? अयं न भवसि ! हे शस्त्रवेत्तः ! शस्त्रं शीघ्रं सज्जय ! रे रे ! मया परिणीतामेतां कन्यां त्वमाच्छेत्तुमभिलषसि ? आगच्छ ! एभिरेव चरणैस्तव मस्तकं पातयामीति स्त्रीविरोधेन कोपेन गगने धावतोः कयोश्चिदुच्चैरुक्तिप्रत्युक्तयो जनेनाकर्णिताः । एतत्किमिति सम्भ्रान्तः स जनः आकाशे दत्तदृष्टिः सहुङ्कारान् कृपाणप्रहारखाट्कारानश्रौषीत् । इह गगनयुद्धे कुमारश्चन्द्रोदरो माभूद्यदि चेत् स्यात् तदा विजयी भवत्विति व्याकुलमनसो जनस्य परस्परमुक्तय आसन् । एतस्मिन्नवसरे खड्गप्रहारक्षतजरुधिरवृष्टिकारी तेजस्विशरीरः कोऽपि प्राप्तमृत्युराकाशात् पपात । हा ! नाथ ! यत् त्वं संग्रामाग्रेसरस्तथा ध्यानसिद्धसिद्धिर्देवोऽसितच्छत्रुणानेन ह्रियमाणां मां कथं न रक्षसि ? एवं दूरं विलपन्त्याः कस्याश्चिद् ह्रियमाणाया इव मृगलोचनाया आकाशमार्गे नादः शुश्रुवे । ततो धरित्रीधवो यावत् पतितं पुमांसं दीपेनाद्राक्षीत् तावत् तं राजकुमारं चन्द्रोदरमुपालक्ष्यत पूत्चकार च । ततः शोकेन मुनिराजस्यापि तां वाणीं निन्दन्तो नगरवासिनः कुमारमरणमवलोक्य परां शुचमलभन्त । राजकुमारी तु घनैः काष्ठैश्चितामुपचितां कुर्वन्ती शोकहर्षयोर्बहिस्था शुशुभे । तां मरणव्यवसायव्यग्रां विलोक्य राजादयो जनाः सर्वे सद्यो मरणकर्मरचनापरा बभूवुः । ततश्चितां राजकुमारमारोप्य कृशानुं प्रज्वाल्य प्रोज्झितकम्पा राजकुमारी

रपात्रं भवन्ति, अहो ! यो जनस्तासां वैमनस्यं विदधाति स पातकी स्यात्। तदयं तस्या आनन्दाय कर्म कुम इति मह्हिजानी रुक्मिण्या अप्यनन्तरमेकान्तरं वारं ददौ। ततः सतीशिरोमणिरियं राजकुमारी रुक्मिणीवारदिवसान् पुण्यलब्धान् प्रदत्त-धर्मकार्यावकाशानमन्यत। पुनः स्वामिप्रेम्णा धन्यं मन्यमानासौ पतिव्रता राजसुता निजवारवासरान् पुण्यसारेण घटितान् मेने। स्वीयवारेऽपि नृपचन्द्रस्य राजकार्यावसरेषु सा राजकुमारी पुण्यस्य केलिभिरेवात्मानं सफलीचकार। तेन धर्मरुचिना पूर्णमाधनमसूहवती सा राजसुता त्रिकालं जिनेश्वरस्यार्चनानि चकार। जिनेश्वरपूजावशिष्टाभिरेव सुगन्धिभिर्द्रव्यैः सा सभोगानपि कृतसुकृतविस्तारांश्चकार। यच्च भोज्यं वस्तु मुनिकृते कल्प्यं तन्मुनिराजेषु वितीर्य सा बुभोज, तथा दृष्टिपवित्रेणैव मार्गेण विजहार। सप्तक्षेत्रीषु निरुपमदानवितानावशिष्टैर्धनैरसौ राजकुमारीतराणि कार्याणि चकाराथवा न चकार। इत्थं शीले न दाने च दृष्टान्तं भवन्ती सा राजकन्या दूरतोऽपि सख्येव मुक्त्या समाश्लेष्टुमियेष। चतुर्थषष्ठाष्टमप्रभृतिभिस्तपोभिः शोषित-निजात्मा धर्मरुचिस्तेषु धर्मेषु तस्या राजकुमार्या वन्धुत्वं दधौ। चेतसा पवित्रः स धर्मरुचिस्तया पितेव भ्रातेव मेने तेनापि च सा राजकन्या सततं मातेव स्वसेव चामन्यत। स धर्मरुचिस्तस्या राजकन्यायाः, सा च धर्मरुचेस्तस्य धर्मक्रियां प्रमादात् यातुं कदाचन चिरसमयं नैव दूरीबभूवतुः। धर्मेऽत्यन्तशुद्धमतिं धारयन्तीयं सती राजनन्दिनी निजवारलसये रुक्मिण्यां स्वामिनः प्रीतिमिच्छत्। रुक्मिणी तु सततं विचारयामास, छलादपि बलादप्यसत्यमपि दोषं दत्वा कदासौ सपत्नी वध्या स्यात्? इति सततं दुर्ध्यानवती तदासीनमत्सरा सा रुक्मिणी राजकुमारीकलङ्कच्छलं विधातुं दासीरुवाच, दुर्जनानां बुद्धिं धिक्! अथैकदा रुक्मिणीसमीपमासीनो भूजानिर्जालमार्गेण धर्मरुचिं जिनेश्वरदर्शनार्थं मन्दिरविहारिणं वीक्ष्य प्रकटरोमाञ्चो बभाषे, प्रधान-

प्रोज्झितदेशान् दुःखयन्नादृतान् देशांश्च प्रीणयन् भार्याद्वययुतः स्वां नगरीं प्राप । अथ तं तनयं समागच्छन्तं वीक्ष्य प्रसन्नो भूजानिर्योग्यत्वाद् बलेन राज्येऽभिषिच्य व्रतमग्रहीत् । सचिवस्थापितवसुधाभारः पृथिवीपतितनयाधीनः स चन्द्रोदरो विद्याधरपतिपुत्रीं न जगाद न च ददर्श । परन्तु शीलव्रतरक्षणशालिनी सद्धर्मकर्मैकविमर्शनिर्मला सा राजकुमारी तत्समये विचारयामास । यावत्यो युवतयः पत्या कृतपरिणया भवन्ति तावद्दिनान्तरे दिवसे वारक्रमशस्तासां स पतिर्भवति । रागादन्यस्या वारं संत्यज्य स्वयमागामुकः पतिः शीलवत्या कामिन्योपपतिवत् स्पृश्योऽपि न । ततो विद्याधरपतिपुत्रीवारनिवारणोऽसौ पृथिवीकान्तो माममिलषन् पापाय जायते । तस्माद् विद्याधरपतिपुत्रीवारं संत्यज्य मम द्वार आगच्छन्नयं केनाप्युपायेन न्यायेन च बलेन च वारणीयः, तथापि यदि स आगतः स्यात् तदा मया न द्रष्टव्यः, इति मनसि निश्चयं कृत्वा शीललीलावती सा राजकुमारी विनयावनतानना गृहागतं राजानमुवाच । हे राजमणे ! सा मम कनिष्ठा भगिनी सद्वंशोत्पन्ना कलङ्करहिता रूपवती चापि किं त्वया दृश्यतेऽपि न ? हे धर्मज्ञ ! नासौ धर्मोऽपि, हे नीतिज्ञ ! नीतिरसावपि न, हे गोत्राचारज्ञ ! गोत्राचारोऽप्ययं न यं त्वमाचरसि । हे स्वामिन् ! हे युक्तिविचक्षण ! हस्तस्वीकृतां तां युक्त्या रक्ष ! शुद्धधर्मनीतिविचाराचारकारिषु जनेषु यशः प्राप्नुहि ! इत्यादिवचनयुक्तिभिरभितः कथितो भूजानिस्तद्गुणातिशयाधीनस्तत्कर्म न स्वीचकार । अथ निश्चलमानसाऽपरिमितमहिमनिर्मला सेयं राजकुमारी चैकान्तरेण दिवसेन भूभुजमसेवत । विद्याधरपतिसुतारुक्मिणीवारोचिते दिवसे तु सा राजनन्दिनी धर्माधीनेन मनसा समागच्छन्तमपि महीपतिं नापश्यत् । प्रत्याख्यानकारिणी सा नृपतनया तादृशधर्मकथाकथनसमूहकलयैव तां रात्रिं गमयामास । पृथिवीशस्तां राजकन्यां प्रति सपत्न्यामपि वात्सल्यं तादृशं सतीत्वं चापि विचारयन् वारंवारं सञ्जातरोमाञ्चोऽभवत् । सदाचारदेवताः स्त्रियः प्रभा-

गले प्रदर्शितः। अथ भयङ्करे क्रोधचण्डाले विमर्यधर्मखण्डिनि रुधिरच्छटाभिरिव रक्तं नयनयुगलं धारयन् महीजानिः कृपाणीमा-
कृष्यान्तःपुरं प्रविश्य देव्या धम्मिल्लं धर्मरुचेश्च तौ भुजावच्छिनत्। ततो रे! रे! सतीत्वधर्मित्वच्छलेन मम गृहे समेत्यायं
विकारो व्यधायि! धिगिति कथयन्निर्जगाम। अथ कपटपरायणा रुक्मिणी मनोज्ञवचनामृतैः कोपाग्निं शान्तं कुर्वन्ती तं स्वामिनं
निजगृहे निनाय। ततो दुःखजलसमूहदीर्घिका कलावती विचारयामास, धिग्धिक्! पूर्वकृतं कर्म कथं परिणतिं गतम्? दुरितपोषका
मोक्षद्वारस्य व्रतस्याच्छादनवृत्तितां गताः शिरःकेशा यच्छिन्नास्तन्ममानन्दायाभूवन्। परन्तु जिनेश्वरचरणनखकान्तिनिर्मलं कुलं
मृषा लाञ्छनेन यन्मलिनीकृतं तन्मम दुःखायाभूत्। हा! हा! धिग्धिक्! जिनेश्वरचरणयुगलपूजनयोग्यौ धर्मपीयूषसरःकमलशोभौ
तस्य धर्मरुचेः करौ शासनदेवीनां पश्यन्तीनामपि क्षणाद्विपुलपराक्रमवता दुष्कर्मगजेन हृतौ! कर्मसु शतक्रतुरपि बलवान्नेति हस्त-
विनाशमशोचत् धर्मरुचिस्तु महामहिमपञ्चनमस्कारध्यानपरायणोऽभूत्। ततः खेदवती सती सा कलावती तु सद्ममध्येऽति-
पुष्टानि विभावरीध्वान्तानि दुःखेन श्यामैर्वदनकिरणैः पुष्णन्ती किं करोमि? इति चिन्तापीडिताऽग्रेऽकस्मात् सूर्यमण्डलमिव विस्तृ-
तकान्तिसमूहमवलोकितवती। अथ किमेतदिति संशयमापन्नां राजप्रियां प्रभामध्यगता मनोहराकृतिधारिणी कापि स्त्री बभाषे। हे
चन्द्रवदने कलावति! तीर्थङ्करस्य शासनदेवतां तद्भक्तभक्तिकारिणीं मां पद्मावतीं नाम्नाऽवेहि! पुण्यलक्ष्मीर्यथा पापानि
नाशयति तथा ये जिनेश्वरभक्तिरसास्तेषां कष्टानि दूरीकर्तुं सामीप्यं न त्यजामि। मयि सत्यां तवेदृशं भयङ्करं विडम्बनं न स्यात्,
मया तु शासनस्य प्रभावनामभिलषन्त्या सोढम्। हे प्रक्षालनमन्तरापि विशदे! साम्प्रतमयं तव कलङ्को धर्मप्रभावनाजलैः
पङ्कवत् क्षालनीयः, नीरदश्रेणिर्वृष्ट्याग्रीष्मजं पृथिव्या ऊष्माणमिव। इत्युक्त्वा तस्या हृदयतापं दूरीकृत्य सा देवी तिरोबभूव। इतश्च

महिषीधर्मबन्धोरस्य धर्मरुचेः सदृशो धर्मकार्याचरणे कोऽपि पुरुषो नास्ति। इति भूभुजि निष्कपटं कथयति कपटक्रियानिश्चला रुक्मिणी सखीनामाननं दृष्ट्वाऽधोमुखी जहास। तासां वदने विकारं विलोक्य साश्चर्यो महीपोऽवोचत्, किं धर्मरुचेरपि कचिद्धर्मकर्मविनाशो युष्माभिरदर्शि ?–ततः किञ्चित्कथितुमिच्छव इव क्षणकम्प्रमनोहराधरास्तस्याः सख्यो मिथः सस्मितमपश्यन्। तासु सखीषु मध्यत एका बभाषे–धर्मरुचेर्धर्मे श्रद्धा विदिता, यदेष प्रधानमहिषीं लोके स्वसारं कथयति। तत इत्थं कथयन्ती सा सखी रहसि कुटिलभ्रुवा नयने भ्रमयन्त्या रुक्मिण्या मस्तकप्रकम्पेन निषेधिता। ततोऽर्धवचनेन तदभिप्रायं जानन्नृप उवाच–तत्र धर्मरुचौ दोषकथनं धिग्धिक्, तत् सूर्ये लाञ्छनकथनमस्ति। सज्जनानां गुणोऽपि स्पर्धालौ लोके दोषत्वं गच्छति यतो निशापतेः कान्तिरपि चक्रवाकस्य सन्तापजनयित्री भवति। अथ क्रोधारुणचञ्चलनयना रुक्मिणी प्राह–यो यत्रासक्तः स तत्र क्षीण इति जनवाणी सत्या। हन्त! दुर्जनानां दोषोऽपि तत्प्रिये लोके गुणः स्यात्, यतोऽन्धकारोऽप्युलूके प्रकाशकर्तृत्वमावहति। अनया यत् कथितं तद्यदि तव प्रत्यक्षं दर्शयामि, तथापीष्टप्रेमविनाशितविचारनयनो न विश्वसिसि। यत्र युक्त्या घटामेति तत्र को नाम विद्वान् विश्वसिति ? गगने पुष्पितां लतां विलोक्य क इन्द्रजालं न वदति ? तथापि यदि तत्र दूषणं प्रत्यक्षीकुरुषे तद्विचिन्त्य तौ प्रति किमप्युच्चै रचयिष्यामीति विचार्य पृथिवीनाथे कथितवति "अद्य सायंकाले तच्चरित्रं तव दर्शयिष्यामि" इति सा रुक्मिणी जगाद। इतश्च सूर्ये पश्चिमपर्वतमस्तकमणीभूते (सूर्यास्तसमये) सा प्रधानमहिषी जिनेश्वरार्चनसज्जतां भेजे। ततः सा धर्मरुचिसज्जितसकलसामग्रीकमां तृतीयसमययोग्यां श्रीअरिहन्तप्रभोः सपर्यां व्यतनोत्। अथ सपर्यां समाप्य जिनेश्वरशेषापुष्पदाम्ना धर्मरुचिना सा मस्तके धम्मिल्लेऽबन्धयत्। देवीमस्तके धम्मिल्लवैचित्र्यं रचयन्नयं धर्मरुचिः सायंकाले रुक्मिण्या जालद्वारेण

परन्तु सतीस्त्रियो वसुधायां दुर्लभाः स्युः। भूयस्ताः सतीर्विचारयामीति क्षणं निश्चलीकृताकार एष मन्त्री स्मरणमभिनीय राजानमुवाच-तव महादेवी महासती जिनधर्मशिरोमणिः स च धर्मरुचिरप्यकैवलब्रह्मचारी वर्त्तते। तयोर्गृहस्थितयोर्यदस्माकं तद्गुणानुकीर्तनं वर्धिः, सा गृहस्थयोः कामधेनुकल्पद्रुमयोभिक्षा। अथ वेदनापीडितोऽपि हासान्वितानननो महीप उवाच, हा! मन्त्रिन्! परस्परं विप्लुतयोस्तयोरेवं कथां मा कुरु। इति राज्ञो वचनं श्रुत्वा मन्त्री गृहाद्बहिर्गत्वा निशाकरं दृष्ट्वा ततोऽन्तरागत्य करेण च दीपं स्पृष्ट्वा जगाद। हे राजन्! अद्यापि चन्द्रोऽमृतमयो द्योततेऽद्यापि च कृशानुर्दहति तन्निर्मलयोस्तयोर्विप्लवं कथं वदसि? कथितेन जलयोगेन त्वां शीघ्रं रोगरहितं कुर्वन् साम्प्रतमेवाहं तयोरविप्लुतं व्रतं दर्शयामि। नृपोऽप्युवाच-हे मन्त्रिवर! किं रचनीयं? यन्मया दोषशङ्कया देव्याः केशसमूहश्छिन्नो धर्मरुचेश्च हस्तौ खण्डितौ। सचिवोऽप्युवाच-हा! महाराज! किं कृतं त्वया? निश्चितं तयोः शापेन व्यर्थं पापेऽत्र पतितोऽसि। तथाप्यहं तस्या देव्याः स्नानजलमानीय खण्डिताभ्यामपि धर्मरुचिहस्ताभ्यां त्वां सेचये। इति कथयित्वा स सचिवः शीघ्रं गत्वा विपुलदुःखतरङ्गखेदवतीं प्रधानमहिषीं मधुरां भारतीं बभाषे। हे देवि! तव दुःखकरणपापेन राजा महाव्याधितापेऽपतत्, तत् तावकस्नानजलस्पर्शपुण्येन व्याधिमुक्तो भवतु। इति कथयित्वा पृथिवीपतिक्लेशाकर्णनपुष्टमहाशोकाया देव्याः पुत्र्याः पितेव सचिवः स्नानाय मस्तकवस्त्रं यावच्चकर्ष तावत् स मन्त्री पूर्ववत् धम्मिल्लमद्राक्षीत्, पूर्वपतितं च धम्मिल्लं तत्र प्रतिबिम्बवद्रत्नघटितभूमौ च्युतमद्राक्षीत्। हे देवि! अहो! तवेदं शीलं, अहो! तवेदं शीलमाश्चर्यकरं! येन च्छिन्नोऽपि केशपाशः शीघ्रं पुनर्जन्मा जातः। इति देव्याः स्तुतिं रचयन् केशान् प्रक्षाल्य तत्तोयं हेमघटस्थमादाय स मन्त्री धर्मरुचेः समीपं ययौ। सचिवस्तस्यापि निर्जितरक्तकमलशोभौ क्षतरहिताविव करौ तयोश्चाधः पूर्वकरौ ददर्श।

महिषीधर्मबन्धोरस्य धर्मरुचेः सदृशो धर्मकार्याचरणे कोऽपि पुरुषो नास्ति। इति भूभुजि निष्कपटं कथयति कपटक्रियानिश्चला रुक्मिणी सखीनामाननं दृष्ट्वाऽधोमुखी जहास। तासां वदने विकारं विलोक्य साश्चर्यो महीपोऽवोचत्, किं धर्मरुचेरपि क्वचिद्धर्मकर्मविनाशो युष्माभिरदर्शि?–ततः किञ्चित्कथितुमिच्छव इव क्षणकम्प्रमनोहराधरास्तस्याः सख्यो मिथः सस्मितमपश्यन्। तासु सखीषु मध्यत एका बभाषे–धर्मरुचेर्धर्मे श्रद्धा विदिता, यदेष प्रधानमहिषीं लोके स्वसारं कथयति। तत इत्थं कथयन्ती सा सखी रहसि कुटिलभ्रुवा नयने भ्रमयन्त्या रुक्मिण्या मस्तकप्रकम्पेन निषेधिता। ततोऽर्धवचनेन तदभिप्रायं जानन्नृप उवाच–तत्र धर्मरुचौ दोषकथनं धिग्धिक्, तत् सूर्ये लाञ्छनकथनमस्ति। सज्जनानां गुणोऽपि स्पर्धालौ लोके दोषत्वं गच्छति यतो निशापतेः कान्तिरपि चक्रवाकस्य सन्तापजनयित्री भवति। अथ क्रोधारुणचञ्चलनयना रुक्मिणी प्राह–यो यत्रासक्तः स तत्र क्षीण इति जनवाणी सत्या। हन्त! दुर्जनानां दोषोऽपि तत्प्रिये लोके गुणः स्यात्, यतोऽन्धकारोऽप्युलूके प्रकाशकर्तृत्वमावहति। अनया यत् कथितं तद्यदि तव प्रत्यक्षं दर्शयामि, तथापीष्टप्रेमविनाशितविचारनयनो न विश्वसिसि। यत्र युक्त्या घटामेति तत्र को नाम विद्वान् विश्वसिति? गगने पुष्पितां लतां विलोक्य क इन्द्रजालं न वदति? तथापि यदि तत्र दूषणं प्रत्यक्षीकुरुषे तद्विचिन्त्य तौ प्रति किमप्युच्चै रचयिष्यामीति विचार्य पृथिवीनाथे कथितवति "अद्य सायंकाले तच्चरित्रं तव दर्शयिष्यामि" इति सा रुक्मिणी जगाद। इतश्च सूर्ये पश्चिमपर्वतमस्तकमणीभूते (सूर्यास्तसमये) सा प्रधानमहिषी जिनेश्वरार्चनसज्जतां भेजे। ततः सा धर्मरुचिसज्जितसकलसामग्रीकमां तृतीयसमययोग्यां श्रीअरिहन्तप्रभोः सपर्यां व्यतनोत्। अथ सपर्यां समाप्य जिनेश्वरशेषापुष्पदाम्ना धर्मरुचिना सा मस्तके धम्मिल्लेऽबन्धयत्। देवीमस्तके धम्मिल्लवैचित्र्यं रचयन्नयं धर्मरुचिः सायंकाले रुक्मिण्या जालद्वारेण

परन्तु मनीषियो वसुधायां दुर्लभाः स्युः। भूयस्ता- सतीर्विचारयामीति क्षणं निश्चलीकृताकार एष मन्त्री स्मरणमभिनीय राजानमुवाच-तव महादेवी महासती जिनधर्मशिरोमणिः स च धर्मरुचिरुच्चैर्बालब्रह्मचारी वर्त्तते। तयोर्गृहस्थितयोर्यदस्माकं तद्गुणालोकनं यदि:, मा गृहजुषयोः कामधेनुकल्पद्रुमयोर्भिक्षा। अथ वेदनापीडितोऽपि हासान्विताननो महीप उवाच, हा! मन्त्रिन्! परस्परं विप्लुतयोरनयोरेवं कथां मा कुरु। इति राज्ञो वचनं श्रुत्वा मन्त्री गृहाद्बहिर्गत्वा निशाकरं दृष्ट्वा ततोऽन्तरागत्य करेण च दीपं स्पृष्ट्वा जगाद। हे राजन्! अद्यापि चन्द्रोऽमृतमयो द्योततेऽद्यापि च कृशानुर्दहति तन्निर्मलयोस्तयोर्विप्लवं कथं वदसि? कथितेन जलयोगेन त्वां शीघ्रं रोगरहितं कुर्वन् साम्प्रतमेवाहं तयोरविप्लुतं व्रतं दर्शयामि। नृपोऽप्युवाच-हे मन्त्रिवर! किं रचनीयं? यन्मया दोषशङ्कया देव्याः केशसमूहश्छिन्नो धर्मरुचेश्च हस्तौ खण्डितौ। सचिवोऽप्युवाच-हा! महाराज! किं कृतं त्वया? निश्चितं तयोः शापेन व्यर्थं पापेऽत्र पतितोऽसि। तथाप्यहं तस्या देव्याः स्नानजलमानीय खण्डिताभ्यामपि धर्मरुचिहस्ताभ्यां त्वां सेचये। इति कथयित्वा स सचिवः शीघ्रं गत्वा विपुलदुःखतरङ्गखेदवर्तीं प्रधानमहिषीं मधुरां भारतीं बभाषे। हे देवि! तव दुःखकरणपापेन राजा महाव्याधितापेऽपतत्, तत् तावकस्नानजलस्पर्शपुण्येन व्याधिमुक्तो भवतु। इति कथयित्वा पृथिवीपतिक्लेशाकर्णनपुष्टमहाशोकाया देव्याः पुत्र्याः पितेव सचिवः स्नानाय मस्तकवस्त्रं यावच्चकर्ष तावत् स मन्त्री पूर्ववत् धम्मिल्लमद्राक्षीन्, पूर्वपतितं च धम्मिल्लं तस्य प्रतिबिम्बवद्रत्नघटितभूमौ च्युतमद्राक्षीत्। हे देवि! अहो! तवेदं शीलं, अहो! तवेदं शीलमाश्चर्यकरं! येन च्छिन्नोऽपि केशपाशः शीघ्रं पुनर्जन्मा जातः। इति देव्याः स्तुतिं रचयन् केशान् प्रक्षाल्य तत्तोयं हेमघटस्थमादाय स मन्त्री धर्मरुचेः समीपं ययौ। सचिवस्तस्यापि निर्जितरक्तकमलशोभौ क्षतरहितावेव करौ तयोश्चाधः पूर्वकरौ ददर्श।

प्रतिरोमभ्रमत्तप्तलौहशङ्कुसमूहविजयवती पृथिवीपतेः शरीरे काचिदाकस्मिकी पीडा समुत्पन्नाभूत् । पराक्रमैकेन्द्रोऽपि तया पीडयात्यन्तं व्याकुलीभवन्नयं भूजानिश्चन्द्रोदरः स्वं जीवितं कष्टमयं मेने । हृदये प्रविशन्तीभिर्वेदनाभिः पीड्यमान इव तस्य राज्ञ आर्त्तशब्दसमूहः कण्ठकूलानि भञ्जयन् मुखेन निर्जगाम । स्वयमाननेन प्रहितो महीपस्य स शब्दो दूत इव विस्तारितकष्टो दूरस्थितानपि मन्त्रिण आकारयत् । भिषग्वरा यथा यथौषधोपचारं, मन्त्रिका मन्त्रवादं च चक्रुस्तथा तथाऽस्य धराधवस्य वेदनैधत । अथाद्वैतवादिवादैकविजयावलम्बनभूतया महीपस्य वेदनया पीडितो लोको व्याकुल्यभवत् । स राजा न शयनीये न च वसुधायां न शीतोपचारैर्न चोष्णोपचारैर्न मर्दनान्नचामर्दनात् सुखमलभत । नरैरसाध्येऽस्मिन् रोगे दैवसंयोगाद्यदि कापि देवता किञ्चिदौषधं कथयति तदा भूजानिर्जीवतीतिविचारयन्तं जनं पूर्वमपूर्वनादेन सावधानं कृत्वाऽऽकाशभारत्येषाऽभूत् ।

**"कस्याश्चन जिनस्वामिभक्तिकेतनचेतसः । सतीशतनमस्यायाः केशस्नपनवारिभिः ॥१॥**

**जिनार्चकस्य कस्यापि कुमारब्रह्मचारिणः । हस्तात्तैः स्नपयित्वास्तरुजं कुरुत भूभुजम्" ॥२॥**

इति गगनवाणीं निशम्य प्रसन्नैर्मन्त्रिभिर्नगरप्रसिद्धो जिनेश्वरभक्तः सतीसमूहो ब्रह्मचारिसमूहश्चानीतः । अथ तैः प्रत्येकं क्रमशस्तस्मिन् कर्मणि कार्यमाणे भूभुजः पीडा नरकलज्जाकरी व्यवर्धत । अथ पीडयद्भिः पीडायाः शरीरधारिभिरवयवैरिव दीनमन्दव्याकुलैर्वर्णैर्नृपः स्वपरिवारमुवाच । शान्त्यै विश्रुतैरेभिरुपचारैर्लोभवतां लोभ इव प्रत्युत वर्धत एव । तत्साम्प्रतं यद्भविष्यतयैवमेव स्थातव्यं, असावहमियं वेदना च क्रीडाव इति किं भवेत् ? अथ जिनदासनामा वृद्धसचिव उवाच–गगनवाणी नासत्या,

विचारयामास—अस्या मयि यः कोपः स्यात् स कारणप्रमाणादल्पः। तदसौ प्राणप्रिया केनोपायेन मयि प्रेम करिष्यति ? यद्वाऽस्या मम का चिन्ता ? तावदात्मानं न चिन्तयामि ? ममाप्रसत्तेर्नियतमेषा साम्प्रतमप्रसन्नाऽभूत्, दाहस्वरूपो वह्निः समीपस्थं काष्ठादिकं स्वयं दहति। तद् हे आत्मन्! त्वं सर्वदा मनसि प्रसन्नत्वं किं न धारयसि ? यतस्त्वय्येव प्रसन्ने सकलं भुवनं प्रसन्नं स्यात्। हे ज्ञानमय आत्मन्! यदि त्वं स्वस्य हितं न विचारयसि, ततस्ते कोऽस्ति, यः पीडां धृत्वा तत् (हितं) कथयिष्यति ?। त्वमेकः कर्मणां कर्त्ता, तत्फलस्य च भोक्ताऽन्ये च सर्वे संयोगजा भावाः कर्मविरचिताः सन्ति। मातृपुत्रपितृभ्रातृभार्यास्वजनप्रभृतयः सर्वे स्वार्थाय ताम्यन्ति त्वदर्थाय तु कश्चनापि न। पुनः सकलजीवकल्याणकारिणी सद्गुरोर्धर्मदेशनाऽस्ति सा संसारव्यवहारमनोव्यथाबाधे त्वयि स्थिता न, तस्मात् हे चेतन त्वं किंस्वरूपः, किमुद्यमः, अद्यापि च कियत्कर्मा, कथं च तव संसारनाशः स्यात् तज्जानीहि। इत्युक्तमतिनिर्मलभावनां विचारयतस्तस्य चन्द्रोदरस्य मानसं वैराग्यरङ्गाचिरमात्मज्ञाने रेमे। इत्थं यथा यथास्य भूपस्य मनो ज्योतीरूपे चैतन्ये स्थितं तथा तथा सूर्यतापे हिमवद्विलयं ययौ। चेतसि विलीने समन्ततो घातिकर्मसु क्षीणेषु संसारोपग्राहिकर्मसु दग्धरज्जुसदृशेषु चन्द्रोदरो राजा सद्ध्यानपीयूषसिक्ताया भावनालतायाः फलं केवलज्ञानमलभत। ततः पद्मावत्या कुसुमवृष्टिपुरःसरे महोत्सवे विहिते यथाविधि च यतिवेषे वितीर्णे कलावत्या धर्मरुचेर्जिनदासस्य सचिवस्य च दीक्षां दत्वा वसुधायां विहारं कृत्वा तत्त्वज्ञानप्रकाशनं विधायानशनं कृत्वा मासपर्यन्ते पुण्यवसुधातले शरीरं त्यक्त्वा चन्द्रोदरमहामुनिर्मोक्षं जगाम। इत्थं दानशीलतपोधर्मरहितोऽपि पुरुषो भावनायाः प्रभावाच्चन्द्रोदर इव मोक्षं प्राप्नोति ॥

॥ इति भावनायां चन्द्रोदरनृपतिकथा समाप्ता ॥

अहो ! तव ब्रह्मचारित्वं, अहो ! तावकं विशदं तपः ! यत्पुण्यपीयूषसेकेन शीघ्रं हस्तौ प्रादुर्भूतौ। त्वं देवीस्नानतोयैर्निजकराभ्यां शीघ्रं राजानं स्नपय। त्वल्लाञ्छनप्रदानसमुत्पन्नपीडं तं नृपं सद्यो व्याधिमुक्तं कुरु !। इति मन्त्रिणि कथयति स धर्मरुचिर्यावज्जलकलशं धारयन्नचलत् तावत् तत्समये शासनदेव्यतिशयात् तज्जलकलशसमीपे गगने निराधारं छत्रं मनोज्ञचामरवीजनं कुसुमवृष्टिर्जयजयशब्दो दुन्दुभिनादश्चाभूत्। इत्थं महोत्सवैर्गत्वा हिमांशुरंशुभिः कैरवमिव धर्मरुचिस्तैर्जलै राजानमसिञ्चत्। वायुदीप्तवह्निशिखया गृहादन्धकार इव तेन जलेनाभूत इव शीघ्रं नृपाद् रोगसमूहो निर्जगाम। तच्चरित्राश्चर्यतरङ्गसमूहलीलया स चन्द्रोदरो राजा चिरं चपलवदनकमलोऽभवत्। ततः स बुद्धिमान् महीपतिर्धर्मरुचिं क्षमयित्वा तां च देवीं क्षमयितुं रुक्मिमण्या सह जगाम। हे प्रिये ! मम सर्वमपराधं क्षमस्व ! इति पृथिवीपतौ देव्याः करलग्ने, रुक्मिमणी वाष्पपूर्णनयना चरणयुगललग्ना बभाषे। हे देवि ! विवाहसमये तावको भर्त्ता यन्मया हारितस्तव च मृत्युवाञ्छया यदाकाशसंग्राममृतकमदर्शि, तथा मयि सततं विशालं वात्सल्यं बिभ्रत्या अपि तवासत्यं कलङ्कमुत्पाद्य यत्कष्टमकारि, सततं च दुश्चिन्तया मया यत् तव विप्रियं चिन्तितं तन्मम सर्वमपराधं हे क्षमावति ! हे महासति ! क्षम्यताम्। तत्पृष्ठदत्तकरा सा देवी प्राह–त्वया मम किं कृतम् ? यतः सर्वोऽपि लोकः पूर्वकृतानां कर्मणां फलं प्राप्नोति। अथ सपश्चात्तापो भूपो हस्तगृहीतां देवीमुवाच–अहं तव मूर्त्तिमत्कर्म, येनेदं फलं दर्शितम्। सपत्नीर्ष्यावशाद् रुक्मिमणी कुटिलतां चकार तद्वरम्, परन्तु मया प्रियेण यत् दग्धासि तद् हा ! हतोऽस्मि। सहजप्रेमवती हृदयवल्लभा सती मया कथं विराद्धासि ? धर्मरहितं मां धिग्धिक्। अरे ! तस्य प्रेमपात्रस्य मया कीदृगनिष्टं कृतम् ? तदहमनाकर्णनीयचरित्रोऽनवलोकनीयाननश्चास्मि। एवं राजनि कथयत्यपि सा कलावती कान्तपराभवातिशयभारवतीव मस्तकमूर्ध्वं नैव चकार। ततश्चन्द्रोदरो निश्चले मनसि

नान्मन्यमिवानुपमस्ति। जगति पुण्यवाञ्जनः प्रत्युपकारतोऽनृणी भवेत्, परन्तु संसारभ्रमनाशकस्य तव तत्त्वज्ञानोपदेशस्य कोऽप्यनृणी न स्यात्। आतपोत्तापितस्य पीयूषधाराभिषेचनमिव, दारिद्र्यपीडितस्य चिन्तामणिरत्नलाभ इव, महान्धकारगह्वरप्रविष्टस्य दीपिकेव, सागरमध्यनिक्षिप्तस्य श्रेष्ठतरणीव, भयङ्कराराण्यमध्यभ्रष्टस्य वाञ्छितमार्थपतिरिव, अगाधकूपपतितस्योद्धरणमञ्चिकेव, अनन्तसंसारभ्रमणपरिश्रमनिराशस्य मम मोक्षलाभाय साम्प्रतं तावकं दर्शनं वाहनं बभूव। हे मुनिराज! विस्तारितज्ञानश्रीसर्वज्ञनिर्मितया दीक्षया त्वं मयि दयां विधेहि! अस्मिन् राज्ये तनयं निवेश्य यावदहं पुनरागच्छामि तावद्धि सदयैः प्रभोश्चरणेस्थैव स्थातव्यम्। इति सद्गुरून् निवेद्य नगरं प्रविश्य राजा स्वीये राज्ये धनोत्तरं नाम तनयं स्थापयामास। सकलान् मनुष्यान् भग्नशृङ्खलान् कारागृहेभ्यो विमुच्य पाशेभ्यः क्रीडाहरिणान् पञ्जरेभ्यश्च पक्षिणो विमुच्य स्वजनवर्गं व्यवस्थाप्य विहितस्नानविलेपनो वन्दिभिः प्रस्तूयमानो जनैर्गीयमानगुणोऽयं वादित्रमनोहरशब्दैर्भेरीभाङ्कारैराकाशं पूरयञ्जिनेश्वरमन्दिरेषु देवान् पूजयन्नाश्चर्यकरं दानं ददानः स्वस्वामिपथमनुगच्छन्त्य एता राज्ञ्यो वसुधायां धन्या इति स्वजनैः प्रशस्याभिरन्तःपुरकामिनीभिः समन्ततो भूषितो व्रतार्थिनी गजभिरन्वितो नूतननृपेण महितो मनोहरशृङ्गारः श्रेष्ठगजवाहनो हहा! अस्मांस्त्यक्त्वा स्वाम्येवं व्रताय गच्छतीति दुःखपीडितैः पुरनिवासिभिर्दृष्टः पृथिवीनाथो विपिनान्तिकं प्राप। ततो गजादध उत्तीर्य सचामरं छत्रं मुक्त्वा क्षरदश्रुधारामनुगच्छन्तीं प्रजां क्षमयित्वा हे वत्स! तवेदं शरीरं व्रतकष्टं कथं सहिष्यते? इति कथयन्तिनिविडाश्रुं जननीनर्गमापृच्छय अहो! सत्त्वमहो! सत्त्वमिति साधुसमूहैः स्तुतो ममत्वरहितो राजोद्यानं प्रविश्यालङ्कारवेषादिकं तत्याज। ततः समर्थो महीपः पक्षी पञ्जरमिव राज्यनन्धं परित्यज्यात्मारामरमनोहरां दीक्षाशां सहर्षमशिश्रियत्। ततो विहितकेशलुञ्चनो वसुधाधवस्तत्समये वज्रनाभं

अथ सोऽध्यात्मज्ञानी पद्मोत्तरो भूपालो दानशीलतपोभावरूपं चतुर्विधं धर्मं श्रुत्वा तं मुनिराजमुवाच। हे धर्माधीश मुनिराज! धन्य एवासि, यस्य भाग्योदयैर्भवान् मोक्षलक्ष्मीसुखहेतुरूपमीदृशं धर्मं व्याजहार। हे प्रभो! त्वया कृतो विचारो मम मनसि चमत्कारं करोति, किन्तु एकः सन्देहो हृदये समुपजायते। सज्जनैर्हि दुष्कर्मणां समूहं भेत्तुं व्रतं गृह्यते, परन्तु ध्यानात् केवलज्ञाने सम्प्राप्ते व्रतात् (दीक्षाग्रहणात्) किं फलं भवति?। जना हि प्रकाशाय गृहे दीपं दीपयन्ति, परन्तु स प्रकाशो यदि दिवसे सूर्यादुत्पन्नस्तदा तेन दीपेन किं कार्यम्?। ततो वसुधापतिप्रार्थितो मुनिः प्रत्युत्तरं व्याजहार–हे राजन्! त्वया समीचीनं कथितं, परन्तु तत्कारणं निशामय!। सद्गुणोऽपि कुमारो गोत्रवृद्धैः पुरुषैर्नैव प्रणम्यते, किन्तु विभूषितराजलक्ष्मीरवनतशिरोभिः प्रणम्यते। एवं केवलज्ञानी गृहस्थो लोकैर्न वन्द्यते, परन्तु गृहीतमनोहरचारित्रः स इन्द्रैरपि पूज्यते। अतश्चारित्रं केवलज्ञानादधिकं वदन्ति, तेन विद्वांसस्तस्मिन् केवलज्ञाने प्राप्तेऽपि चारित्रं प्राप्तुं धावन्ति। एवं सम्यक्त्वसारनिर्मलां गुरोर्भारतीं श्रुत्वा राजा तत्समये सावधाने मनसि विचारयामास। यदेष मम श्रीमान् गुरुर्यांश्चतुरो धर्मान् व्याजहार, तेषु धर्ममेकमपि सम्पूर्णं विधातुमहं न समर्थः। सुपात्रे दयनीये च क्षेत्रे दानं देयमिति व्यवहारः, परन्तु महाव्रतधारिणो मम नृपस्य दानं न गृह्णन्ति। स्त्रियां विषयासक्तमानसस्य पृथिवीनाथस्य ममाखण्डितब्रह्मचर्यजीवनं सर्वश्रेष्ठं शीलं क्व? वृषभस्येव वसुधोद्धरणाग्रेसरस्य ममोपवासकृतनिवासं शरीरभङ्गकरं तपः क्व?। समन्ततो निरन्तरचरच्चिन्ताव्याकुलमानसस्य मम संयमाधीनाया भावनायाः कथा क्व?। यदि राज्यं त्यक्त्वा शीघ्रं महाव्रतं स्वीकरोमि तच्चतुर्विधं निर्मलं धर्मं विधातुमहं समर्थः स्याम्। वैराग्यसंवेगो विद्वत्सूर्यः स राजैवं विचार्य वाञ्छितपदार्थप्रदं मुनिराजं विज्ञापयामास। हे प्रभो! हे ज्ञानचण्डांशो! त्वया कथितं सकलं धर्मोद्धरणकारणं जननी-

नुमोदयामि। शुभकर्मयोगेन यो मम त्रसमयः कायः क्वापि जैनधर्मोपकारकोऽभवत् तमनुमोदयामि। इत्यनन्तजन्मप्राप्तं दुष्कर्मसमूहं स निन्दयामास, तथा कदाचित् किञ्चित् सुकृतं कृतं तदन्वमोदत। अथ श्रीजिनेश्वर–सिद्ध–साधु–धर्मा मम शरणं भवन्त्विति पुनः पुनः कथयन् स चतुःशरणमशिश्रियत्। परित्यक्तनिदानो मरणजीवनेच्छारहितः संसारमोक्षस्पृहाहीनोऽसौ मुनिराजः समाधिं प्राप। मुहुर्मुहुः पञ्चपरमेष्ठिनां नमस्कारानुच्चैर्वदन् सावधानस्तापरहितोऽयं मुनिराजः पञ्चत्वं गतः। एवं समाधिप्राप्तस्य मरणस्य व्यथामननुभवन् पूर्णमासोपवासोऽयं मुनिराजः प्राणतं देवलोकं प्रपेदे। तत्र चन्द्रप्रभासाभिधे विमाने विपुलसमृद्धिरान्तर्मुहूर्त्तान्मिलितसकलपर्याप्तिर्विभवः सूर्यः प्रातःसन्ध्याकालमिव शय्याचरणं दूरीकृत्यैप मुनिराजस्तेजस्समूहदेदीप्यमानो देव आविर्भूत्। कैः पुण्यैरियं मम समृद्धिरुत्पन्नेति साश्चर्यः स देवोऽवधिज्ञानविदितं पूर्वजन्मान्वमोदत। तत्समये तद्विमानपरिजनो देवसमूहः स्फारस्फुरज्जयजयशब्दस्तदग्रे महोत्सवांश्चकार। हे प्रभो! त्वं पुण्ययोगैरस्माकमनाथानां स्वामी प्रकल्पितोऽसि। त्वं चिरञ्जीव! चिरञ्जीव! सेवकानस्मान् रक्ष! रक्ष! इत्यादि कथयन् देवानां देवीनां च समुदायस्तं ववन्दे, तथा हर्षेण पञ्चशब्दोदयं विस्तारयामास। ततो महामाङ्गलिकविस्तारवान् स देवः पल्यङ्काद्दुत्थितो विहितवैक्रियस्वरूपसमृद्धिः क्रीडादीर्घिकामवाप। स देवोऽकस्मात् प्रवेशोच्छोलतरङ्गजले तद्वदनविलोकनलज्जामग्नकनककमले तत्र जलाशये स्नानमकरोत्। अथ देवकृत्यानां निधानं पुस्तकं वीक्ष्य स देवो भक्त्या विमानस्थापितजिनमन्दिरस्थितं शाश्वतं जिनेश्वरमपूजयत्। अथ विमानशोभामुकुटं सिंहासनं शोभयित्वा हर्षतरङ्गमग्नेन्द्रियः स देवो दिव्यनाटकमद्राक्षीत्। मूर्त्तिमान् विलास इव स देवः कदापि क्रीडासरसीषु कदाचिन्नन्दने कानने रमणीभी रेमे। कदाचिद्देवैः सार्धं जिनयात्रासु विजहार, कदाचिद्धर्मक्षेत्रे श्रेष्ठपुरुषस्तुतीर्व्यरचयत्। भवि-

ज्ञानी सकलपापहरो गुरुः श्रीवज्रनाभो विज्ञाय तद्राजर्षिपुण्यैस्तत् स्थानं प्राप। चन्दनसिक्तस्य यथा मलयाचलवायुसङ्गमस्तथाऽनशनमानसस्य तस्य राजर्षेर्गुरुदर्शनमानन्दायाभूत्। अथानन्दोल्लाससञ्जातरोमाञ्चः स राजर्षिशिरोमणिर्गुरुचरणकमलयोः षट्पदलीलां स्वीचकार। ततोऽसौ मुनिराजोऽनशनं कृत्वा गुरुसमीपे मस्तकघटिताञ्जलिरित्यालोचनामकरोत्। चिरमव्यवहारनामराशौ निवसता मयाऽनन्तप्राणिसमूहो यत्परितापितस्तत् तान् क्षमापयामि। तथा व्यवहारनामराशौ पृथिवीशरीरवता मया लोहलोष्टपाषाणीभूय ये जीवाः परितापितास्तान् क्षमयामि। नदीसागरकूपेषु जलरूपेण मया ये केऽपि समाश्रिताः प्राणिनस्तापितास्तान् क्षमयामि। अग्निविद्युद्दावानलदीपादिमूर्त्तिना तेजःशरीरेण मया ये हतास्तान् क्षमयामि। महावृष्टितुहिनरजोदुर्गन्धसहितेन वायुशरीरेण मया ये पीडितास्तान् क्षमयामि। दण्डधनुर्बाणरथप्रभृतिवता वनस्पतिशरीरेण मयाऽत्र ये व्यथितास्तान् क्षमयामि। अथ कर्मवशात् त्रसतां प्राप्य दुर्बुद्धिना मया रागद्वेषाभिमानान्धेन ये पीडितास्तान् क्षमयामि। सर्वत्र ते प्राणिनोऽपि मामकीनमपराधं क्षमन्तां, सकलजीवेषु मम मैत्र्यमास्तां, कुत्रचिच्छत्रुता माऽस्तु। पञ्चमहाव्रतेषु यः कश्चनातीचारो मया कृतस्तत्र गुरुसाक्षिकं मम दुष्कृतं मिथ्या भवतात्! अव्यवहाराभिधे राशावनन्तजीवसंघट्टाद्यया मम कर्मच्छिन्नं तां पीडामप्यनुमोदयामि। जिनेश्वराणां प्रतिमामन्दिरकलशमुकुटप्रभृतिषु यः पृथिवीमयो मम देहो जज्ञे तमनुमोदयामि। तथा दैववशाद्यो मम जलमयदेहो जिनेश्वरस्नानेषु पात्रेषु चोपकृतो भवेत् प्रायस्तमनुमोदयामि। यो मम तेजोमयो देहो जिनेश्वराणामग्रे धूपाङ्गारे दीपे चोपयोगी जातस्तमनुमोदयामि। अरिहन्तृप्रभुसमीपे धूपोत्क्षेपे तीर्थमार्गेषु च वा परिश्रान्ते सङ्घे यन्मम वायुमयं शरीरमुपयोगि जातं तदनुमोदयामि। यतीनां पात्रदण्डेषु जिनदेवपूजनपुष्पेषु यो मम वनस्पतिमयो देहोऽभूत् तम-

एवं मुनीन्द्रस्तीव्रं तपो वितन्वन्तु तपस्विषु सर्वविधां शुश्रूषां चकार। अयं मुनीशः सिद्धान्तस्याध्ययने गुणनेऽर्थे च चिरं तदेकमानसस्तादृशंवाग्मुपयोगमदात्। अयं मुनिः सर्वज्ञधर्मसर्वस्वे मुक्तिमिलनकारिणि सम्यक्त्वे निजं मनो निश्चलं व्यधात्। ज्ञानस्य ज्ञानपात्रस्य च गुणशिरोमणौ विनयेऽयं मुनीन्द्रो मोक्षलक्ष्म्या विभ्रमतिचारं न चकार। संसारमहासागरपारेषु व्रतलक्ष्मीनां व्यापारभूतेष्वावश्यककर्मसु स नियतमाचाररहितो नाभूत्। धर्मैकमतिरयं राजर्षिः पुण्यवल्लीमूले शीले मूलोत्तरगुणेष्वपि निरतिचारतामधारयत्। क्षणलवप्रमाणेऽपि समये सावधानबुद्धिरयं राजर्षिर्ध्यानासेवनसंवेगभावनादीनि न तत्याज। असौ राजर्षिः शरीरतेजसार्तन्यां निक्षिप्तमात्मरूपं कनकं ज्वलितेन तपोवह्निना रात्रिन्दिवमशोधयत्। श्रद्धास्थानं स मुनिनायकः शुद्धं वस्त्रपुस्तकपात्रान्नादिकमानीयानीय साधुभ्यो ददौ। स एष राजर्षिर्मुनी रोगवत्सु बालेषु सततं विस्तीर्णादरः सर्वलोकप्रशंसनीयं वैयावृत्त्यं चकार। मनोव्यथानाशकोऽयं केनापि कारणेनातिसन्तोषरहितं सर्वेषां चेतः सन्तुष्टं कारयामास। ज्ञानाच्छादककर्महारी राजर्षिरयं सततं श्रवणपठनव्याख्यानुग्रहैर्नूतनं नूतनं ज्ञानं जग्राह। आनन्दसमासक्तो रोमाञ्चसमूहशोभितशरीरश्चिरं चञ्चलमस्तकोऽयं मुनिर्वारंवारं श्रुतज्ञाने भक्त्या मनो ददौ। धर्मदेशनाप्रतिवादीशप्रत्याख्याकवित्वप्रभृतिभिर्गुणैः स मुनीशः सर्वज्ञशासनस्य प्रभावविस्तारकोऽभूत्। इति समुपलब्धतीर्थङ्करनामकर्मा समाहितो व्रतसमूहवृतः स मुनिपतिर्भुवनं बोधयन् विजहार। पुरोलक्षाश्चतुरा आकाशगामिनो विद्याधरा हंसा नदीमिव साक्षात् तस्य मुनेः पीयूषमयं वचनं श्रोतुं गगनादाजग्मुः। मनीषादिगुणा यथा विनयं सेवन्ते तथा तपःप्राप्तिभिराकृष्टा देवदानवमनुष्यनागास्तमसेवन्त।

एवं सच्चरित्रेण व्रती स मुनिराजो वसुधां पावनीविधाय संसारभ्रमणमहागदविनाशायानशनव्रतेच्छुरभवत्। ततः केवल-

गुरुमभिवाद्य गुरोः करे छत्रीभूते इति पपाठ। हे भगवन्! इहैवं सामायिकं व्रतमङ्गीकरोमि, तथा सकलं सावद्यकं योगं नियतं त्रिधा(मनोवचनशरीरैः) प्रत्याख्यामि। ततस्तत्समये केवलिनं राजर्षिं च भक्तिपूर्वकं प्रणम्य साश्रुलोचनः सकलो जनो नूतननृपेण सह नगरे जगाम। आप्तसंयमसाम्राज्यो महाबुद्धिमान् विनयशाल्येष राजमुनिर्यथाविधि गुरुभिः सह विजहार। अथासौ राजर्षिराचाराङ्गं, सूत्रकृताङ्गं, स्थानाङ्गं, समवायाङ्गं, विवाहप्रज्ञप्तिं (भगवतीं), ज्ञाताधर्मकथां, उपासककथां, अन्तकृद्दशां, अनुत्तरौपपातिकां, दशाश्रुतस्कन्धं, प्रश्नव्याकरणं, विपाकश्रुतं चैतान्येकादशाङ्गानि सूत्रादर्थाच्चापि पपाठ। तत उपवासः, ऊनोदरता, वृत्तिसंक्षेपः, रसत्यागः, संलीनता, कायक्लेशश्चेति षड्विधं बाह्यं तपः कुर्वंस्तथा प्रायश्चित्तं, वैयावृत्यं, स्वाध्यायो, विनयः, कायोत्सर्गः, सद्ध्यानं चेति षड्विधं सततमान्तरं तपो विस्तारयन् सत्पराक्रमः स्फुरद्धैर्यशाली स राजर्षिः गजो विपिनानीव सुश्लिष्टान्यपि कर्माणि हेलया जर्जरीचकार। अथ निर्मलश्रद्धाकरः स मुनिराजो विंशतिस्थानकानि संस्पृशंस्तीर्थङ्करनामकर्मार्जयामास। तथाहि—

सकलप्राणिनां बान्धवे, कल्याणकरमार्गदर्शके सर्वज्ञे तीर्थङ्करे प्रणामं स्तवनं पूजानुमोदनं च चकार। क्षयंगमितकर्मसु लोकाग्रभागस्थितेषु सिद्धेषु स्थिरमना अयं मुनिराजो ध्यानधारणपूर्वकमाराधनां व्यधात्। एष मुनिः श्रीसङ्घरूपे सिद्धान्तरूपे प्रवचन आज्ञानुल्लङ्घनक्रमेण यथाशक्ति भक्तिमानभूत्। अयं मुनिराजः पञ्चविधमहाव्रतधारिणे निर्मलधर्मोपदेशकरे गुरावाज्ञाधीनमानसत्वात् पूजां व्यरचयत्। एष मुनीन्द्रः समवायाङ्गवित्सु वयोव्रतमहत्सु वृद्धेष्वपि संसारभ्रमविनाशाय निश्चलां भक्तिं व्यधात्। सूत्रधरादर्थधरः श्रेष्ठस्ततोऽप्युभयधरः श्रेयानित्यसौ विद्वान् मुनिराजः क्रमशः श्रुतधरेषु भक्तिं ततान। तपोनिधिर्निर्मलश्रद्धाधर

नुमोदयामि। शुभकर्मयोगेन यो मम त्रममयः कायः क्वापि जैनधर्मोपकारकोऽभवत् तमनुमोदयामि। इत्यनन्तजन्मप्राप्तं दुष्कर्मसमूहं स निन्दयामास, तथा कदाचित् किञ्चित् सुकृतं कृतं तदन्वमोदत। अथ श्रीजिनेश्वर-सिद्ध-साधु-धर्मा मम शरणं भवन्त्विति पुनः पुनः कथयन् स चतुःशरणमशिश्रियत्। परित्यक्तनिदानो मरणजीवनेच्छारहितः संसारमोक्षस्पृहाहीनोऽसौ मुनिराजः समाधिं प्राप। मुहुर्मुहुः पञ्चपरमेष्ठिनां नमस्कारानुच्चैर्वदन् सावधानस्तापरहितोऽयं मुनिराजः पञ्चत्वं गतः। एवं समाधिप्राप्तस्य मरणस्य व्यथामननुभवन् पूर्णमासोपवासोऽयं मुनिराजः प्राणतं देवलोकं प्रपेदे। तत्र चन्द्रप्रभासाभिधे विमाने विपुलसमृद्धिरन्तर्मुहूर्त्तान्मिलितसकलपर्याप्तिर्विभवः सूर्यः प्रातःसन्ध्याकालमिव शय्यावरणं दूरीकृत्यैष मुनिराजस्तेजस्समूहदेदीप्यमानो देव आविरभूत्। कः पुण्यैरियं मम समृद्धिरुत्पन्नेति साश्चर्यः स देवोऽवधिज्ञानविदितं पूर्वजन्मान्वमोदत। तत्समये तद्विमानपरिजनो देवसमूहः स्फारस्फुरज्जयजयशब्दस्तदग्रे महोत्सवांश्चकार। हे प्रभो ! त्वं पुण्ययोगैरस्माकमनाथानां स्वामी प्रकल्पितोऽसि, त्वं चिरञ्जीव ! चिरञ्जीव ! सेवकानस्मान् रक्ष ! रक्ष ! इत्यादि कथयन् देवानां देवीनां च समुदायस्तं ववन्दे, तथा हर्षेण पञ्चशब्दोदयं विस्तारयामास। ततो महामाङ्गलिकविस्तारवान् स देवः पल्यङ्कादुत्थितो विहितवैक्रियस्वरूपसमृद्धिः क्रीडादीर्घिकामवाप। स देवोऽकस्मात् प्रवेशोच्छोलतरङ्गजले तद्वदनविलोकनलज्जामग्नकनककमले तत्र जलाशये स्नानमकरोत्। अथ देवकल्पानां निधानं पुस्तकं वीक्ष्य स देवो भक्त्या विमानस्थापितजिनमन्दिरस्थितं शाश्वतं जिनेश्वरमपूजयत्। अथ विमानशोभामुद्रं सिंहासनं शोभयित्वा हर्षतरङ्गमग्नेन्द्रियः स देवो दिव्यनाटकमद्राक्षीत्। मूर्त्तिमान् विलास इव स देवः कदापि क्रीडासरसीषु कदाचिन्नन्दने कानने रमणीभी रेमे। कदाचिद्देवैः सार्धं जिनयात्रासु निजहार, कदाचिद्धर्मक्षेत्रे श्रेष्ठपुरुषस्तुतीर्व्यरचयत्। भवि-

ज्ञानी सकलपापहरो गुरुः श्रीवज्रनाभो विज्ञाय तद्राजर्षिपुण्यैस्तत् स्थानं प्राप । चन्दनसिक्तस्य यथा मलयाचलवायुसङ्गमस्तथाऽनशनमानसस्य तस्य राजर्षेर्गुरुदर्शनमानन्दायाभूत् । अथानन्दोल्लाससञ्जातरोमाञ्चः स राजर्षिशिरोमणिर्गुरुचरणकमलयोः षट्पदलीलां स्वीचकार । ततोऽसौ मुनिराजोऽनशनं कृत्वा गुरुसमीपे मस्तकघटिताञ्जलिरित्यालोचनामकरोत् । चिरमव्यवहारनामराशौ निवसता मयाऽनन्तप्राणिसमूहो यत्परितापितस्तत् तान् क्षमापयामि । तथा व्यवहारनामराशौ पृथिवीशरीरवता मया लोहलोष्टपाषाणीभूय ये जीवाः परितापितास्तान् क्षमयामि । नदीसागरकूपेषु जलरूपेण मया ये केऽपि समाश्रिताः प्राणिनस्तापितास्तान् क्षमयामि । अग्निविद्युद्दावानलदीपादिमूर्त्तिना तेजःशरीरेण मया ये हतास्तान् क्षमयामि । महावृष्टितुहिनरजोदुर्गन्धसहितेन वायुशरीरेण मया ये पीडितास्तान् क्षमयामि । दण्डधनुर्बाणरथप्रभृतिवता वनस्पतिशरीरेण मयाऽत्र ये व्यथितास्तान् क्षमयामि । अथ कर्मवशात् त्रसतां प्राप्य दुर्बुद्धिना मया रागद्वेषाभिमानान्धेन ये पीडितास्तान् क्षमयामि । सर्वत्र ते प्राणिनोऽपि मामकीनमपराधं क्षमन्तां, सकलजीवेषु मम मैत्र्यमास्तां, कुत्रचिच्छत्रुता माऽस्तु । पञ्चमहाव्रतेषु यः कश्चनातीचारो मया कृतस्तत्र गुरुसाक्षिकं मम दुष्कृतं मिथ्या भवतात् ! अव्यवहाराभिधे राशावनन्तजीवसंघट्टाद्यया मम कर्मच्छिन्नं तां पीडामप्यनुमोदयामि । जिनेश्वराणां प्रतिमामन्दिरकलशमुकुटप्रभृतिषु यः पृथिवीमयो मम देहो जज्ञे तमनुमोदयामि । तथा दैववशाद्यो मम जलमयदेहो जिनेश्वरस्नानेषु पात्रेषु चोपकृतो भवेत् प्रायस्तमनुमोदयामि । यो मम तेजोमयो देहो जिनेश्वराणामग्रे धूपाङ्गारे दीपे चोपयोगी जातस्तमनुमोदयामि । अरिहन्तप्रभुसमीपे धूपोत्क्षेपे तीर्थमार्गेषु च वा परिश्रान्ते सङ्घे यन्मम वायुमयं शरीरमुपयोगि जातं तदनुमोदयामि । यतीनां पात्रदण्डेषु जिनदेवपूजनपुष्पेषु यो मम वनस्पतिमयो देहोऽभूत् तम-

# ॥ श्रीवासुपूज्यचरित्रम् ॥

## [ पञ्चमो भागः ]

[पद्यमयस्य मूलग्रन्थस्य तृतीयः सर्गः प्रारभ्यते]

इतश्चासंख्यमहासागरद्वीपसमूहपरिवेष्टितो रत्नमयजम्बूवृक्षलाञ्छनो जम्बूद्वीपनामा द्वीपोऽस्ति। यत्र जम्बूद्वीपे समन्ततः स्फुरन्तौ द्वौ सूर्यौ द्वौ चन्द्रौ च धारयंश्चतुर्यामिकयानिव कनकाचलो मेरू राजते। धर्मपालनकार्ये बुद्धिमान् वीर इव यो जम्बूद्वीपः सदा मध्यस्थितमेरुपर्वतमणिदण्डवर्ती विजयपङ्क्तिं फलक( 'ढाल' इति भाषायाम् ) वद्धार। कुग्राहः प्रकटक्षारो जलमूर्तिर्मलिनो लवणसमुद्रो येन जम्बूद्वीपेन बहिष्कृतो वसुधायां लुठन् महाशब्दं करोति। तत्र द्वीपे भारतं नाम क्षेत्रमस्ति, यत् क्षेत्रं पक्षिप्रशरीराजीवान् गोप्तुं षण्मन्त्रमण्डलानीव षट् पृथिवीखण्डानि धारयति। पृथिवीरमणीललाटस्थलशोभायितस्पर्शे यत्र भारते क्षेत्रे श्रीखण्डचन्दनलेखेव रूप्यमयो वैताढ्यपर्वतो भाति। इह भरतक्षेत्रे गजसमूहमदार्द्रीभूतपृथिवीतला सम्पत्तिरचितनाकलोककम्पा चम्पाभिधाना नगर्यस्ति। यस्यां पुरि कृतपापगरलग्रासा जिनेश्वराणां प्रासादाः पताकारसनाग्रैश्चन्द्रं यथेच्छमास्वादयन्तीव। यस्यां पुरि निरुपमोऽपि मनुष्यो मणिघटितदेवस्थलवसुधासु निजैरेव प्रतिबिम्बितैः सोपमानोऽभवत्। धर्मक्षेत्रे यत्र पुरि परस्पररूपनिलोकनान्निर्निमेषा दम्पतीसमूहा समागताः स्वर्गपौरा इव रेजुः। यत्र नगर्यां सज्जनानां मोक्षमार्गविलोकनेऽत्युच्चैर्जिन-

ष्यत्तीर्थङ्करभावसमुत्पन्नैराश्चर्यकरैः शरीरकिरणैरिन्द्रानपि जयन् स देवो जिनेश्वरमहोत्सवेषु जगाम। इत्थं प्रतिक्षणं विरचित-देवकार्यः सततोत्सवैरानन्दमयो भृशमप्रमत्तश्चपलमस्तकदेवसमूहश्रवणप्रेङ्खाकेलिसुखः स्फुरितमनोहरचरित्रयशाः समीपतीर्थङ्करभाव-समृद्धिषु लोभं कुर्वन् समीपापतच्च्यवनसमयशोकेनाप्यचान्तो महामहिमशाल्यसौ देव आह्लादनकान्तौ तत्र विमाने रसमयं कालं गमयामास। इति ॥

॥ इति श्रीवर्द्धमानसूरिकृतस्य पद्यमयस्य वासुपूज्यचरित्रस्य संस्कृतगद्यानुवादे
चतुर्थो भागः समाप्तिमफाणीत् ॥ श्रीरस्तु ॥

[पद्यमयस्य मूलग्रन्थस्य द्वितीयः सर्गः समाप्तः]

छायाऽपि ध्रुवं मध्याह्नकाल आलवालजलशीतलं मूलं जगाम। सूर्यतापतप्तः शान्तये यः सेव्यः स पवनोऽपि तप्तो वाति स्म, इति ध्राभयः स वसुपूज्यः शीतलश्वासप्रियतमासक्तिं न तत्याज। ततश्च तत्समये मुक्तोत्पत्तिमयो जलकणो जलदाच्छुक्तिमिव स पद्मोत्तरदेवः सागरोपमविंशतिमायुः पूरयित्वा प्राणताख्यदेवलोकाज्ज्येष्ठे शुक्लनवम्यां शतभिषर्क्षे गते चन्द्रे जयाजठरमभजत्। तत्समयेऽत्यन्ताश्चर्यकारिसम्भूतकाञ्चनभित्तिमनोहरे, नीलपाषाणस्तम्भघटितरत्नपाञ्चालिकाशोभिते, वर्तुलविशदमुक्तावचूलितवितानमनोज्ञे, अनल्पतेजस्विमाणिक्यदीपनाशितान्धकारे, विकसितमल्लिकाकुसुमसमूहसुगन्धिसम्पत्तौ, दह्यमानाढ्यमृगनाभिघनसारागुरुधूपने, कान्तितिरस्कृतशक्रतुविमाने निवासगृहे दुकूलास्तीर्णसत्तूलानुपमपल्यङ्कसंश्रया सकलसौख्यमयस्तोकनिद्रामुद्रितेक्षणा जयादेवी प्रकाशेनातिशुभानद्राक्षीत्। हे देवि ! अयं तावकस्तनयो मम प्रभोरिन्द्रस्य सेवनीयो भविष्यतीति कथयितुमिवागच्छन्तमैरावतं गजं सा ददर्श। हे देवि ! तव तनयो महत् पृथिवीभारवहो भविष्यतीति साक्षात् पुरःस्थितमिव वृषभं जयादेवी ददर्श। अथ तव नन्दनो महच्छत्रुमत्तगजं हनिष्यतीति विज्ञापकमिव पञ्चाननं सुवदना जयाऽद्राक्षीत्। हे देवि ! तव नन्दनमाश्रिताया मम नाशकल्यदूषणं गमिष्यतीति विज्ञापयितुं प्राप्तामिव लक्ष्मीमद्राक्षीत्। हे देवि ! तव तनयो महत् सत्कीर्त्तिसौरभो भविष्यतीति कथयन्तीं पुष्पमालां सा जयादेवी पुरो ददर्श। हे देवि ! तव तनयाननसादृश्यं मम विद्वद्भिर्दीयिष्यत इति कथयितुमागतमिव पूर्णचन्द्रमियं जया ददर्श। हे देवि ! यथाऽहं तथा तव नन्दनो मोहमयीं विभावरीं हनिष्यतीति विज्ञापयितुं स्थितमिव सूर्यमद्राक्षीदिति मन्ये। हे देवि ! मामिवामुं निजतनयं कुले ध्वजं जानीहीति कथयितुमिव पुरःस्थं ध्वजमेषा ददर्श। हे देवि ! महत् तव नन्दनो ज्ञानादिरत्नानां स्थानं भविष्यतीत्याख्यातुमिवागतं निधिकलशं संक्षिप्त। हे देवि ! मद्वदेव तव कुमारो विश्व-

मन्दिरैरग्रे धृता मोहान्धकारविनाशका दीपा इव रत्नघटाः शुशुभिरे। तत्र पुरीक्ष्वाकुवंशकमलशोभासञ्जीवनौषधं प्रतापे सूर्य इव वसुपूज्यनामा राजाऽभवत्। यस्य राज्ञः प्रतापेन शोपिताः शत्रूणां पराक्रमलता भ्रष्टैः पत्रैरिव कृपाणैः संग्रामकाननमपूरयन्। अहो! यस्य भूभुजो दानलक्ष्मीः कामधेनुदुग्धप्रक्षालिते कल्पवृक्षपुष्पाच्छादिते चिन्तामणिशिलातले नृत्यतीव। सततं समन्तत एधमानस्य यदीयधर्मस्य जिनमन्दिरशोभाः स्वध्वजाञ्चलैरावरणानि विस्तारयन्ति स्म। संग्रामधूलिभ्यो निस्सृतां, याचकहर्षाश्रुभिः स्नातां, निजयशःप्रियां यो राजा जिनमन्दिरधूपनधूमैरधूपयत्। राज्ञस्तस्य स्वर्गकामिनीविजयशालिनी जयाऽभिधाना प्रधानमहिषी बभूव, यस्या मुखचन्द्रस्य कान्त्या जितमिव बहिर्हास्यं नासीत्। ध्रुवं त्रिभुवनकामिनीजयलब्धवैजयन्तीत्रयसदृशं रेखात्रयं कम्बुकण्ठ्यास्तस्याः कण्ठो दधार। अङ्गुलीनवपलाशशोभि नखकिरणपुष्पमण्डितं यस्या भुजलतायुगलं महीपनयनषट्पदैरसेवि। मम नीचस्थेऽपि नितम्बे काञ्चीपट्टोऽस्ति, मयि नेति दुःखित इव तस्या मध्यभागः कृशोऽभवत्। मरालो वारिजे एव यस्याश्चरणौ यन्नासेवत तत्र गमननिर्जयत्रपैव कारणं विद्मः। अन्तःपुरे सत्यपि पृथिवीकान्तमनस्तस्यां चिक्रीड, यथा लक्षतारासमूहे दृष्टेऽपि नयनं हिमांशुबिम्बे व्रजति।

अथैकदा तस्य मेदिनीजानेः प्रतापं सेवितुमिव महातापशाली ग्रीष्मर्तुरत्युग्रताप्राप्तये समागच्छत। निखिलामपि विभावरीं हेलया कवलीकृत्य वासरसमूहो निजाद्वैतं विरचितुमिवैधाश्चक्रे। स्वशत्रोर्वासरमणेः प्रतापाधिक्यं विलोक्य दुःखादिव रात्रयो भृशं कृशीभावं सेवन्ते स्म। सरोवरनदीजलशोषे सन्तोषेणेव कूपगानि जलानि जगदुपकारसाम्राज्यात् शीतलत्वमभजन्। यतो ग्रीष्मन्तौ सूर्यस्य भानवो नियतं पृथिवीतलाज्जलमाकर्षन्ति यत्सङ्गाच्छरीरिणां शरीराणि नीरैराद्राणि भवन्ति। चण्डांशुतापेन तप्ता वृक्षाणां

न्दनीयाऽसि, यस्या जठरे भुवनपतिः समागतः, यत्र कल्पवृक्षः समुपजायते सा वनभूमिरपि वन्दनीया। हे देवि! कामिनीषु त्वमेव प्रशंसनीयाऽसि या जिनेश्वरस्य माता, दिक्षु पूर्वैव प्रशस्यते यस्यां दिशि सूर्य उदयते। इति जिनं तन्मातरं च स्तुत्वा भक्तिपूर्वकं चाभिवन्द्य कुसुममनोहरसुगन्धजलवृष्टिवितितमनोज्ञाः सर्वे देवराजा नन्दीश्वरद्वीपेऽष्टाह्निकोत्सवं विधाय स्पष्टं स्वं धन्यं मन्यमानाः स्वर्गं ययुः। स्वधेषु देवेश्वरेषु चाप्यागत्यातृप्त इव सूर्यः पुनरप्युदयन्व्याजात् प्रभोः कल्याणकमहोत्सवे समागतः। तीर्थङ्कर-अन्तरज्ञान्धकारविनाशकं तीर्थङ्करप्रभुमवतीर्णं वीक्ष्य बाह्यमप्यन्धकारं दूरी चकार, पापाः क्कु शङ्कारहिताः सन्ति ?। ज्ञानत्रयवति प्रभोः प्रथमं कल्याणकमहोत्सवं विदित्वेव कमलिन्यो भ्रमरशब्दैर्गायन्ति स्म, वायुनान्दोलितैः पत्रैर्नृत्यन्ति स्म च। प्रभाववतीर्णे मोक्षद्वारोद्घाटनसूचकाः सर्वतो धर्मस्थानेषु कपाटा उद्घटन्ते स्म। त्रिभुवनैकप्रदीपसदृशेऽस्मिन् प्रभाववतीर्णे सति त्रपयेव गेहप्रदीपा विच्छाया अभूवन्। प्रभो-प्रभाववतीर्णे गुणिन्योऽपि वयं दोषाकरेच्छा इति त्रपया कुमुदिन्यः संन्यमीलन्। र्धर्मदेशना सुधावृष्टिकरी भविष्यतीति पूर्वमेव चक्रवाकपक्षिणां वियोगकृशानुः क्षीणोऽभूत्। अथ कृतप्रभातकालीनक्रियः श्रीव-सुपूज्यो महीजानिः सूर्यो यथाकाशं शोभयति तथा सभाप्रदेशं शोभयामास। इन्द्रकृतोत्सवैर्जिनेशितुरवतारं विदन्नपि वारंवारं कृता वार्ता परं प्रियाया मुदे भवेदिति विचार्य राजा शीघ्रमानीय सम्मान्य स्थापितैः स्वप्नविचक्षणैः स्पष्टविलोकितांश्चतुर्दश स्वप्नानवर्णयत्। अथैते मनीषिणः प्रसिद्धान् स्वप्नग्रन्थानवलोक्य चिरं परस्परं सम्पूर्णं विचार्य सञ्जातपुलका अवोचन्। हे स्वामिन्! एषु स्वप्नेष्वेकैकमपि स्वप्नं या काऽपि नारी पश्यति सा न्यायवन्तं राजानं नन्दनं जनयति। हे नृप! एतेषु स्वप्न-चतुष्टयं या नारी तु पश्यति सा शत्रूणामसदृशशल्यतुल्यं बलभद्रं प्रसूते। हे राजशिरोमणे! या पुनरेतेषु सप्त स्वप्नान् वीक्षते

तृष्णां छेत्स्यतीति गदितुमिव पुरःस्थं पद्मसरो ददर्श सेति शङ्के। हे देवि! अहमिव तव पुत्रो गम्भीरो भविष्यतीति खलु कथयितुमिवायातं महासागरं सा राजप्रिया ददर्श। हे देवि! अहमिवैष तव सूनुर्भाग्यरहितैर्जीवैर्दुर्लभो भविष्यतीति कथयितुमिवागतं विमानं सा जया देवी ददर्श। हे देवि! मद्वदेष तव नन्दतो भुवं जगदलङ्कारो भविष्यतीति शंसितुमिव प्राप्तं रत्नस्थालं साऽद्राक्षीत्। अहमिव तव तनयस्य ध्यानं कर्मेन्धनानि धक्ष्यतीति गदितुमिव पुरस्थं धूमरहितं वह्निं सा ददर्श। एवमसौ जयादेवी तत्समये उन्मेषान्तरितेषु स्वप्नेषु वदने प्रविशन्ति चतुर्दशवस्तून्यैक्षत। अथ निद्रापर्यन्ते शीघ्रमियं पल्यङ्कादुत्थिता तथा बुद्धिमती सा स्वामिनो मनोज्ञवचसां प्रपञ्चनं चकार। अथ प्रेमवति वसुधापतौ समुत्पन्नजागरे सा जयादेवी स्पष्टतयालोकितांश्चतुर्दश स्वप्नान् कथयामास। ततो धराधवोऽत्यन्तहर्षसन्दर्भगर्भं व्याजहार–हे देवि! एभिः स्वप्नैस्तव दिव्यस्तनयो भविष्यति। अत्रान्तरे मनोहरवाद्योत्तमध्वनिर्वितस्तार मङ्गलपाठकाश्चेमं मनोज्ञं श्लोकं पेठुः।

**"पूर्वादिचूडागर्भस्थो जगत्त्रियपावनः। भास्वानेष भुवो भर्त्ता भवतात् तव नन्दनः" ॥१॥**

इत्थं समयोचितं श्लोकं निशम्य द्विगुणां मुदं धारयन्ती वसुधापतिकान्ता जयादेवी शकुनग्रन्थिं बबन्ध। हे श्रेष्ठगर्भशोभिते! धन्ये! देवि! प्रासादं सुशोभय! इति भूभुजा विहितादेशा जयादेवी शुद्धान्तमगच्छत्। तस्मिन्नेव क्षणे संजातविष्टरकम्पनप्रेरिता द्वात्रिंशदिन्द्रा अवधिज्ञानतः प्रभोराद्यं कल्याणकं विदित्वा वसुपूज्यस्य सद्मनि समागत्य गर्भगतस्य श्रीजिनेश्वरस्य स्तवनं चक्रुः। हे त्रिभुवनपते! हे ज्ञानत्रितयस्थानरूप! भगवन्! जय! जय! मेघमध्यस्थो भास्वानिव गर्भगतोऽपि त्वं सज्जनानां हर्षयासि। हे त्रिभुवनतारक! संसारसागरस्य परं पारमिवान्त्यं गर्भमाश्रितस्त्वं कस्याश्रयणीयो नासि?। हे जयादेवि! त्वं जय! यतोऽभिव-

लादि विपुलं पारितोषिकं ददौ। अथ धराधवो यथोचितं समाजनं विसृज्य हर्षेण श्रीजयादेव्या सहितं शुद्धान्तमगच्छत्। अथ जयादेव्या स्वयमुत्थाय गञ्जितमासनं महीजानिः शोभयाञ्चकार। ततः सापि जयादेवी स्वामिन आज्ञया तत्रोपाविशत्। समुत्पन्नप्रमोदः स राजा रोमाञ्चितशरीराया देव्या अग्रे दैवज्ञकथितानि स्वप्नफलान्यकथयत्। हे नाथ! इदं ते जल्पितं वचनं सत्यं भवत्विति कथयित्वा पद्मलोचना सा जयादेवी पाणी मुकुटीचकार। इत्थं दम्पत्योस्तनयाश्रितैः प्रेमकथितैः समयकलामानाः सौख्यमया दिवसाः शीघ्रं जग्मुः। तत्समये गर्भस्याद्भुतमाहात्म्यात् तस्या जयादेव्याः शरीरे तथा द्रङ्गे क्वचिन्मानसीचिन्तारोगभयपीडा न बभूवुः। प्रभोः प्रभावात् तस्याः सौधस्याङ्गणमादराच्छ्रेष्ठभक्तिमत्यः पवनकुमार्यो मार्जयांचक्रिरे। पुनरिह नीरदकुमार्यस्तदङ्गणं सुगन्धिजलैरभ्यपिञ्चन्। ऋतुदेव्यश्च हर्षेण कुसुमसमूहानवाकिरन्। पुनर्व्यन्तर्यः सेविन्य इव तस्याः शरीरशुश्रूषां व्यधुः ज्योतिष्कप्रमदा रत्नमयं दर्पणमदर्शयन्। विद्याधरपत्न्यो मनोहरां क्रीडां कारयाञ्चक्रिरे। किन्नरयोषितो यथेच्छं गीतिगीर्ति विस्तारयामासुः। इयं श्रीअरिहन्तप्रभोर्जननी मामकीनैस्तापैर्माक्लिश्यतामिति विचिन्त्य तत्समये सूर्यो मेघमालासमूहान्तरितोऽस्फुरत्। श्रीजिनेश्वरस्य जन्माभिषेकान्मम पवित्रता निकटवर्त्तिनीति हर्षादिव तत्समये महासागरस्य जलमूर्मिनृत्यन्। जिनेश्वरे गासरमणाचुदेष्यति तदा जगति कुसुमितैः पाटलोद्यानैररुणोदयो बभूव। जिनेश्वरमातुश्चरणस्पर्शात् पवित्रमानिनी वसुन्धरा वात्यावर्त्तधूलिच्छलादुत्करेव ननर्त्त। मालतीस्थषट्पदैर्गायन्तं ग्रीष्ममर्त्तुं तिरस्कृत्य वर्षर्त्तुः प्रभोर्जनन्या हर्षाय नीरदमृदङ्गसमूहमवादयत्। असौ जयादेवी यादृक्तेजस्विधारिणी तादृशी नाहमिति विचार्येव ध्रुवं गगनं सौदामिनीभिर्जयादेव्या आरात्रिकमिव व्यधात्। वृष्टिसिञ्चिता वसुन्धराऽपि नियतं सुगन्धिभिर्बाष्पैः पुरुपरलगर्भवत्या जयादेव्या धूपधूममुदक्षिपत्।

साऽर्धभरतक्षेत्रस्य भोक्तारं श्रेष्ठं तनयं प्रसूते। हे प्रभो! एतांश्चतुर्दशापि स्वप्नान् या किञ्चिदप्रकटान् पश्येत् सा रमणी चक्रवर्त्तिनं तनयं जनयति। हे नाथ! इयं जयादेवी पुनरेतान् प्रकटानेव स्वप्नानद्राक्षीत् तत् सा देवी त्रिभुवनपतिं जिनं जनयिष्यति। इयं जयादेवी यच्चतुर्दशनं शुभवदनं गजमपश्यत् तदस्यास्तनयश्चतुर्विधनिर्मलधर्मोपदेष्टा भविष्यति। वृषभस्य विलोकनादस्मिन् भारते क्षेत्रे जयादेव्या नन्दनो बोधिबीजवपनकारणतां गमिष्यति। केशरिनिरीक्षणाद्देव्यास्तनयो दुष्कर्मगजैर्भज्यमानान् भव्यजीवरूपवनस्पतीन् रक्षिष्यति। पुनः साभिषेकलक्ष्मीमार्गणादेतस्यास्तनयः सांवत्सरं दानं ददानो लक्ष्मीं पावनीं विधास्यति। पुष्पमालानिरीक्षणादेतस्या नन्दनः सदा देवदानवमनुष्यपतिभिर्मस्तके गृहीतचरणो भविष्यति। पूर्णहिमांशुमार्गणान्नयनानन्दो रागरहितात्मा देव्यास्तनयः सततं भूमण्डले हर्षं दास्यते। सूर्यमण्डलनिरीक्षणादस्या नन्दनः सूर्यमण्डलसदृशसकलभामण्डलालङ्कारो भविष्यति। ध्वजस्य दर्शनाद् देव्या नन्दनः स्वाग्रे विस्तार्यमाणदिव्यधर्मध्वजलक्ष्म्या निजं प्रभुत्वं विस्तारयिष्यति। कलशस्य निरीक्षणादस्याः सुचारित्रवान् पुत्र उच्चोज्ज्वलसद्धर्मप्रासादशिखरे स्वस्थितिं करिष्यति। पद्मसरोवरविलोकनादस्यास्तनयो देवसञ्चारितकनककमलनिहितचरणो विहरिष्यति। क्षीरसागरमार्गणाद्देव्या नन्दनो गाम्भीर्यगुणः केवलज्ञानरत्नस्य स्थानमरिहन्तृतीर्थङ्करो भविष्यति। पुनर्विमाननिरीक्षणाज्जयादेव्या नन्दनो वैमानिकनिकायानां स्वर्गादवतरणनिमित्तं भविष्यति। तथा रत्नसमूहविलोकनादस्या नन्दनो मनोहररत्नप्राकारगर्भसद्धर्मोपदेशकर्त्ता भविष्यति। पुनश्च दीप्यमानकृशानुविलोकनादस्यास्तनयो भव्यजनात्मकल्याणशुद्धिकरणनिमित्तं भविष्यति। जयादेव्या यच्चतुर्दश स्वप्ना निभालितास्तत् तत्सुतश्चतुर्दशरज्ज्वात्मलोकाग्रं पदं लप्स्यते। एवं तन्मनोहरं श्रवणपीयूषं वचनमाकर्ण्य भूपस्तेभ्यः स्वप्नपाठकेभ्यः पट्टवस्त्रताम्बू-

त्यजत् । जिनेश्वरजन्मप्रभावतोऽन्तर्भुवनमीतिमुक्तं सहस्रगुणितैः फलैरभिव्यासं शस्यमभूत् । देवाङ्गना गोपीरूपाण्यादाय शालिक्षेत्रेषु गोपीसमूहं तीर्थङ्करगुणगीतान्यशिक्षयन् । गर्भस्थितवासरनायका शारदी नीरदपङ्क्तिरिव प्रभुगर्भवती जयादेवी पाण्डुप्रभाऽपि निस्मयजनकशोभा शुशुभे । तीर्थङ्करमुखशोभादासभावः साम्प्रतं मम प्राप्तो भवतीतीव हिमांशुर्विशदत्वातिशयं धारयामास । त्रिभुवनालङ्कारेण तनयेन सुशोभिताऽस्मि, तदेभिराभूषणैः किमितीव सा जयादेवी भूषणान्यलपीचकार । अस्मिन् प्रभौ गर्भावतीर्णे कुबेर इन्द्रस्याज्ञया श्रेष्ठरत्नकनकरत्नैर्महीपगृहं पूरयामास । अथ जयादेव्या महागर्भोष्मशान्तये कमलानि ढौकयन् हेमन्तर्तुः समुपागमदिति मन्ये । अत्र मामकीनः शत्रुरर्हन्नागमिष्यतीति भयेन शरीरिणां हृदयेभ्यः केसरविलेपनव्याजाद्रागो बहिरभूत् । तत्समये रात्रयो महामहिमपात्रं समजायन्त, श्रीतीर्थङ्करप्रभौ जयादेवीगर्भं गते प्रमदाजातेर्महत्त्वमुचितम् । जिनेश्वरस्वर्गालोके वासरान् गुरून् भाविनो विदित्वा त्रपयेव दिवसनायको दिवसॉल्लघूचकार । श्रीजिनेश्वरप्रभोर्जन्माभिषेकावसरे प्राप्ते, धिग्धिक्! अधस्तरं मां देवा न स्वीकरिष्यन्तीति कूपोदरे जलं तापमलभत । अथ मयि भुवनपतेर्जन्मभवितेति मदोद्धतः शिशिरर्तुरिव कुन्दकुसुमदन्तः सकलानृतूञ्जहास । प्रभुकान्तिसागरः साम्प्रतमागमिष्यतीति भक्तित इव विनयवद्भिर्नक्षत्रचन्द्रसूर्यैश्छिन्नाल्पत्वं विस्तार्यते स्म । इह वसुधातले तीर्थङ्करचरणेष्ववतीर्णेष्वस्माकं शोभा का? इति कमलैः पूर्वमेव नष्टत्वमाप्तम् । लोको यदा तीर्थङ्करवचनपीयूषं पास्यति तदा मम का गतिः? इति ध्यानादिव हिमालये जलं स्तम्भमलभत । जिनेश्वरजन्ममहोत्सवे देवाः कल्पवृक्षपत्रैस्तोरणमालां करिष्यन्तीति शुचा वृक्षपत्रैः पृथिव्यामपाति । वृद्धप्रमदालोकैर्देव्या रक्षासु क्रियमाणासु तत्समये सार्धाष्टमवासरा नव मासा व्यतीयुः । अथ फाल्गुने मासे शुभे कृष्णे दले चतुर्दश्यां मध्यरात्रे हिमांशौ शतभिषर्क्षगते रोह-

सागरतरङ्गाणामुच्चैः कोलाहलं निवार्य दिशो मयूराणां केकाशब्दैर्जयादेवीं स्तुवन्ति स्म। मेघैः सागराद् हृत्वाऽऽनीतं जलं धर्मज्ञा पृथिवी नदीप्रवाहैर्न्यार्घुच्येव स्वस्वामिप्रत्यासत्त्येवार्पयत्। त्रिभुवननायके प्रभावेष्यति जातिकदम्बनूतनकेतकैः कुसुमैः षट्पदागीतैस्त्रिधोत्सवो विहितः। तत्समये तापशमनप्रसन्नाया जयादेव्या हृदये तादृशतनययोग्या हर्षेण वद्धमित्रभावा दोहदा अभूवन्। जगत्त्रयस्यापि पतय आगत्य मां प्रणमन्तु! तथा भुवनानन्दाय दरिद्रतानाशस्यादि कारणं दानमदात्। धर्मविशदाचरणेषु वात्सल्यतः सुखं विदधामि तथा भुवनत्रयभयसमूहविनाशं स्वीकरोमि। इति तस्या एषु दोहदेषु शक्रेण पूर्यमाणेषु जयादेव्याः स गर्भः क्रमश आनन्देन सहैधाश्चक्रे। मध्यभागप्रकटभूते दीपके यथाऽभ्रकनिर्मितगृहं, मध्यस्थिते चूडामणौ यथा प्रमदाया निर्मलवस्त्रं, अभिप्राये हृदये स्फुरति यथा सुकवीनां वचन तथा देवे गर्भं गते जयादेव्याः शरीरमधिकं बभौ, सन्तोषमात्रस्वभावस्य प्रभोः संसर्गेणेवासौ जयादेवी मधुरेऽप्याहारेऽत्यासक्तिं न विस्तारयामास। रोमच्छिद्रैर्निर्गच्छन्त्या हर्षहास्यशोभयेव तस्य देव्याः कपोलौ विशदां कलां कलयामासतुः। जयादेव्यास्तनयत्वमाप्तोऽपि भुवनत्रयपतिर्निजाङ्गुष्ठपीयूषपानकारी, न चावयोः पानकारक इत्यस्या देव्याः कुचौ कृष्णवदनौ बभूवतुः। जगदैश्वर्येऽप्यनौद्धत्यजुषो नन्दनस्य गुणादिव गुप्तगर्भाया जयादेव्या जठरमौद्धत्यं न दधार। मदीयस्तनयो दयालुस्तत्पृथिव्याः खेदो मा भवतु! इति गर्भभारालसगमनासौ देवी शनैःशनैश्चचाल। अथ जयादेव्याः सीमन्तोन्नयनमहोत्सवे प्रवृत्ते मनोहरशब्दकृन्मरालमञ्जीरा नृत्यतीव शरदृतुराजगाम। भाविनि जिनेश्वरजन्माभिषेके देवा अस्मान् गृह्णन्त्विति विचिन्त्य जलानि विशदीभूय कमलैरात्मानं सुगन्धयामासुः। जिनेश्वरजन्मोत्सवाय देवैः सज्जीकृता वन्दनमालिका इव गगने शुकानां श्रेणयो विलेसुः। जिनेश्वरजनन्या हर्षाय भुवनं शान्ततापं विधायोच्चैरुदश्वत्सुकृता इव नीरदाः कृष्णत्वम-

आजग्मुः, ताश्च यथा- समाहारा, सुप्रदत्ता, सुप्रबुद्धा, यशोधरा, लक्ष्मीवती, शेषवती, चित्रगुप्ता, वसुन्धरा चेति। एताः कुमार्यस्तीर्थङ्करं तीर्थङ्करजननीं चापि प्रणम्य मनोहरगीतकलाकुशला दक्षिणस्यां दिशि तस्थुः। आसनप्रकम्पात् पश्चिमरुचकादष्टौ दिक्कुमारिका व्यजनसमूहविभूषितहस्तकमला आजग्मुः। तासां नामानि यथा—इलादेवी, सुरादेवी, पद्मवती, एकनासा, नवमिका, भद्रा, शीता चेति। मातृसमन्वितं त्रिभुवनपूजितं जिनेश्वरं प्रणम्य प्रसन्ना गीतपीयूषमुचः पश्चिमायां दिशि तस्थुः। उत्तररुचकादासनप्रकम्पेनाष्टौ दिक्कुमार्यश्चचामरमनोहराः समागताः। ताश्च यथा- अलम्बुसा, सुकेशी, पुण्डरीका, वारुणी, हासा, सर्वप्रभा, श्रीः, ह्रीः, इति तासां नामानि। विपुलभक्तिसमूहास्ताः कुमार्यो जनन्या सहितं प्रभुमभिवाद्य मनोहरविशालगीतय उत्तरस्यां दिशि स्थिताः। आसनप्रकम्पात् सुतारा, चित्रकनका, चित्रा, सौत्रामणीति चतस्रो दिक्कुमार्यो विदिग्भ्यः समागताः। ताः कन्याः प्रभुं तज्जननीं चापि प्रणम्य प्रकटप्रदीपहस्ता गीतपीयूषधारिण्य ऐशान्यादिषु विदिक्षु स्थिताः। पुनरासनकम्पान्मध्यरुचकाद् रूपा, रूपासिका, सुरूपा, रूपवती, चेति चतस्रो दिक्कुमार्योऽप्यागताः। ता बालस्य प्रभोश्चतुरङ्गुलवर्जितं नालं छित्वा रत्नसहितं पृथिव्यां निखन्यात्र दुर्वामरोपयन्। मूलगृहात् पूर्वदक्षिणोत्तरदिक्षु चतुःशालासिंहासनवतस्त्रीन् रम्भागृहांस्ताश्चक्रिरे। ततो दक्षिणचतुःशालसिंहासने ता देव्या जिनेश्वरस्य च दिव्यैस्तैलोद्वर्तनकैर्मर्दनोद्वर्तने चक्रिरे। ततः पूर्वचतुःशालसिंहासने ता उभौ संस्नप्य संमार्ज्य दिव्यचन्दनैर्लिप्त्वा वस्त्रालङ्कारैरभूषयन्। उत्तरचतुःशाले समागत्य मथितारणिकाष्ठकृशानुना हुतैर्हिमालयाद् हृतैर्गोशीर्षचन्दनैः प्रकटभक्तिविधौ निपुणास्ताः श्रेष्ठासनोपविष्टयोस्तयोः शान्तिकमाधाय रक्षापोट्टलिकां बबन्धुः। हे प्रभो! पर्वतसदृशायुष्मान् भव! इति

णभूमी रत्नमिव जयादेवी सोरुस्थमहिषलाञ्छनं नूतनकमलकान्ति भुवनालङ्कारं जिनेश्वरमजीजनत्। तत्समये नारकभूमिष्वपि प्रकाशोऽभूत् सकलानां नारकाणामपि क्षणं सुखं समुत्पन्नम्। सकलगुणरत्नाकरोऽयमस्माकं प्रभुः प्रादुरभूदित्यानन्दवशेनेव दिशः प्रसादमलभन्त। भुवनपतेः सद्भक्तिं विस्तारयन्त इव प्रदक्षिणावर्त्ताः पुष्पलक्ष्मीविमिश्रिताः पवना ववुः। भुवनेषु प्रभोर्जननमहोत्सवं कथयितुमिव मेघगम्भीरनादा दुन्दुभय आकाशे नेदुः। प्रभुचरणकमलस्पर्शपावनं वसुधातलं पूजयद्भिरिव देवैः कुसुमवृष्टयश्चक्रिरे। विष्टरप्रकम्पेनावधिज्ञानतः प्रभोर्जन्म विज्ञायाधोलोकवासिन्योऽष्ट दिक्कुमारिकाः समाजग्मुः। भोगङ्करा, भोगवती, सुभोगा, भोगमालिनी, तोयधारा, विचित्रा, पुष्पमाला, अनिन्दिता चेत्येताः कुमारिका जयादेवीं नत्वा स्तुत्वा च न भेतव्यमिति कथयित्वा जिनेश्वरजननमहोत्सवं निजागमने कारणं जगदुः। ता ऐशान्यां दिशि सहस्रस्तम्भं प्राङ्मुखं वायुपवित्रयोजनवसुधातलं सूतिकागृहं विस्तारयामासुः। हे देवि! त्वं धन्याऽसि, यस्या नन्दनो भुवनत्रयगुरुरित्यादिगीतगायिन्यस्ताः प्रभोः समन्ततस्तस्थुः। आसनप्रकम्पात् प्रभोर्जन्म विज्ञाय मेरुनिवासिन्यः प्रसन्ना अष्टौ दिक्कुमारिका ऊर्ध्वलोकादिहाजग्मुः। ताश्च यथा–मेघङ्करा, मेघवती, सुमेघा, मेघमालिनी, सुवत्सा, वत्समित्रा, वारिषेणा, बलाहका चेमा जिनं जयादेवीं च प्रणम्य योजनविस्तारवतीं वसुधां सुगन्धिजलैः सिक्त्वा कुसुमवृष्टिं चक्रिरे। पीठप्रकम्पेन जिनेश्वरस्य जननं मत्वा पूर्वदिक्स्थरुचकद्वीपादष्टौ दिक्कुमारीका आययुः। ताश्च यथा– नन्दा, उत्तरानन्दा, आनन्दा, आनन्दवर्धना, विजया, वैजयन्ती, जयन्ती, अपराजिता च। एताः कुमार्यः प्राच्यां दिशि स्थित्वा जननीसहितं जिनेश्वरं प्रणम्य प्रसन्नमानसा भुवनरम्याणि गीतानि जगुः। तत आसनप्रकम्पेन दक्षिणरुचकाद् भृङ्गारभूषितपाणिसरोजा अष्टौ दिक्कुमार्य

जगाम। तथा पञ्चाशतवैमानिकदेवसहस्रैः महितो लान्तकशक्रः कामगवाभिधविमानमधिरूढ आजगाम। चत्वारिंशत्सहस्रवै- मानिकदेवसमन्वितः शुक्रलोकेन्द्रः प्रीतिगमनामविमानेन जिनसमीपमाययौ। तथा षट्सहस्रवैमानिकदेवैः परिवारितो मनोर- माभिधानविमानेन सहस्रारदेवलोकशक्रोऽत्राजगाम। चतुःशतैर्विमानपतिभिः सुरैः सहितो विमलनामविमानस्थ आनतप्राण- तनाकलोकेन्द्र आययौ। शतत्रयवैमानिकसुरैः परिवारित आरणाच्युतदेवलोकशतक्रतुः सर्वतोभद्रनामविमानेनेह सुमेरुगिरावा- जगाम। अथ रत्नप्रभाभिधायां पृथिव्यां बाहुल्यामध्यवासिनां भवनव्यन्तरशक्राणामासनानि न्यकम्पन्त। चमरचञ्चाख्यायां नगर्यां सुधर्माभिधसभामध्ये समासीनोऽसुरशतक्रतुः स चमरोऽवधिज्ञानाज्जिनेश्वरस्योत्पत्तिं विदित्वा लोकज्ञप्त्यै पदातिसैन्य- नायकेन द्रुमाख्येन मोघस्वरानाम्नीं घण्टामवादयत्। तिसृभिः सभाभिश्चतुर्भिर्लोकपालैः, पञ्चभिः पट्टदेवीभिः,सप्तभिश्च महासैनिकैः परिवारितः, सप्तभिः सेनापतिभिरन्यैश्चापि विपुलैरसुरैश्चतुःषष्टिसहस्रैः सामानिकमहाऽसुरैः, प्रतिदिशं शरीररक्षकाणामसुराणां चतुः- षष्टिसहस्रैस्त्रयस्त्रिंशत्प्रमाणैस्त्रायस्त्रिंशसुरैः परमसमृद्धिमान् पञ्चयोजनशतमुच्चं, मनोहरध्वजविभूषितं, पञ्चाशत्सहस्रयोजनविस्तारमभि- योगाभिधेन देवेन क्षिप्रं निर्मितं विमानमारुह्य चमरेन्द्रो भक्त्या प्रभोर्जननमहोत्सवं विधातुमभिचचाल। वर्त्मनि विमानं संकोच्य संकोच्यासुरेन्द्रः सौधर्मेन्द्र इव प्रभुसुशोभितं मेरुपर्वतमाययौ। अथ बलिचञ्चानगरीनायको बलिर्नामसुरेन्द्रो महौघस्व- राख्याया घण्टाया वादनं कारयित्वा महाद्रुमाभिधसेनापतिसमाहूतैः षष्टिसहस्रैः सामानिकदेवैस्तेभ्यश्च चतुर्गुणैः शरीररक्षकैस्त्राय- स्त्रिंशादिकैरन्यैरसुरैश्च समन्ततः परिवारितो महोत्सवाच्छ्रेष्ठविमानेन मेरुगिरिशिखरे समागतः। ततो नागदेवो धरणनामा वासवो मेघस्वराख्यघण्टावादनाद् भद्रसेनाख्येन सेनापतिना तीर्थङ्करस्य जन्म बोधितैः षड्भिः सहस्रैः सामानिकनागैस्तथा महाभ-

पुरन्दरस्तद्विमानमदीदिपत्। सौधर्मदेवलोकादुत्तरेण तिर्यग्वर्त्मनोत्तरत् तद्विमानमसंख्यद्वीपसमुद्रलङ्घनान्नन्दीश्वरं द्वीपं प्राप। तत्र द्वीपे यथा साधुलोको मानं संक्षिपति तथा शक्र आग्नेय्यां दिशि रतिकरं पर्वतं प्राप्य तद्विमानं संचिक्षेप। ततो विमानमैशान्यां दिशि त्यक्त्वा स पुरन्दरः सूतिकागृहं त्रिः प्रदक्षिणीकृत्य जननीयुतं जिनेश्वरं ववन्दे। हे मातः! तव नन्दनस्य जननोत्सवं विधातुं वयमिहागता इति शतक्रतुः शङ्काशङ्कुदूरीकरणाय देव्यै जयायै न्यवेदयत्। ततोऽसाविन्द्रो देव्या निद्रां दत्वाऽत्र प्रभोः प्रतिमां त्यक्त्वा हृदयेऽमान्तीं मुदं धर्त्तुमिव रूपपञ्चकमकरोत्। असौ देवराज एकया मूर्त्या गोशीर्षचन्दनरससुगन्धिमनोहरे पाणियुगले तीर्थङ्करं प्रभुं दधार। पुनरसौ शक्र एकया मूर्त्या छत्रं, द्वाभ्यां चामरे, एकया चाग्रे क्षिप्रप्रतीष्टं वज्रमधारयत्। अथ देवराजो विविधरूपधारिभिर्विविधकुतूहलरमणीयैर्देवैः सहितः सुमेरुपर्वतं जगाम। तत्पर्वतशिखरं दक्षिणेन पाण्डुकाभिधे विपिने निर्मलकान्तौ अतिपाण्डुकंबलायां शिलायामपूर्वप्रमोदोऽयं पूर्वदिङ्नायको दिवस्पतिः पूर्वाभिमुखो भूलोत्सङ्गसमारोपितप्रभुः स्नानसिंहासनं सिषेवे। अत्रान्तरे महाघोषाख्यघण्टानादसावधानानां विमानिनामष्टाविंशतिप्रमाणैर्लक्षैर्देवैः समन्वितः शूलधारी वृषभवाहन ईशाननायकः पुष्पकदेवेन रचिते पुष्पकाभिधे विमाने तस्थौ। तत ईशानदेवलोकाद्दक्षिणात् तिर्यङ्मार्गादुत्तीर्य नन्दीश्वरद्वीपमागत्यैशान्यां दिशि रतिकराख्ये पर्वते क्रमशो विमानं संक्षिप्य सौधर्मनायक इवेशाननायको भक्त्या सुवर्णगिरिशिखरे जिनेश्वरस्य समीपमाजगाम। द्वादशभिर्लक्षैर्वैमानिकैर्देवैः सहितः सनत्कुमाराख्य इन्द्रः सुमनोऽभिधानविमानस्थः प्रभोः समीपमाययौ। महासमृद्धिभिरष्टविमानपतिलक्षैरन्वितो माहेन्द्रनामा शक्रः श्रीवत्सनामविमानेन प्रभोरन्तिकं प्राप। चतुर्लक्षैर्वैमानिकैर्देवैर्वृतो ब्रह्मपतिनामेन्द्रो नन्द्यावर्त्ताख्यविमानस्थो जिनेश्वरसमीपमा-

णिडतं, किञ्चिद्गम्भीगमनानामन्तैरर्महाजलाशयं, काञ्चनध्वजशोभाभिर्धूतकुसुमधूलिसमूहं सौधर्मेन्द्रस्य तत् पालकाख्यं विमानं क्रीडोद्यानमिव शुशुभे। तत्र विमाने शक्रस्य मनोवचनशरीरसम्पत्तीनां सहारोढुमिव तिस्रो रत्नसोपानपङ्क्तयः शुशुभिरे। त्रिसोपानपङ्क्त्यामारोहतो देवानित्थं साञ्जलिहस्तैः प्रभुरभिवन्दनीय इति त्रिभिस्तोरणैस्तद्विमानमशिक्षयत्। तत्र पालकविमाने नानाविधकान्तिर्गोलाकारो मध्यपृथिवीप्रदेशो जिनेश्वरजननेन स्वर्गलक्ष्मीमुकुटवाञ्जम्बूद्वीप इव रराज। अस्य मध्यप्रदेशे निजनृत्यनिलोकने सम्मूर्च्छन्तरैः स्थिता देवाङ्गना इव पाञ्चालीर्धारयन्नाटकरङ्गमण्डपः शुशुभे। तत्र मण्डपे चतुर्योजनपिण्डाऽष्टयोजनदीर्घविस्तारवती कान्त्याः क्रीडापर्वततुल्या रत्नपीठिका बभूव। चपललक्ष्मीनिश्चलीकारबन्धरज्जुसदृशैः किरणैस्तदुपर्यंकं रत्नघटितं सिंहासनं बभौ। तत्सिंहासनोपर्यर्धमौक्तिकमालापङ्क्तिवृतमौक्तिकमालाधारी कुलिशाङ्कुशवान् दिव्यश्चन्द्रोदयो बभूव। मध्यासनादुत्तरैशान्यवायव्यदिक्षु चतुरशीतिसहस्रसंक्रन्दनतुल्यदेवानामासनानि दिद्युतिरे। पूर्वस्यां दिशि प्रधानदेवीनामष्ट विष्टराणि शुशुभिरे, आग्नेय्यां चाभ्यन्तरपार्षदत्रिदशानां द्वादशसहस्राण्यासनानि रेजिरे। अन्तः सभासदां देवानां दक्षिणदिग्भूषणरूपाणि चतुर्दशसहस्राणि पीठानि तत्राभूवन्। नैऋत्यां दिशि षोडशानां सहस्राणां बाह्यसभासदां नाकनिवासिनां देवानामासनश्रेणिरभवत्। पश्चिमायां दिशि च सप्तानां सेनाध्यक्षत्रिदशानां सप्तसंख्यकानि सिंहासनानि शुशुभिरे। शतक्रतोरासनं समन्ततश्चतुरशीतिसहस्राणां शरीररक्षकाणां देवानां योग्यतापूर्वकमासनान्यासन्। एवमाभियोगिकैस्त्रिदशैर्विमानं विरचय्य तत्समये वासवस्तदधिरोहणे विज्ञापयाञ्चक्रे। स्फुरद्भिः पत्रस्यन्दनैर्मरालैः कमलमिव विविधविमानपङ्क्तिशोभिभिरितरैर्नाकिलोकनिवासिभिर्वृतं तद्विमानं विस्तार्यमाणमाङ्गलिकनादः सपरिवारः शतक्रतुराश्चर्यरूपसमृद्धिं विकृत्य समारोहत्। अग्रनिहितादर्शप्रभृतिकाष्टमङ्गलो विपुलसिंहासननिषण्णः

कथयित्वा प्रभोः श्रवणसमीपे स्थितास्ताः कराभ्यां पाषाणगोलकावास्फालयांबभूवुः । ततो जिनेश्वरं जिनेश्वरमातरं च सूतिकागृहे समानीय शय्यायामाधाय गानं कुर्वन्त्यः समन्ततस्तस्थुः । तत्समये देवलोके भुवनप्रबोधनाटकैकनान्दी वादित्रनादसदृशः शाश्वतघण्टानां नादः समुत्पन्नोऽभूत् । तत्समये च मस्तककम्पैर्जिनेश्वरजननाश्चर्यवतीं पृथिवीं व्याख्यान्तीव शक्राणां पर्वतसदृशनिश्चलानि विष्टाराण्यचलन्। अथैवं मयि कः पराक्रमं दर्शयति ? इति कोपाकुलं गृहीतपविं सुधर्मेन्द्रं प्रणम्य सेनाध्यक्षो बभाषे । हे नाथ ! कुलिशं विश्रामं लभताम् ! ब्रूहि ! तव कं शत्रुं हन्मि ? इत्यस्य वचनैरवधिज्ञानदर्शनादुद्भूतसमाधिः प्रभोर्जननं विदित्वा विनाशितकोपबन्धन इन्द्रः शीघ्रं मिथ्यादुष्कृतं कृत्वा स्वसिंहासनमत्यजत् । इन्द्रः प्रभुजननदिशि सप्ताष्टौ पदानि दत्वा तथा जिनेश्वरं प्रणम्य स्तुत्वा भूयो निजासनमभूषयत्। अथ स नैगमेषिणं सेनापतिमाहूयेति समादिशत्–जिनेश्वरजन्ममहोत्सवं विधातुं त्रिदशानाकारय ! इति। अयं नैगमेषी सुघोषेतिनामतो योजनसम्मितां घण्टां विपुलस्वरं त्रीन् वारान् प्रोच्चैरवादयत् । अथैतन्नादादेकोनद्वात्रिंशल्लक्षसंख्यया विमानेषु सर्वतः प्रतिनादाः प्रादुरभूवन् । ततः क्रीडासक्ताः सकला देवाः सावधानपुरस्सरं स्थितास्तथा घण्टाध्वनौ विश्रान्ते सेनापतिरित्युद्घोषणां चकार । भो भो देवाः! भारते क्षेत्रे जिनेश्वरजननमहोत्सवे शक्रो गमिष्यति ततो यूयं दयितासहिताः शीघ्रमागच्छत ! आगच्छत ! अथ विस्तृतप्रमोदास्ते त्रिदशसमूहा जिनेश्वरजन्ममहोत्सववाञ्छया स्वस्वप्रियाभिः सहाजग्मुः । ततः पालकनामा देवः शतक्रतुनिदेशात् पञ्चयोजनशतयुच्चं पालकाभिधानं लक्षयोजनविस्तारं विमानं निर्ममे । स्तम्भैरङ्कुरितं, कूजत्क्षुद्रघण्टिकाभिः सकोकिलं, मुक्ताफलावचूलैः सत्कुसुमं, वैजयन्तीभिः सपल्लवं, घटैः फलान्वितं, रत्नकान्तिभिर्मञ्जाकटंभरं, देवाङ्गनाभिः क्रीडापर्वताढ्यं, जालसमूहैर्निकुञ्जभृत्, चञ्चलतोरणश्रेणिभिश्चञ्चलप्रेङ्खापङ्क्तिम-

जगाम। तथा पञ्चाशतवैमानिकदेवसहस्रैः सहितो लान्तकशक्रः कामगवाभिधविमानमधिरूढ आजगाम। चत्वारिंशत्सहस्रवै-
मानिकदेवसमन्वितः शुक्रलोकेन्द्रः प्रीतिगमनामविमानेन जिनसमीपमाययौ। तथा षट्सहस्रवैमानिकदेवैः परिवारितो मनोर-
माभिधानविमानेन सहस्रारदेवलोकशक्रोऽप्याजगाम। चतुःशतैर्विमानपतिभिः सुरैः सहितो विमलनामविमानस्थ आनतप्राण-
तनाकलोकेन्द्र आययौ। शतत्रयवैमानिकसुरैः परिवारित आरणाच्युतदेवलोकशतक्रतुः सर्वतोभद्रनामविमानेनेह सुमेरुगिरावा-
जगाम। अथ रत्नप्रभाभिधायां पृथिव्यां बाहुल्यामध्यवासिनां भवनव्यन्तरशक्राणामासनानि व्यकम्पन्त। चमरचञ्चाख्यायां
नगर्यां सुधर्माभिधसभामध्ये समासीनोऽसुरशतक्रतुः स चमरोऽवधिज्ञानाज्जिनेश्वरस्योत्पत्तिं विदित्वा लोकज्ञप्त्यै पदातिसैन्य-
नायकेन द्रुमाख्येन ओघस्वरानाम्नीं घण्टामवादयत्। तिसृभिः सभाभिश्चतुर्भिर्लोकपालैः, पञ्चभिः पट्टदेवीभिः,सप्तभिश्च महासैनिकैः
परिवारितः, सप्तभिः सेनापतिभिरन्यैश्चापि विपुलैरसुरैश्चतुःषष्टिसहस्रैः सामानिकमहाऽसुरैः, प्रतिदिशं शरीररक्षकाणामसुराणां चतुः-
षष्टिसहस्रैस्त्रयस्त्रिंशत्प्रमाणस्त्रायस्त्रिंशैरसुरैः परमसमृद्धिमान् पञ्चयोजनशतमुच्चं, मनोहरध्वजविभूषितं, पञ्चाशत्सहस्रयोजनविस्तारमभि-
योगाभिधेन देवेन क्षिप्रं निर्मितं विमानमारुह्य चमरेन्द्रो भक्त्या प्रभोर्जननमहोत्सवं विधातुमभिचचाल। वर्त्मनि विमानं संकोच्य
संकोच्यासुरेन्द्रः सौधर्मेन्द्र इव प्रभुसुशोभितं मेरुपर्वतमाययौ। अथ बलिचञ्चानगरीनायको बलिर्नामसुरेन्द्रो महौघस्व-
राख्याया घण्टाया वादनं कारयित्वा महाद्रुमाभिधसेनापतिसमाहूतैः षष्टिसहस्रैः सामानिकदेवैस्तेभ्यश्च चतुर्गुणैः शरीररक्षकैस्त्राय-
स्त्रिंशादिभिरन्यैरसुरैश्च समन्ततः परिवारितो महोत्सवाच्छ्रेष्ठविमानेन मेरुगिरिशिखरे समागतः। ततो नागदेवो धरणनामा वासवो
मेघस्वराख्यघण्टावादनाद् भद्रसेनाख्येन सेनापतिना तीर्थङ्करस्य जन्म बोधितैः षड्भिः सहस्रैः सामानिकनागैस्तथा महाभ-

पुरन्दरस्तद्विमानमदीदिपत्। सौधर्मदेवलोकादुत्तरेण तिर्यग्वर्त्मनोत्तरत् तद्विमानमसंख्यद्वीपसमुद्रलङ्घनान्नन्दीश्वरं द्वीपं प्राप। तत्र द्वीपे यथा साधुलोको मानं संक्षिपति तथा शक्र आग्नेय्यां दिशि रतिकरं पर्वतं प्राप्य तद्विमानं संचिक्षेप। ततो विमानमैशान्यां दिशि त्यक्त्वा स पुरन्दरः सूतिकागृहं त्रिः प्रदक्षिणीकृत्य जननीयुतं जिनेश्वरं ववन्दे। हे मातः! तव नन्दनस्य जननोत्सवं विधातुं वयमिहागता इति शतक्रतुः शङ्काशङ्कुदूरीकरणाय देव्यै जयायै न्यवेदयत्। ततोऽसाविन्द्रो देव्या निद्रां दत्वाऽत्र प्रभोः प्रतिमां त्यक्त्वा हृदयेऽमान्तीं मुदं धर्त्तुमिव रूपपञ्चकमकरोत्। असौ देवराज एकया मूर्त्त्या गोशीर्षचन्दनरससुगन्धिमनोहरे पाणियुगले तीर्थङ्करं प्रभुं दधार। पुनरसौ शक्र एकया मूर्त्त्या छत्रं, द्वाभ्यां चामरे, एकया चाग्रे क्षिप्रप्रतीष्टं वज्रमधारयत्। अथ देवराजो विविधरूपधारिभिर्विविधकुतूहलरमणीयैर्देवैः सहितः सुमेरुपर्वतं जगाम। तत्पर्वतशिखरं दक्षिणेन पाण्डुकाभिधे विपिने निर्मलकान्तौ अतिपाण्डुकंबलायां शिलायामपूर्वप्रमोदोऽयं पूर्वदिङ्नायको दिवस्पतिः पूर्वाभिमुखो भूत्वोत्सङ्गसमारोपितप्रभुः स्नानसिंहासनं सिषेवे। अत्रान्तरे महाघोषाख्यघण्टानादसावधानानां विमानिनामष्टाविंशतिप्रमाणैर्लक्षैर्देवैः समन्वितः शूलधारी वृषभवाहन ईशाननायकः पुष्पकदेवेन रचिते पुष्पकाभिधे विमाने तस्थौ। तत ईशानदेवलोकाद्दक्षिणात् तिर्यङ्मार्गादुत्तीर्य नन्दीश्वरद्वीपमागत्यैशान्यां दिशि रतिकराख्ये पर्वते क्रमशो विमानं संक्षिप्य सौधर्मनायक इवेशाननायको भक्त्या सुवर्णगिरिशिखरे जिनेश्वरस्य समीपमाजगाम। द्वादशभिर्लक्षैर्वैमानिकैर्देवैः सहितः सनत्कुमाराख्य इन्द्रः सुमनोऽभिधानविमानस्थः प्रभोः समीपमाययौ। महासमृद्धिभिरष्टविमानपतिलक्षैरन्वितो माहेन्द्रनामा शक्रः श्रीवत्सनामविमानेन प्रभोरन्तिकं प्राप। चतुर्लक्षैर्वैमानिकैर्देवैर्वृतो ब्रह्मपतिनामेन्द्रो नन्द्यावर्त्ताख्यविमानस्थो जिनेश्वरसमीपमा-

कुष्माण्डानां वासवौ पावक–पावकगतिनामानौ च पावकानां वासवौ समाययतुः। तथा ज्योतिषां सूर्य–चन्द्रनामानौ पुरन्दरौ संख्यातीतावाजग्मतुरिति शक्राणां चतुःषष्टिस्तत्समये मेरुगिरिशिखरे समाययौ।

अथाच्युतवासवेनादिष्टा देवसेवका ईशानदिशि वैक्रियेण समुद्घातेनोपक्रम्य श्रेष्ठपुद्गलानाकृष्य योजनोरुवदनान् सौवर्णान् राजतान् रात्निकानपि हेमरजतमणिस्वर्णमणिरजतमयानपि हेमरजतमणीन् मृन्मयानपि रचितान् प्रत्येकमष्टोत्तरसहस्रसंख्यकान् घटान्निर्ममिरे। एवं ते सुस्थापितान् पात्रीकुसुमभाजनस्थालभृङ्गारादर्शान् रत्नकरण्डांश्च न्यकुर्वत। तत्समये देवाः क्षीरसागरपुष्करसमुद्राभ्यामपि पद्मसरोवराद् भरतैरवतक्षेत्रप्रमुख्यात् तीर्थसमूहादपि वरकमलं मृन्मनोहरं जलं क्षुद्रहिमालयतः कुसुमसिद्धार्थतुवरौषधीरानिन्यिरे। ते देवाः सौमनसाद् भद्रशालान्नन्दनविपिनात् पाण्डुकवनात् सुगन्धिवस्तूनीहानीय तत्र जले निचिक्षिपुः। मल्लिकापाटलाजातियूथिकाचम्पकसमुत्पन्नैर्मन्दारपारिजातोद्भवैः कुसुमैरपि हेमकमलैरुत्क्षिप्तागुरुघनसारोऽच्युतपुरन्दरः प्रभोरग्रे स्तुतिं विस्तारयन् देवैः सह पुष्पाञ्जलिं तत्याज। विणादिततवादित्रेषु, कांसीरादिघनवादित्रेषु, वंशीप्रभृतिशुषिरवादित्रेषु, सर्वतो विस्तृतेष्वाभियोगिकैर्वाद्यमानेषु, किन्नरैर्मनोहरशब्देन गीतेषु गीयमानेषु, देवीलोकैर्यथातालं नृत्येषु विस्तार्यमाणेषु, देवमङ्गलपाठकैर्जिनेश्वरे पठ्यमाने देवासुरैः स्वन्धेषु चामरैरुद्धूयमानेषु, तथा हे द्वादशतीर्थङ्कर! हे श्रीमन्! हे निर्जितसंसार! जय! इत्यादिस्तवनवचनेषु चारणानां मुखान्निःसृतेषु धूपितपूजितकलशनिहितैरखिलौषधिसमन्वितैः केसरघनसारश्रीखण्डागुरुमनोज्ञैर्जलैर्महानन्दैरच्युतवासवपुरस्सरैस्त्रिषष्ट्या पुरन्दरैः कल्याणलक्ष्मीनां पात्रं स्नानं विदधे। ततस्ते वासवा गन्धकाषाय्यवस्त्रेण मार्जितं घनसारागुरुधूपितं प्रभुं पात्रिकानिहितैर्गोशीर्षचन्दनैर्विलेपयामासुः। साम्प्रतं स्वामिनः शरीरस्पर्शो भविष्यतीति विकसितैः षट्पदगीतिपरैः कुसुमैः सुराः प्रभुमपूजयन्।

क्तिमद्भिश्चतुर्विंशत्यङ्गरक्षकसहस्रैः परमसमृद्धिशाली षड्भिः श्रेष्ठदेवीभिरन्यैश्च फणिसमूहैः परिवारितः सार्धद्विशतयोजनप्रोच्चं ध्वजसमूहं पञ्चविंशतिसहस्रयोजनविस्तृतं विमानवरमारुह्य मेरुशिखरे समागतः। दक्षनाम्ना सेनापतिना मेघस्वराख्यघण्टाभिताडनादाहूतैः सामानिकादिभिः फणिसमूहैः परिवारितो भूतानन्दनामा नागनायको भक्तियुतो दिव्ययाननिषण्णस्तीर्थङ्करयुतं मेरुपर्वतमाययौ। हरिहरिसहनामानौ विद्युत्कुमारशक्रौ सुपर्णानां वासवौ वेणुदारि-वेणुदेवनामानौ च समाजग्मतुः। अथाग्निमाणव-अग्निशिखनामानावग्निकुमारपुरन्दरौ वेलम्ब-प्रभञ्जननामानौ च वायुकुमाराणां वासवौ समाययतुः। महाघोष-सुघोषनामानौ स्तनितकुमाराणां वासवौ जलान्तक-जलप्रभनामानौ चोदधिकुमाराणां पुरन्दरौ समागतौ। तथा पूर्ण-अवशिष्टनामानौ द्वीपकुमाराणामिन्द्रौ तथाऽमित-अमितवाहननामानौ दिक्कुमाराणां पुरन्दरौ समागतौ। महाकाल-कालनामानौ व्यन्तराणां पुरन्दरौ सुरूप-प्रतिरूपनामानौ च भूतानां पती शक्रावाजग्मतुः। माणिभद्र-पूर्णभद्रनामानौ यक्षनायकौ शक्रौ भीम-महाभीमनामानौ च श्रेष्ठौ राक्षसवासवौ समाययतुः। किंपुरुष-किन्नरनामानौ किन्नराणामाखण्डलौ महापुरुष-सत्पुरुषनामानौ च किंपुरुषाणामिन्द्रौ समागतौ। अतिकाय-महाकायनामानौ महोरगाणामिन्द्रौ गीतयशो-गीतरतिनामानौ च गन्धर्वाणां वासवावाययतुः। अथाप्रज्ञप्तिपञ्चप्रज्ञप्त्यादीनां व्यन्तराष्टनिकयानां षोडश पुरन्दराः समाजग्मतुः। तत्र सन्निहित-समानकनामानावप्रज्ञप्तिवासवौ धाता-विधाता चेति द्वौ पञ्चप्रज्ञप्तिरक्षकौ शक्रावागतौ। ऋषि-ऋषिपालकनामानावृषिवादितिकवासवौ तथा चेश्वर-महेश्वरनामानौ भूतवादितिकशक्रौ समागतौ। सुवत्सक-विशालनामानौ क्रन्दितानां वासवौ हास-हासरतिनामानौ च महाक्रन्दितिकाखण्डलौ समाजग्मतुः। श्वेत-महाश्वेताभिधौ

नीलिनो वासवः प्रभोः पाण्यङ्गुष्ठे विविधरसपीयूषं स्थापयामास । अथ पृथक्पृथग् द्वात्रिंशतं राजतकनकरत्नकोटीस्तथा द्वात्रिंशतं
नन्दासनभद्रासनान्यन्यच्च सुखप्रदं मनोज्ञं वस्त्रादि वस्तु वासवादेशात् कुबेरो जिनेश्वरस्य गृहे समुत्पादयामास ! प्रभोः प्रभुजनन्या
वा योऽशुभं चिन्तयिष्यति तस्य मस्तकमर्जकमञ्जरीवच्छेत्स्यत् इति वचनं पुरन्दरस्यादेशादाभियोगिकदेवा श्चतुर्ष्वपि सुरनिकायेषु-
च्चैरुद्घोषणां चक्रुः । अथ शक्रः स्वयं जगत्पतेरग्रे धात्रीकार्यकरणाय पञ्च कुशला अप्सरसः समादिदेश । तत्समये तु बहवो देवा
हर्षेणाष्टाह्नीं विधातुं सुमेरुगिरिशिखराग्रभागादेव नन्दीश्वरं द्वीपं जग्मुः । ततः सौधर्मेन्द्रस्तत्समये प्रभुगृहान्नन्दीश्वरे द्वीपे देव-
रमणाभिधं क्षुद्रमेरुपर्वतसदृशं पूर्वभागेऽञ्जनाचलं जगाम । अत्र सौधर्मपतिर्मनोहरे चतुर्द्वारे चैत्यवृक्षशक्रध्वजाङ्किते शास्वत-
तीर्थङ्कराणां जिनमन्दिरेऽष्टाह्नीमारेभे । अथ तत्समये तत्र पर्वते चतुर्दिक्षु महादीर्धिकास्थितेषु स्फटिकमयेषु चतुर्षु दधिमुखपर्व-
तेषु शास्वतजिनबिम्बानां जिनमन्दिरेषु चत्वारो शक्रदिग्रक्षका महिमाद्भुतमष्टाह्निकोत्सवं चक्रिरे । तत्र नन्दीश्वरद्वीप ईशान-
वासव उत्तरे रमणीयाभिधेऽञ्जनाचले गत्वा नित्यानां तीर्थङ्कराणामग्रेऽष्टाह्निकामहं व्यधात् । ईशानेन्द्रस्य दिक्पाला अपि
पूर्ववद्वापीस्थितेषु दधिमुखपर्वतेषु शास्वतानां तीर्थंकराणामुत्सवं चक्रिरे । तत्र तु दक्षिणदिक्स्थिते नित्योद्योताभिधेऽञ्जनाचले
चमरवासवः शास्वतानां जिनेश्वराणामुत्सवं चकार । तद्वापीगर्भस्थितेषु तद्वद्दधिमुखपर्वतेषु तद्दिक्पाला हर्षेण नित्यानां जिना-
नामग्रेऽष्टाह्नीं व्यधुः । बलिरिन्द्रस्तु पश्चिमदिक्स्थे स्वयंप्रभाभिधानेऽञ्जनाचले नित्यानां जिनेश्वरप्रतिमानामुत्सवं चकार । तद्वा-
पीमध्यस्थितेषु दधिमुखपर्वतेषु तद्दिक्पालाः शास्वातानां जिनेश्वरप्रतिमानां महोत्सवं व्यधुः । इति नन्दीश्वरे द्वीपेऽष्टाह्नीं
विधाय ते पुरन्दरा यथागतमार्गमार्गगाः स्वं स्वं स्थानं जग्मुः ।

ततः कृत्यसावीशानः सौधर्मवासव इव पञ्च मूर्त्तीर्विधायकया मूर्त्या प्रभुं क्रोडेऽधारयत्। द्वाभ्यां पाण्डुरौ चामरावेकयोज्ज्वलं छत्रमेकया च मूर्त्याकाशकूलङ्कषं दूरोल्लासितं शूलमधारयत्। अथासावीशानः शरीरिणो धर्मान्निवोन्मीलत्स्फूर्यकान्तिमणिमयांश्चतुःसंख्यकान् वृषांश्चतसृषु दिक्षु व्यकरोत्। ततोष्टभिर्वृषशृङ्गाग्रभागोच्छलन्मनोहरदुग्धधाराभिः सौधर्मपुरन्दरो भुवनत्रयनायकस्य प्रभोः स्नात्रमकारयत्। भक्तिपात्रेण सौधर्मवासवेन दिव्यैः पट्टवस्त्रश्रीखण्डपुष्पदाममाणिक्यालङ्कारैः प्रभुः सुशोभितः। अथ शक्रो जिनेश्वरस्याग्रे मणिमये कर्माष्टकविनाशाय रूप्यतण्डुलैरष्टमङ्गलीमातेने। अथोद्ध्र्वीभूतः स इन्द्रः किञ्चिदपसृत्य स्वामिनोऽग्रे ज्वलद्दीपध्वस्तान्धकार आरात्रिकमकार्षीत्। स इन्द्रो विस्तारलुठन्नक्षत्रमिव देवसमूहैः क्षिप्तकुसुमं तज्जिनेश्वरस्याग्रे त्रिवारमुदतारयत्। ततः स शतक्रतुः पृथिवीतलमिलन्मस्तको भुवनपतिं प्रभुं प्रणम्य प्रसन्न इति तुष्टुवे। हे त्रिभुवनाश्चर्य्यरूप! जय! हे त्रिभुवनाभय! जय! हे जगत्रयप्रमोद! जय! हे त्रिजगदुदय! जय!। अद्य मया शीघ्रं भाग्यवत्सु प्रथमरेखा प्राप्ता, यद्भुवनत्रयसारभूतस्त्वं द्वादशो जिनेश्वरोऽवलोकितः। मम हृदयं, तदुत्पन्ना मनीषा, तदुद्भवं वचनं च स्वल्पं, तेन हे प्रभो भुवनविलङ्घिनस्त्वद्गुणाः कथं स्तुत्याः स्युः ?। हे स्वामिन्! पुण्यसीमया दृश्यसीमानं त्वां प्राप्य प्रसन्नानि लोचनानि रूपान्तरविलोकनान्न्यवर्त्तन्त। हे जगत्पते! अवसर्पिणीसमयसर्परूपकर्मगरलव्याकुलं भुवनममृतद्रवैः कदोल्लासयसि ?। इति स्तुत्वेशानात् प्रभुं गृहीत्वा देवैः परिवारितः सौधर्मवासवः पञ्च रूपाणि गृहीत्वा सूतिकागृहं ययौ। ततः स इन्द्रः प्रभोः प्रतिबिम्बं संहृत्य जनन्याः समीपे जिनेश्वरं संस्थाप्योच्छीर्षके ('ओसिकुं' इति भाषायाम्) दिव्ये वस्त्रे कुण्डले च तत्याज। ततः स शक्रः कनकवलयैः शोभितं लम्बिविविधमणिं जिनेश्वरस्य नयनानन्दं कन्दुकमुल्लोचे स्थापयामास। जिनेश्वरा मातुर्दुग्धं न पिबन्तीति विचार्य

द्राजानिस्तयोरुत्कर्षमनीयत, यथा तृणं दूर्वामपि वसुधापतिरपि शिरसा दधार। सोममातृकां कथयन्तः पाठकोलाहलोत्सुका बालकमहिता बालकाध्यापका महीशेन पूजयामासिरे। संसारबन्धनाद् विमोक्षणं विधास्यतः प्रभोः काराविमोचनान्महीपः पुण्याहमङ्गलं चकार। पुत्रदर्शनक्रीडया विना मम क्रीडान्तरं क्व भविष्यति ? इतीव भूजानिः क्रीडापक्षिणो बन्धनात् तत्याज। असौ तेजस्वी ? अथवामौ ? इति स्वयमन्तरं पश्यन्निव तृतीये दिवसे प्रातःसमये राजा प्रभोः सूर्यमदर्शयत्। अथ राजा तस्यां रात्रौ प्रभोः शशिनमदर्शयत्, स चन्द्रः पीयूषवृष्टया प्रभुदृष्टयैव सुधाकरो बभूव। जिनेश्वररूपनिरीक्षणाद् यथेष्टं निर्निमेषनयनाः प्रमदाः सुखेनैव षष्ठीरात्रिजागरणं चक्रुः। प्रभुजन्मनैव निर्मलैरपि राजवंशलोकैरेकादशे दिवसे स्नातं, यतो वृद्धानामाचारो दुस्त्यजः। नानाभोजनताम्बूलपट्टवस्त्रभूषणशोभितैः स्वजनसमूहैर्दूरतः समन्ततो राजगृहे पूरिते "अयं वसूनां पूज्य एव" इति विचार्य त्रिभुवननायकस्य "श्रीवासपूज्य" इति नाम महीधवो द्वादशे दिवसे दत्तवान्। इति नूतननूतनैरुत्सवैर्दिने दिने वैधमानः प्रभुरङ्गुष्ठामृतपुष्टः पितृनयनयोरानन्दं ददौ। उत्तानशायिनः प्रभोश्चञ्चलाः करौ चरणौ, चतुर्णां सद्धर्मकल्पद्रुमाणां पल्लवा इव रेजुः। प्रभोराननने दुग्धच्छविर्मुग्धो हास्योदयो लोकानां बोधायोत्सुक उरस्तो निर्गच्छन् धर्म इव रराज। यत्र तत्रापि चिरनिश्चलनयनः प्रभुः किमपि ध्यानमभ्यस्यन्निवाभासतेति मन्ये। प्रभोः प्रेङ्खातल्पोपरि निहितमौक्तिककन्दुकोऽग्रे पिण्डरूपेणस्थितं ज्ञानं प्रस्तारमपश्यदिव। बालिकाभिः करतालाभिर्दूरत आहूतः स प्रभुरुच्चैः पदवीगमाभ्यासकारीवोल्लसति स्म। निजाङ्गुष्ठपीयूषसिक्तस्य विभोर्दन्तकुड्मलास्त्रिभुवनहर्षकन्दस्याङ्कुरा इव प्रादुरभूवन्। मयैष संसारो जित एवेति हर्षेणोच्छलन्निव प्रभुः प्रायोऽनभिप्रायं किलकिल शब्दं व्यधात्। चञ्चद्रुस्तक्रमः प्रभुः पृथिव्यां वक्षसा विलसन्नपारसंसारसागरं तरन्निव शुशुभे। संसारकूपाज्जुवनं स्वपराक्रमेणोद्धर्तुं

अथ प्रबुद्धाया देव्यास्तु नन्दनविलोकने यो हर्षोऽभूत् स संकीर्णे हृदय आस्तां परन्तु भुवनत्रयेऽपि न ममौ । तत्समये प्रमोदसाक्षीभूता दासदासीशरीररक्षका बद्धस्पर्धा वर्धापनिकार्थं ( 'वधामणी' इति भाषायाम्) शीघ्रतरं दधाविरे । हे देव ! **तनयरत्नस्य** जन्मना वर्ध्यसे वर्ध्यस इत्युक्तिः कापि दासी धराधवस्योत्तरीये हस्तमक्षिपत् । इयं दासी मम श्रवणयोः काञ्चनमालिकां निहितवतीतीव राजा तस्या गृहं काञ्चनैः पर्यपूरयत् । **तनयजननोक्तिसारस्य** परिजनस्य सादरं दानं ददानो **महीशः** सूतिकागृहं प्रति जगाम । निःसारनक्षत्रं नक्षत्रेशमिव कान्तिनिस्तेजोभूतरत्नदीपं नन्दनाननं महीजानिरद्राक्षीत् । ततः कोमलैः प्रीतीमनोज्ञैर्वचनैः प्रियां संभाष्य राजा नन्दनजननोत्सवाद्भुतं नगरमकारयत् । केशरधूलिसमूहमनोहरजलपूरच्छटा बालकेऽपि स्वामिनि पृथिव्या अनुरागा इव शुशुभिरे । स्वाम्यनुभावेनोप्तैः पुण्यबीजसमूहैरिव प्रतिगृहं काश्मीरजकर्दमे स्वस्तिकमौक्तिकैः शुशुभे । विभुहिमांशोरुदय उद्भ्रान्तहर्षसागरबुद्बुदैरिव नगरे समन्ततः कुसुमसमूहैर्दिद्युते । प्रभुसेवावसरप्राप्तये सकलद्वीपचण्डांशुभिरिव सुवर्णकलशैर्नागरिकाणामाजिने स्थितम् । प्रभुजननोत्सवे विपणिलक्ष्म्यो वन्दनमालाभिश्चञ्चलभ्रुवो वैजयन्तीकरक्रीडाभिर्ननृतुः । अतिवैशद्याद् दूरतोऽपि प्रभुमन्तर्विधातुमिवोच्चैस्तोरणचूडासु मणिमयादर्शैरशोभि । मनोहररत्नविभूषणकान्तिसमूहतोयप्रवाहाः, चपलहस्ततरङ्गवत्यः, चञ्चत्पयोधरचक्रवाकाः, मनोज्ञसिञ्जानमञ्जीरराजहंसमनोहरनादाः, विकस्वरवदननूतनकमलोल्लासितगीतालिनादाः, प्रसृतिसदृशीभिर्दृष्टिभिर्नगरवासिलोकैः पीयमानाः, प्रभुजननानन्दलक्ष्मीविलासरसकारणीभूताः **प्रमदा** वाप्य इव पदे पदे संभूय मण्डलीभूय च रासकोल्लासक्रीडाभिः शुशुभिरे । साम्प्रतं मम शुद्धिर्भविष्यतीति हर्षित इव **धर्मः** सपर्यानाटकव्याजात् सकलेषु **जिनमन्दिरेषु** ननाद । पूर्णभाजनच्छलात्स्वहृदयेऽमान्तमानन्दं करे धारयन्निव ललनालोको महीजानेर्गृहे प्रविवेश । तत्समये **प्रभोर्मातुः** प्रम-

सन्ध्या केवलज्ञानचक्रवर्त्तिने श्रीमत्स्छलात् प्रभोर्हृदयाजिने सिंहासनं सज्जितम्। मनोहरैः नखैर्नक्षत्रिता ताम्रा प्रभोः करयुगली जगति पुण्यशशिन उदयं सूचयामासेव। प्रभोर्बाहुदण्डौ भुवनसमृद्धिगृहेऽसच्छलेन सुवर्णकलशयुक्तौ, तोरणस्तम्भाविव शुशुभाते। कमलानामुल्लासकर्त्ता संसारसमुद्रस्य शोषकः कोऽप्यपूर्वो हिमकिरणः प्रभोराननमशोभयत्। प्रभोराननगृहे रसनाप्रेङ्खाग्रखेलिनी भारती ओष्ठरक्तगवाक्ष्यान्तर्मार्गेण कैर्नलक्षिता? अतिगम्भीरनादः प्रभुज्ञानपीयूषमेघो दशनकान्तिपीयूषधारासारैः कस्य तापं न दूरीचकार? भुवनपतेर्नासिकाऽन्तःश्वाससुगन्धिवाञ्छया दूरोन्नताऽपि पुरतोवदनसम्मुखी नताऽभवत्। धैर्यवन्तौ लोचनवीरौ भुवनमोहं जेतुं प्रभोः कपोलव्याजात् सौवर्णौ पुरःस्फुरौ संस्थाप्य खलु तस्थतुः। सज्जनानां स्वर्गमोक्षद्वारस्थाः कर्मकपाटिकाः समुद्घाटयितुं प्रभुः कुञ्चिकामदृश्यौ भ्रुवौ दधार। त्रिभुवनकल्पद्रुमस्य जिनेश्वरस्य श्रवणपाशौ ध्यानज्ञानलक्ष्म्योश्चञ्चले प्रेङ्खे इव शुशुभाते। प्रभोर्ललाटस्य शोभां किं स्तौमि? यस्मिन् विलोकिते तिरस्कृतार्धचन्द्रा सकला सिद्धिशिलैव विलोकिता। शरीरकान्तिसौदामिनीमनोहरा प्रभोः केशश्रेणिः सज्जनानां दुष्कर्मतापविनाशाय मेघसदृशी रराज। विपुलपुण्यसुगन्धजलवापीघनक्रीडाभिः प्रभुः सुसुगन्धि स्वेदमलत्यक्तं देहं दधार। निश्चितं प्रभुर्यद्दुष्कर्मापथ्यं नासेवत तस्मात् तिरस्कृतसकलभोगैः रोगैर्न दूषितोऽभूत्। पूर्वतपःशाणः मनोरात्मा तथा निर्मलोऽभवद्यथा तत्कान्त्येव रुधिरे मांसेऽपि स्वच्छताऽभूत्। आवयोः कार्यं तु शरीरदुर्गन्धकरणं तत् तत्र न भवेदिति लज्जयेव प्रभोराहारनीहारौ जगतामदृश्यौ बभूवतुः। इदं कमलमस्तीति प्रभोरानने समागत्य चञ्चरीकाः श्वाससुगन्धिसिन्धुतृप्तिमलभन्त। अहो! भ्रान्त्याऽपि कृता जिनसेवा निष्फला न भवति, इत्युत्पन्नाश्चर्यरूपातिशयवैभवः प्रभुः प्रमदानां विलासरसस्य जीवितरूपो बभूव।

समर्थोऽपि प्रभुर्जननीकराङ्गुलीलग्नः कुतूहलेन चरणानधात्। मोहनिद्रायां प्रसुप्तं लोकं जागरयन्निव प्रभुश्चरणन्यासे निबिडं घर्घरशब्दं चकार। स्वजनैराहूयमानो जिनेश्वरोऽन्यतो गच्छंस्तेषां सांसारिकभोगविनाशाय ममत्वं खण्डयन्निव बभौ। गुणैरसमाना वयसा प्रभोः समानीभूय चतुर्विधाः सुरा वासवादेशतः क्रीडां व्यधुः। प्रभोर्मस्तके स्फुरन्ती विमुक्ता चूडा संसारमन्थनं प्रति तत्परस्य प्रतिज्ञेव रराज। स प्रभुर्येन येन यत्समये कौतुकात् क्रीडितुमैच्छत् तत्समये तत् तद् रूपं धारयित्वा देवैरग्रतः स्फुरितम्। सद्गुणसागरः स प्रभुः पूर्वमसंख्येषु भवेषु विलोकिताभ्यस्ताकर्णिताः कला अवधिज्ञानत एव ससार। इति मोक्षप्रदः प्रभुर्भुवनहर्षदायिनो यौवनस्य भाग्येनेव बाल्यं वयोऽतिक्रान्तः।

अथ यौवने धनुःसप्ततिप्रमाणशरीरधारी स प्रभुः कर्माणि जेतुं वज्रऋषभनाराचनामानं संहननं दधार। प्रभोश्चरणतलयुगलं रक्तत्वान्निश्चितं तस्मिञ्जन्मनि रागसमुद्रः स्वचरणतलाधोभागे निहित इति विद्वद्भिर्विदितः। जिनेश्वरस्य दश चरणनखचन्द्रा यतिधर्मलक्ष्मीनां रत्नरचिता दर्पणा इव शुशुभिरे। पापकर्दमसमूहान्निर्गच्छतां दशदिग्वासिनामालम्बनयष्टय इव प्रभोश्चरणाङ्गुल्यो विरेजिरे। संसारमहासागरतीरविहितस्थितेः प्रभोरुन्नतौ चरणौ निलीनकच्छपाविव शुशुभाते। भुवनपतिमुकुटघनघर्षभयादिव पभोश्चरणयोर्गुल्फा अत्यन्तं गूढत्वमलभन्त। स्वामिनो जङ्घाद्वयव्याजाद् द्वेषरागजितोः शमनिर्ममभावयोर्विजयस्तम्भौ सज्जौ जाताविव रेजतुः। मम नैष्ठुर्येण प्रभोः कोमलकरयुगलं मापीडीतीव जिनेश्वरस्य जानुनी गूढतां प्राप्ते। प्रभोरनुक्रमोन्नते द्वे ऊरू अधर्मविजयसज्जयोर्विरतेरीर्य्यासमितेश्च तूणवच्छुशुभाते। प्रभोः कटीतटी पृथुर्मध्यदेशश्च कृशो बभूव, तादृशाः परमाणवः समस्तशरीरे कनु पूर्यन्ते? लावण्यजलाशयस्य प्रभोर्नयनभ्रमरमिलितं रोमश्रेणिनालं नाभिकमलं कदाचिदपि लक्ष्म्या न त्यक्तमभूत्। भविष्यते

सुधापायिभिः मनुष्यैर्निर्निमेषतया सभा स्वर्गसदृशी कृता। तत्समयेऽत्रेदृशं तनयं विलोक्य वसुधावासवस्तद्विवाहमहोत्सा-हनिन्तापीडितमानसोऽभवत्। तत्समये प्रतीहारश्रेष्ठः स्वकक्षाभ्यन्तरे वेत्रं क्षिप्त्वा राजानमभिवाद्य जानुतलनिहितकरो व्यजिज्ञपत्। हे महीनाथ! सम्प्रति श्रीशालनगरनायकस्य लीलाविलासाभिधस्य राज्ञः सुवेगनामा दूत समागतस्त्वां द्रष्टुमिच्छतीति श्रुत्वा देवः प्रमाणमिति। अथ महीशस्य भ्रूपल्लवोल्लाससंज्ञया स प्रतीहारोऽमुं दूतं सभान्तरेऽमूमुचत्। सभां प्रविशत एव सभारत्नकान्तिं पिबदस्य नयनं कौमारैः शरीरकान्तिफलत्कारैर्दूरतोऽहारि। किमिदमत्र कान्तिसमूहः? इत्यन्तःकरणोत्पन्ना-श्चर्यः स दूतश्चिरं विलोक्य पुरुषरूपनिश्चयाद्विचारयति स्म। किमयं शेषनागः? न न, स तु फणारत्नेष्वेव तेजस्वी, सकलशरीर-कान्तिः किमयं सूर्यः? न न, स नयनानां प्रियः क? किमयं नयनानन्दश्चन्द्रः? न न, तस्य दिवसे प्रभा क्व? किमयं सततप्रकाशी शक्रः? न न, स नयनसमूहव्रणवान्। अये ज्ञातम्! यद्विनयवान् पृथिवीपतेश्चरणाग्रे स्थितस्तद्यथाकर्णितोऽयमत्र वासुपूज्यः कुमारोऽस्तीति मन्ये। एवं विचारयन्नेव वासुपूज्यरूपहृतचेतनः सम्भवत्प्रेमा स दूतः संजातरोमाञ्चोऽश्रुनयनः स्तम्भवत् स्थितः। अथ शिरो व्याधुन्वन्नानन्दाविष्ट एष दूत इति बभाषे-यस्यायं मनोरथः स धराधवोऽपि धन्य एवास्ति। एवं तद्वचनमाकर्ण्य राजा वसुपूज्यः ससम्भ्रममिदमुवाच-असौ धन्यः पृथिवीजानिः कः? को वा तस्य मनोरथः? इति राज्ञो वचनेन प्राप्तचैतन्यः स दूतो राजानं प्रणम्य प्रथमप्रणामविस्मारसज्जत्रपो व्यजिज्ञपत्। हे पृथिवीश! अस्ति भवदीयसुहृदो लीलाविलासाभिधस्य नृपस्य मन्मथसम्पदः सीमारूपा मदनरेखा नाम रमणी। अन्यदा भ्रमरीसंगीतसुगन्धिसमज्ञां सरोज-मालिकां ददन्ती, शुभ्रसुधावृष्टिकारिनयनविलासा, शान्तप्रभावती, कमलस्था, करकमलगृहीतपद्मा पद्मावती नाम देवी तया

अथ कदाचित्–लक्ष्मीक्रीडासरोजोद्गच्छद्धूलिधूसितामिवाचितकनकोत्तानपट्टप्रकटकान्तिं, दृष्टिहरिणहर्षकारिदूर्वाविपिनस्तम्बसमूहामिव घटितनीलरत्नश्रेणिमालितविस्मयकुम्भिकां, सततोद्यद्राजतेजःसूर्यसन्ध्यारागश्रितामिव पद्मरागमयस्तम्भकान्तिसमूहपरिप्लुतां, सौन्दर्याद्भुतस्तब्धविद्याधरीसमूहामिव स्तम्भावष्टम्भपाञ्चालीत्रिपुलीकृतसम्पदं, सुधर्माख्यसभाविजयोद्दण्डकीर्त्तिसमूहपूरितामिव प्रकटस्फटिकसमूहरचितभारपट्टवर्गाद्भुतां, सूर्यत्रस्तनक्षत्रसहितनिशाश्रेणिश्रितामिव मुक्तावचूलभ्राजिष्णुश्यामोल्लोचसमूहां, स्वर्गलक्ष्मीकार्मणोत्क्षिप्तजपाकुसुमसमुदायामिवासदृशमूल्यमाणिक्यघटश्रेणिशोभिनीं, द्वारस्फुरद्द्वारपालहुङ्कारस्खलितप्रजामाकृष्टखड्गलतारङ्गच्छरीररक्षकविहितवेष्टनां, प्रचण्डमण्डलनायकसमूहाखण्डभूषणां, निर्दोषमहाविधसुधीवर्गविशिष्टप्रभां, विशालमनोज्ञशृङ्गारगणिकावृन्दभूषितां, औचित्याचरणप्रशंसनीयसुजात्यसचिवशतसमन्वितां, व्यवहारकलाकुशलव्यवहारिसमूहयुक्तां, पूर्यमाणमनोरमवादित्रत्रिकविकस्वरां, वसुपूज्येन सुशोभितां सभां पूजानिपुणैर्देवैः सेव्यमानचरणः प्रभुर्निजेच्छया प्रविवेश। वादिमरालसदृशैः सकङ्कणझणत्कारगणिकापाण्युच्छ्रितैश्चामरैः सेव्यवदनकमलस्य जनकस्य गुणसमूहानां चक्रिणं विजयमुत्पादयञ्जगत्प्रणम्यचरणः प्रभुः पादपीठे समुपाविशत्। राजनि सत्यपि सभासदां दृष्टिः प्रभौ लीना जाता, वृक्षे स्थितेऽपि भ्रमरी कुसुम एव निलीयते। प्रभुणा स्वच्छश्यामलया दृशा विलोकिताः सभासदः स्वं जाह्नवीयमुनासङ्गमजले स्नातं मेनिरे। गुरुभिर्ग्रन्थसमूहैस्तर्कैरप्यहताः सज्जनानां भ्रान्तीः प्रभुर्वार्त्तालापैकक्रीडया तत्समये दूरीचकार। विदिततत्त्वोऽपि प्रभुस्तत्समये कविशिरोमणीनां नूतनवचनैरपूर्वैरिव साश्चर्य इवाभवत्। कलानामालापैः सभासदां मोहं दूरीकुर्वन् प्रभुः क्वापि जनकस्यानुचितामपि वाणीं तथेत्यमन्यत। तत्समये रसविदः सभासदो वेणुवीणाप्रभृतिवाद्यं निवार्य कथयतः प्रभोः श्रवणाभृतस्यन्दिवचनं शुश्रुवुः। तत्समये प्रभोर्लावण्य-

नन्दनमनोज्ञं जगत्त्रयनतुरंगवाहि समूहवलययुगलनिभं यस्याः कपोलद्वयं भाति। कान्तितिरस्कृतप्रवालं यस्या ओष्ठद्वयं नूतनोद्भि-
न्नरागारुणकिसलययुगलमाद्वयं वहति। वीणामधुरस्वरैरनुमीयमानायाः सरस्वत्या मुक्तावलीव यस्या आनने दन्तपङ्क्तिः शोभते।
हृदये पुष्पेषुर्मदनो निवासं करोतीतीव यस्याः श्वसितपवन अद्भुतसुगन्धिरम्यो लक्ष्यते। भुवनेन नयनाञ्चलचामरैर्वीज्यमानस्य वदन-
महीशस्य गेहागमनमिव यस्याः कण्ठो दृश्यते। यस्याः स्वाभाविकतया प्रवर्धमानयोः श्रवणपाशयोः पदं दातुमिवांसौ किञ्चिन्नम्रा-
कारमभूताम्। चञ्चदङ्गुलीकिसलयशोभयोर्नखकिरणकुसुमयोर्भुजलतयोः फलं कश्चित् सुकृतात्मा प्राप्स्यति। यस्या हृदयस्थायिनो
मदननृपस्य स्तनबीजपूरफलयुगलं यौवनेनोपायनीकृतमिव राजते। स्वच्छप्रतिपच्चन्द्र इवातीव कृशत्वं धारयन् यस्या मध्यदेशो
लोकेनाकर्णितो न तु विलोकितः। यस्याः संकटे मध्यमार्गे व्रजितुं रतिप्रीतिमदनैः करालम्बनदण्डसदृशं वलित्रयं सञ्जीनकं।
पालनकुशलमर्पमदृशमत्यक्षलक्ष्यरोमराजिशोभिनी यस्या नाभिः सौन्दर्यसुधाकुण्डसदृशी रराज। मन्मथमत्तगजवेगक्रीडाकरणसैकतं
गम्या जघनस्थलं रोमराजिमदरेखया शुशुभे। कृशाङ्ग्या यस्या नितम्बजलार्द्रवनभूम्याडम्बरः किं वर्ण्यते? यस्माद्विस्तारवाञ्छृङ्गार-
द्रुम उच्चैर्गगारिर्भाति। कुसुमेषुसाम्राज्याराद्दशमाङ्गल्यकारणं रम्भास्तम्भयुगलसदृशं यस्या ऊरुद्वयं शोभते। स्वामङ्गुतं मन्यमाने यस्या
जङ्घे परस्परं दृष्ट्वा मुदा शब्दायमानमुक्तामञ्जीरध्वनिभिर्हसतः। मरालगमनाया यस्याः किञ्चित् कच्छपोन्नतौ पादौ वदनचन्द्रभया-
त्कुड्मलकोशे कमले इव स्थिते रेजतुः। क्रीडातिरस्कृतजेतव्याशोकपल्लवकान्ती यस्याश्चरणौ नखैर्बद्धमाणिक्यशिरोभूषणाविव शोभेते।
गमनशोभया जितयोर्गजमरालयोः स्तनाभ्यां गजसौभाग्यं, नूपुराभ्यां च हंसनादशोभां या जग्राह। अनया जगत्त्रयरमणीसमूहो
जित इति कामदेवो महीपतिः कबरीदण्डव्याजाद् यस्या जैत्रपत्रं दत्तवान्।

मदनरेखया राज्यन्ते स्वप्ने व्यलोकि । त्यक्तनिद्रा सा भूभुजे स्वप्नमेनं व्यजिज्ञपत् । राजोवाच—जगदानन्ददायिनी तनया तव भविष्यति । इति राज्ञो वचनं निशम्य प्रीत्या साऽभाणीत्—हे नाथ ! तव वचनं सत्यमस्तु ! मम पुत्राः सन्त्येवातः सत्कन्यामभिलषामि । अत्रान्तरे बहिः प्रभातकालीनवाद्यध्वनेरनन्तरं तिरस्कृतमृगपतिनादो मङ्गलपाठकोऽपठत् ।

"पद्मिनी विकसत्पद्ममुखी सौख्याय जायताम् । त्रैलोक्यलोचनं भानुर्यत्पतित्वाय युज्यते" ॥१॥

अथ प्रसन्नो महीजानिः प्रियामुवाच—हे देवि ! अनयोपश्रुत्या तव नन्दिनी नूनं त्रिभुवनगुरोर्भार्या भविष्यति । इत्युक्तिप्रसन्नमानसा स्वामिबोधिता सा मदनरेखा विशेषपुण्योपार्जनैः रात्रिशेषं निनाय । स्वप्नावलोकितायास्तत्पद्मावतीदेव्या अद्भुतं शरीरं चिन्तयन्ती सा ध्यानसदृशं सुकृतैकसारं गर्भमधत्त । स्वामिनः प्रेमसमूहार्पणतः सम्पूर्णदोहदा सा राजकान्ता सौम्योच्चग्रहदृष्टिवति लग्ने तनयामजीजनत् । तत आश्चर्यजनकोत्सवसमूहैर्मातापितृभ्यां शोभने दिवसे स्वप्नानुसारतस्तस्याः "पद्मावती" इति नाम दत्तम् । देहावयवस्पर्धैधमानकलाश्रेणिर्मूर्खताविमुखी सुवदना सा यौवनोन्मुखी बभूव । वदनस्य परितश्चन्द्रभ्रान्त्यानुचारिणी विभावरीव यस्याः श्यामला केशराजी राजते । भुवनविजयकर्त्तुः कामदेवस्य यशःस्तम्भ इव निःसीमलावण्यो यस्याः सीमन्तः प्रतिराजते । भ्रुकुटिशिरीषस्फुरद्वारः कामदेवस्य चम्पककुसुमरचितोऽर्धचन्द्रबाण इव यस्याः शिरसि सीमन्तदण्डो राजते । नयनविश्वासहरिणालिङ्गितौ यस्याः श्रवणौ युवमनोहरिणान् धर्त्तुं मदनयौवनयोर्मृगपाशाविव ज्ञायेते । भग्नश्यामले यस्या भ्रुकुट्यौ मन्मथकामिनीयुगललीलादीर्घिकातुल्ययोर्नयनयोः पालीविपिनराजीव शोभेते । मनोहरकान्तिद्वाराचारेण तस्या लोचने शृङ्गारविलासरसप्रवाहयोः प्रणाल्याविव शोभेते । यस्या नासिका रतिप्रीतिकेलिकुट्टिमयोरिव कपोलयोरन्तः सीमाभित्तिसदृशत्वं दधाति ।

काग्यन्निर मस्तकं कम्पयन महीपतिः सभासद इत्यब्रवीत्। प्रभुर्यच्चित्रपटेऽपि विलोकितस्तत्पूर्वैः पुण्यैः फलितं, साम्प्रतं तु तस्य गाधान्मूर्त्तिनिभालनात् तद्दर्शनपुण्यं फलतु! पुण्यवृक्षफलरूपामिमां कुमारीं समर्प्य श्रीवासुपूज्यं शीघ्रं पश्यामस्तदर्थं च चम्पानगरीं गच्छामः। अथ प्रसन्नैर्हृष्टरोमभिः सभासद्भिरनुमतो राजा सैन्यारब्धपृथिवीकम्पश्चम्पानगरीं प्रति चचाल। भवद्भ्यां चित्रलेखनात् ईदृशं चित्रं विधाप्यतां। नयनाकर्षी जीवनालम्बनमयं पटो मे दीयतां। इति जनकस्य छन्नं प्रार्थितौ किन्नरौ पद्मावत्यै पटं प्रदाय राजकृतसत्कारौ चित्रलेखार्थं ययतुः। हे स्वामिन्! कन्यावदनचन्द्रविच्छायवर्त्मनदीकमलसमूहस्त्वत्सुहृत् स राजा मत्वर त्वामागच्छति। हे चम्पानगरपते! भवद्देशसीमानं प्राप्तवता तेन तुभ्यमिदं ज्ञापयितुमहमग्रत एव प्रेपितोऽस्मि। तत ऊर्ध्वीकृतमु-

अथ श्रीवासुपूज्यो राजा हर्षेण मुकुटं विना शरीरलग्नं सकलमद्भुतमाभरणं सुवेगाय दूताय दत्तवान्। ततः ऊर्ध्वीकृतमु- खान् सुबुद्धिप्रभृतीन् मन्त्रिणः प्रसादतरङ्गस्पृशा दृष्ट्या पश्यन् पृथिवीवासवो व्याजहार। अहो! मम च श्रीवासुपूज्यस्य विवाहचि- न्ताऽभवत् तथा च सुवेगः कन्यारत्नमिहायातमकथयत्। कार्यप्रारम्भेऽनुकूलार्थसम्पत्तिर्महच्छकुनमित्थमयं ग्रन्थार्थ एव मामिहो- त्साहयति। तत्साम्प्रतं तस्य भूभुजः सन्मुखं गन्तुमुचितमेवेति सचिवेन कथितः सपरिवारः स राजाऽचलत्। गुरुणोपदिष्टतत्त्वा- र्थश्रोतृश्रद्धारसाविनात्यन्तप्रमोदमहिमाविमौ राजानावमिलताम्। ततः परस्परालिङ्गनकुशलपृच्छाप्रेमवचनप्रसन्नौ तावेकहैमस्यन्दना- रूढौ नगरसमीपं समाजग्मतुः। तत्र महति निवासगृहे लीलाविलासं समावास्य यथायोग्यं च सत्कारं विधाय वसुपूज्यो राजा नगरीं प्राविशत्। ततस्तावन्तः सततसञ्चारैः पवित्रवाचकैरमात्यैर्वरकन्ययोः पाणिग्रहणं दृढं चक्रतुः। अथोभाभ्यां कृतसत्कारो दैवज्ञश्रेष्ठः कुण्डलयित्वा तद्दिवसाद् दशमे दिवसे शुद्धं लग्नं ददौ। ततः सुवर्णदानकारी स राजा कल्याणदायिनौ चरणौ प्रक्षाल्य

अथ कदाचित् कृतविस्तीर्णशृङ्गारा शृङ्गाररसजीवानुरूपा सा राजकुमारी सभानिषण्णस्य पितुः क्रोडं स्वीचकार। अस्या भर्त्ता को नाम भुवनत्रयगुरुर्भविष्यति ? इति चिन्तासमूहपूरितमानसो यावद् धराधवोऽभूत् तावत् पूर्वपरिचितं वीणानिहितनादं किञ्चित् किन्नरमिथुनमाकाशात् सभामध्ये समाजगाम। अहो ! आगम्यतामागम्यतां ! युवां कुशलिनौ ? किं चिरकालादागतौ स्थः ? इति ससम्भ्रमं महीशस्तावुवाच। ततस्तावूचतुः चतुःसागरपवित्रितपृथिवीतलालङ्कारो लोकोत्तरगुणसमूहो भुवनव्यामोहजनको रूपशोभासतताकारितशतक्रतुकामिनीनयनः प्रातःकालीनशीतलाभिः सूर्यस्य प्रभाभिर्निर्मित इव गुणागुणविशेषवेत्ताऽनन्यसाधारणदानकर्त्ता चम्पानगरीनायकनन्दनो हे राजन् ! साम्प्रतमावाभ्यां सेव्यते। पुनश्चिरकालपरिचयोत्कर्षवशीभूतहृदयावावामन्तःकरणप्रीत्यैव भवन्तं विलोकितुमागतौ स्वः। अथ राजोवाच–यदि तस्य पुरत एव युवयोर्गेयं तद्युष्मद्गीतसुधापारणं मम क्व नु स्यात् ? ततस्तावूचतुः–भक्त्या प्रार्थिताऽप्सरसां वरा चित्रलेखा प्रभो रूपं पटे न्यस्यावयोर्दत्तवती। जगति निजेच्छया विहारिणावावां तत्पटस्थरूपं सहैव वहावहे, यत्र तत्रापि कौतुकात् तदग्रे कृत्वा गायावः। तद्धे पृथिवीनाथ ! यदि तवास्माकीनगीतश्रवणवाञ्छास्ति तदासनं त्यज ! अत्रासने च प्रभो रूपचित्रपटं स्थापय ! इति किन्नरद्वये वदति प्रभुरूपदर्शने समुत्सुको महीधवः स श्रेष्ठासनत्यागमेवोत्तरमददत्। ततस्तौ दिव्यपुष्पमालापूजितं प्रभोश्चित्रपटं संयतकेशादाकृष्य भद्रासने संस्थाप्य हर्षेणागायताम्। प्रभो रूपं पश्यतां गुणाञ्छृण्वतां सभासदां मानसं नयनकर्णाभ्यन्तरे गमनागमने करोति स्म। परन्तु पद्मावत्या मनः पुनर्मुक्तेतरेन्द्रियव्यापारं प्रभुरूपदर्शनेच्छया वेगान्नयने गवाक्षे जगाम। हे प्रभो ! त्वं त्रिभुवनस्पृहाकल्पवृक्षः कथ्यसे तन्मम त्वच्चरणदासीत्वसंकल्पं पूरय ! इति ध्यानमयसागरमध्यमज्जितहृदया प्रभुरूपातिशयशोभासक्तनयनैव सा पद्मावती तस्थौ। प्रभुरूपसमुद्रे नयने जलक्रीडां

धिप्रानतः प्रभोर्विवाहमङ्गलं विदित्वा सपरिजनः समाजगाम, यतः सेवकाः समयविदो भवन्ति । वचनलोपभयवता शक्रेण वसुपूज्यं पुरस्कृत्य विवाहमङ्गलार्थं प्रभुः प्रार्थितः । अथ जिनेश्वरोऽपि मोक्षमार्गरोधि भोक्तव्यं कर्म भेत्तुं मदनं वशीकृत्य कामास्त्रभूतां प्रमदां करे विधातुं मनो दधे । मलस्वेदप्रभृतिरहितोऽपि विभुर्विधिविदा वासवेन हर्षेण रत्नमयप्रतिमास्थ इवास्नप्यत । भोगफलकर्मविजयोन्मुखः प्रभुश्चन्दनविलेपनव्याजात् सर्वाङ्गीणं धर्ममयं वर्म दधार । ताद्रूप्यमेव धारयद्भिरतिनिर्मलतोयजीवितैर्मुक्ताभूषणैः प्रभोः शरीरकान्तिर्नाच्छादिता बभूव । अतिशयाद्भुतकान्तिर्धृतनिर्मलश्वेतवस्त्रः प्रभुश्चन्द्रिकाच्छादितमाणिक्यगिरिशिखरोपमो रराज । अथ प्रभुर्मधुरमन्दमेगवतं गजपतिमारुह्य क्षीरसागरतरङ्गं बालसूर्यप्रतिबिम्ब इवाचलत् । तत्समये हिमांशुः स्वकलङ्कं दूरीकर्तुमिव किरणसमूहं चामरीकृत्य मण्डलं च छत्रीकृत्य प्रभुमसेवत । कुलबालया वारंवारं कलितो मङ्गलघटः शोभाभिक्षुनिशापतिरिव प्रभोराननाग्रे बभ्राम । परीक्षानिपुणया पुलोमजया लावण्यैकाकरस्य प्रभोर्लवणं वारं वारमुत्तारणीकृत्य परितः प्रोज्झितम् । गूढं तीर्थङ्करस्योत्तमभावमजानतो मूर्खस्य संसारस्य कण्ठगर्जिरिव तत्समये वाद्यनादः प्रादुरभूत् । कूजन्निर्मलमङ्गला देवाङ्गनाः प्रभोः समीपेऽनृत्यन् , प्रभुस्तागामानन्दायेव प्रसन्नमाननं धृतवान् । तदा सहचरीवर्गैः परिवारिता नरयानगा जया वारंवारं निजतनयमुखं पश्यन्ती धवलमङ्गलानगायत् । मनुष्यसंघकृतस्पर्धैधमानप्रमोदो वासवादिभिः सुरैरन्वितो वसुपूज्यो मनोज्ञवाहनस्थोऽग्रतश्चचाल । इत्थं सुधासिक्तैर्नैर्जनानां नयनानि कृतार्थयन् प्रभुर्नक्षत्रेशः पूर्वदिङ्मुखमिव मण्डपद्वारं प्राप । प्रोज्झितकार्यो मुनेरात्मा ध्यानासक्त इव मुक्तवाहनो गगनतरालम्बनः प्रभुस्तत्र तस्थौ । तत्समये तत्तत्कार्यसमूहव्याकुला मदनरेखा तु गानं कुर्वन्तीनां स्त्रीणां मध्ये पृथक्पृथक् ताः प्रमदा इत्यादिदेश । हे हंसि ! मणिभाजनं गृहाण ! हे चम्पिके ! त्वं चन्दनं नय ! हे आलि ! त्वं तण्डुलकणांस्त्यज ! हे धारिणि ! त्वं

हर्षेण श्रीवासुपूज्याय कन्यां दत्तवान् । ततः शुभे दिवसे तया जयादेव्या मदनरेखया च विशदकल्याणैर्गानैर्वैवाहिकं कर्म पस्पृशे । संमर्दभयभीताः षोडश विद्यादेवताः प्रभुं विलोकितुमिव पाञ्चाल्यः स्तम्भाग्रभागानभजन् । समुक्तागुल्ममुक्तामाला-नीलहिमांशूदयव्याजात् प्रभुविवाहे नादपूर्त्यै चन्द्रताराव्याप्तं गगनं प्राप्तमिव । प्रभुं विलोकितुं सोत्सुकानि चत्वारि दिगाननानीव चपलतोरणभ्रुकुटिधारीणि स्तम्भान्तराणि शुशुभिरे । नूतनशरीरवेदिकाच्छलनिधिकलशसमन्विताश्चतसृणां दिशां लक्ष्म्यः प्रभुसेवायै तत्राजग्मुः । वयमपि श्रीवासुपूज्यस्य विवाहोपयोगिन्य इति बद्धैर्यवाङ्कुरैः सपुलका वेद्यो रेजुः । इतश्च विहितमङ्गलाः प्रमदा हैमा-सनोपविष्टायाः पद्मावत्याः सुगन्धिभिस्तैलैरभ्यङ्गं विस्तारयामासुः । प्रभुगुणाश्लेषमङ्गलैरस्या मन इव हर्षितास्ता अङ्गनाः पिष्टात-कैरिमां राजकुमारीमुद्वर्त्तयामासुः । प्रभुपाणिग्रहणे तस्यां नवग्रहसंतुष्टय इव नवसु शरीरेषु निहितमङ्गल्यतिलकाः शुशुभिरे । ततस्ताः प्रमदा भाग्यगृहं तच्छरीरं माङ्गलिकप्रारम्भसूत्रमिव तर्कुकौसुम्भसूत्रेण सव्यापसव्ययोरस्पृशन् । दूरीभूतचापलेयं राजकु-मारी वर्णके ताभिः स्थापिता, हृदये भुवनपतिं ध्यायन्ती योगिनीव शुशुभे । ततस्ताभिरङ्गनाभिस्तादृशानां तद्विधीनामनुवादकर्त्ता वर्णकस्य विवादीव तस्या उद्वर्त्तकः कृतः । ततः प्रभुशरीराभमाणिक्यकलशपूरितैर्जलैः प्रसन्नाम्भवन्त्यस्तास्तां विष्टरान्तरे समुपवेश-यित्वा स्नपयामासुः । ततस्ता मनोहरवस्त्रजलरहितकायकेशामद्भुतैर्धूपैर्धूपितां तां विष्टरान्तरे समुपवेशयामासुः । प्रोज्झितरागेऽपि प्रभावहमनया योजनीय इति विनयवानिव रागोऽलक्तकव्याजात् ताभिरङ्गनाभिस्तच्चरणयोर्लगितः । प्रभुलब्धिप्रकटीभूतैर्देवैरिव सा रा-जतनया ताभिश्चन्दनशुभ्रवस्त्रमौक्तिकालङ्कारैर्विभूषिता । स्वामिभयेन मदनेन बाणा गोपयामासिर इव ताभिः स्त्रीभिस्तस्याः केशेषु पुष्प-माला निदधिरे । इत्थमानन्दरसात् कृतशृङ्गारा सा नृपतनया ताभिरुत्पाट्यान्तर्मातृगृहं नीत्वा स्वर्णविष्टरे न्यवेश्यत । इतश्च वासवोऽव-

ऽस्ति" इति लोकैः पृथुतरमुच्चरिते शुभलग्ने प्रभुः स्वकरेण वधूकरं जग्राह, तथा करसम्पुटे पाकशासनोऽङ्गुलीयकं चिक्षेप । तत्समये बन्दिजनवंशजरत्याशीर्वादमङ्गलगीतिभिरानन्दतुमुलैर्भुवनत्रयं भूर्यपूरि । अथतद्धृदयगुण(तन्तु)समृद्धिवस्त्रयोः सकलस्तारामेलो नयनतेजोरूपहीरतन्तुभिः प्रकटं स्यूततां चक्रे । क्षमया तपोगुण इव जगदत्यद्भुतरूपया तया कन्यया सहितो भुवननाथः प्रकामं रमणीयो बभूव । इन्द्रो भक्त्या प्रभुं कट्यामारोप्य वेदिगृहं प्रति चचाल, तथाचैवं शची वधूमुत्पाट्य तत्समये तत्राचालयत् । अमुक्तहस्तं बद्धाञ्जलं प्रमोदितद्वधूवरं मिलितं यशोदानसदृशं शुशुभे ।

अथ तथा स्थितः प्रभुः शतक्रतुना मङ्गलेपूच्चैर्गीतेषु पूर्वद्वारेण प्रवेश्य तत्र मुमुचे । यथा वासरमणिर्दिवसलक्ष्म्या मेरुं भ्रमति तथा रमण्या सह प्रभुर्मनोहरशिखं कृशानुं परितो बभ्राम । अथ लीलाविलासनृपादेशेन सचिवेश्वरस्त्रिभुवनप्रभोः सुलक्षणांल्लक्षाधिकांस्तुरङ्गानदात् । अथैवं द्वितीये मङ्गले प्रवर्त्तिते सचिवो हर्षेण प्रभोरुन्मदान् परःसहस्रान् हस्तिनो दत्तवान् । ततस्तृतीये मङ्गले प्रवर्त्तिते मन्त्री प्रभवे कोटिमूल्यान् परःशतानलङ्कारसमुदायानयच्छत् । ततश्चतुर्थे मङ्गले पूर्णे सचिवो लक्ष्मीक्रीडाचलान् काञ्चनमौक्तिकमाणिक्यसमूहान् प्रभोरदात् । अथ चतुर्थे मङ्गले जाते तनया परकीयेति निष्ठुरे गीते कन्याजननी स्वजाड्यविनाशाय तत्समानन्दाश्रु दधौ । अथ तत्समये समुत्पन्नहर्षैर्वरवधूसमाश्रितैः प्रमदालोकैः परस्परं कौतुकमङ्गलोद्गानं चक्रे । अथ मनोज्ञानीतदानयानिकान् कृतार्थयञ्छक्रो वरवध्वोः पाण्यञ्चलप्रोज्झनं चकार । सचिव आनन्दादभिवाद्य करप्रोज्झनपर्वणि कोटिद्रव्यदातारं देशं प्रभवेऽयच्छत् । अथ हावभावजायमानभङ्गीसङ्गीतविभुयशसो देवदानवमनुष्याङ्गना निजनिजानन्दैरनृत्यन् । अथ कृतानुपममङ्गल्यः प्रभुः स्त्रिया सहैरावतं गजमारुह्य महोत्सवैर्निजस्थानं प्रति चचाल । अथ पत्नीयुतः प्रभुः पञ्चमहाशब्दैरागच्छतीत्यौ-

दधि धारय! हे तरले! त्वं कौसुम्भं वस्त्रं सरलं प्रगुणीविधेहि! हे मदने! मम मुखे स्थाने त्वं तिलकं विधेहि। हे मुखरे! त्वं शेखरं देहि! हे सज्जने! त्वं मालाः सज्जय! हे कर्पूरे! त्वं घनसारं यच्छ! हे मृगि! त्वं कस्तूरीं स्मर! यूयमेवं शिथिलगमनाः कथम्? किमत्र न विलोकयत? नन्वत्र त्रिभुवननायको वरो द्वारि दृश्यते। अथ कापि प्रमदा प्रभुलावण्यशरीरकान्तिस्पर्धिनौ लवणकृशानू वर्धमानकसमुद्गके क्षिप्त्वा द्वारि तत्याज। काऽपि रमणी प्रभुविवाहमहे संक्षिप्तसमागतनीलकमलफेनभरितं मानससरःसदृशं दूर्वादधिशुभं भाजनं धृतवती। कर्माणि मथितुं भंक्तुं विभोः शरीरिणी शक्तिरिव काचिदङ्गना हस्ते मन्थानं मुसलं च गृहीत्वाऽग्रतस्तस्थौ। अथ श्वश्रूः श्रीजिनेश्वरप्रभोः समस्तकेषु नवसु शरीरेषु निधिलक्ष्मीनां नवानां दर्पणान्निव चान्दनान्नव तिलकांश्चकार। हे अर्घदे! पूज्याय वरायार्घ्यं यच्छ! इति पृथुनादैर्धवले गीयमाने सा प्रभोरित्यर्घं ददौ। भुवनानां मङ्गलस्यापि प्रभोः सा दूर्वादध्यक्षतैर्मङ्गलं चकार, यतो जनानामाचारो महान् भवति। अथ सोत्तरीयकौसुम्भवस्त्राच्छादितवदनेन मथा च मुसलेन च प्रभोर्मस्तकं त्रिवारं पस्पर्श। अथ त्रटत्रट् इति शब्दं विस्तारयन्तं लवणवह्निपूरितं शरावसंपुटमुत्तार्य सा प्रभोः पुरतस्तत्याज। ततः प्रभुः सपादुकेन वामेन चरणेन तच्छरावसंपुटं बभञ्ज। यतो भुवनजीवातोर्वार्योर्बुद्बुद्भञ्जने का त्रपा भवेत्! ततस्तया मदनरेखया कण्ठे कौसुम्भं दुकूलं क्षिप्त्वाऽऽकृष्य च प्रभुः शीघ्रं मातृगृहं नीतः। अत्र श्वेतवसनाच्छादितशरीरो विभुः काञ्चनकमले मराल इव मातॄणां पुरतः काञ्चनमये विष्टरे समुपाविशत्। ततः शतक्रतुर्मदनराजशोभाविधानमुद्रोपममदनसमन्वितं कङ्कणं वरवध्वोर्दक्षिणे हस्ते बबन्ध। तत उच्चैः कृतधवलवसनतरङ्गप्रकटीभूतवदनारविन्दयोस्तयोर्वरवध्वोः परस्परं निभालनमभूत्। एकत्रसमुत्पन्नयोः शमीपिप्पलयोस्त्वचौ पिष्ट्वा सभर्त्तिका अङ्गना वधूकरे हस्तालेपनमकार्षुः। लग्नस्य सामीप्येन कोलाहले निवारिते "समयः समयो-

प्रभुः कर्मनिर्जरां रचयामास। भुवनसुहृदो भुवनसेवनीयस्य प्रभोर्विशेषज्ञाः षट्शतानि विशेषेण सुहृदः सेवकाश्चाभूवन्। यथा संसारिणः शरीराणि तथा ते राजानः सेवका आसने, क्रीडने, गमने, अवस्थाने, शयने भोजने च तीर्थङ्करस्य समीप एव तस्थुः। सुवर्णकेतकसङ्गात् वस्त्राणि यथा सुगन्धिवन्ति भवन्ति तथा ते राजानः सेवकाः प्रभ्वासत्तेर्विशदगुणवन्तः सुदर्शनाश्च बभूवुः। तथा चाद्भुतपराक्रमाश्चैतांस्तत्त्वानि बोधयन् प्रभुः प्रेममनोहरान् दिवसान् सुखेन व्यतीतांश्चकार। अथैकदा मातापित्रोर्लोकस्य चानन्दाय ससुहृत् प्रभुर्वसन्तोत्सवं विलोकितुं क्रीडोद्यानमगच्छत्। चञ्चत्तिलकवृक्षपरागद्रवपृथिवीसेककार्यैः, सिन्धुवारपुष्पविस्तारमुक्तास्वस्तिकश्रेणिभिः, उड्डीनसहकारकिञ्जल्कतरङ्गविस्तारगन्धवृष्टिभिः, लीलापर्वतनिर्झरोद्गारवाद्यमनोहरशब्दैः, पवनकम्पितलताकिसलयनर्त्तनैः, बकुलामोदमत्तचञ्चरीकराजिवेणुमधुरशब्दैः, कोकिलकामिनीकुहूकारपञ्चमोच्चारगीतिभिः, शब्दायमानशुकमहाबन्दिसमूहजयघोषणैः, मनोहरचम्पकप्रफुल्लकुसुमारात्रिकमङ्गलैः, मलयपवनसंश्लिष्टपाटलाञ्चलवीजनैः, पलाशाञ्जनवासन्तीविचित्रन्युञ्छनकैराग(?)मलक्ष्मीः प्रविशतो भुवनपतेर्महोत्सवं चकार। क्रीडोद्याने प्रसर्पन्ती निसर्गचपला प्रासादनिर्मला प्रभोर्दृष्टिः पीयूषवृष्टिरिव शुशुभे। अथ निजशरीरद्युतिभिरास्तम्भात् तस्याशोकवृक्षस्य पल्लवान् विस्तारयन् प्रभू रक्ताशोकस्य तले विष्टरे समुपाविशत्। तदा पुष्पालङ्कारैरत्यन्तं विभूषितः प्रभुरदीनशरत्कालीननीरदपङ्क्तिर्मणिपर्वत इव रराज। प्रेङ्खाजलक्रीडाशृङ्गाररसभरितगीतिभिर्लोकं प्रमादिनं दृष्ट्वा प्रभुरेवं विचारयामास। अहो! सकलज्ञाननाशकारी कियान्मेष मोहः? यस्य प्रभावात् सांसारिकाणां हृदयेऽसद्भावाः सद्भावा इव लक्ष्यन्ते। प्रेङ्खास्थितां कामिनीं विमानस्थां देवीमिव पश्यन्ति, परन्तु मोहान्धा धैर्यनाशिनीं पाशबद्धामिमां शिलामिव न पश्यन्ति। मुग्धबुद्धिर्जनः स्वं प्रेङ्खान्दोलितं जानाति परन्त्वित्थं न वेत्ति यत् 'किंकर्मायं? क्व गतौ नेयः?'

त्सुक्येनापूर्णशृङ्गाराः पौरप्रमदा अधावन्। अद्भुतशरीरशोभस्य प्रभोर्न्युञ्छनं विधातुमिव कापि प्रमदा पाणावुत्तरीयं विदधती सत्वराऽऽजगाम। कुण्डलरहितः कुण्डलवान् वा कर्णः मनोज्ञः? इति विभुं प्रष्टुकामा इव कापि सुश्रवणा कुण्डलैकयुता समाययौ। शृङ्गाररसो नीचैः शान्तरसस्तूच्चैरस्तीतीव कापि रमणी रभसा कस्तूर्या वदनं चन्दनैर्मस्तकं चालिप्य प्रभोरिष्टं चकार। श्रीअरिहन्तुः सदृशः कोऽपि नास्तीत्यर्थं काप्यभिमानिनी प्रमदा कृष्टफणिहस्तेव वेणीगुम्फनतत्परा समाययौ। कापि स्त्री शृङ्गाररससमूहावधिं प्रभोर्ज्ञापयन्तीवौत्सुक्याद् यावकभ्रमेण नीचोष्ठेऽञ्जनं दधार। कापि योषिदस्त्रकरा कामदेवस्याज्ञेव रभसावेशात् कण्ठयोग्ये कुसुममाल्ये पाणिस्थिते विभोरग्रे समाजगाम। कापि सुदती रभसा विस्मृतहारापि वैरूप्यं नाभजत्, यत्प्रभुदर्शनानन्दहास्यैस्तच्छोभां धृतवती। अथैवं नगरे प्रमोदसन्दर्भं धारयन् प्रभुर्यथा योगी निर्मलं ध्यानं प्रविशति तथा कान्तायुतः सौधं प्रविवेश। ततः पुरन्दरो भक्तितः प्रभुं प्रणम्य चारुवदनां जयादेवीमापृच्छ्य मुदा विहितोल्लासो निजावसथं जगाम। अथो प्रभुजनकः परान् संख्यातीतान् काञ्चनहीरमाणिक्यमौक्तिकालङ्कारान् पद्मावत्यै ददौ। परस्परं भोजनवसनताम्बूलाभरणप्रभृतिप्रदानतस्तथा विवाहोऽभूद्यथा लोक उपमापि नास्ति। ततो वसुपूज्येन राज्ञा लीलाविलासो धराधवः काञ्चनतुरगगजस्यन्दनवस्त्रैः सन्मान्य निजदेशं प्रति प्रहितः।

अथ ज्ञानत्रितयदृष्टिभिर्विलोकितभूतभवद्भाविभावोऽपि भ्रान्तिरहितोऽपि श्रीवासुपूज्योऽसौ मनसा संसारसागराल्लोकानुद्धर्तुं गृहीतप्रयत्नोऽपि मुक्तिलक्ष्मीसमालिङ्गनप्रारम्भे संरम्भवानपि परं भोगफलं कर्म भोक्तव्यमिति निश्चयात् किञ्चित् संसारव्यापारकरणं मनो व्यधात्। कदाचिन्मनोहरोद्याने, कदाचिन्नदीतटे, कदाचित् क्रीडापर्वते, कदाचिच्चित्रशालासु, कदाचित् प्रमदानन्दान्वितरासक्रीडादर्शने, कदाचित् किन्नरीमनोहरगीतश्रवणकौतुके, कदाचित् पुरन्दरादिष्टदेवीघटितनाटके, त्रिदशैर्वन्दितः

कीनं मानसं क्रीडोद्याने तुष्टिं न प्राप, ततो मामिदानीमात्मारामायानुजानीतम्! सरलतोज्ज्वलमानसौ तौ सर्वज्ञं प्रभुमूचतुः-हे वत्स! आत्मीय आरामः कः? यत्र तावकं मनो रमते। वासुपूज्य उवाच-हे मातः! हे पितः! कश्चिद्वृक्षाणां समूहं स्वं न वदामि, यतः शरीरमपि स्वं न भवति शेषवस्तुषु का कथा? विषयकषायरहितमिष्टानिष्टे तुल्यं निर्मलध्यानवद्गुलयं मन एवामुमात्मारामं कथयामि। मम मानसं तत्रात्माराम आसक्तं, तत् तु दीक्षया लभ्यते, ततो यदि युवयोरहं प्रियोऽस्मि तद्दीक्षायै मामनुजानीतम्! श्रवणकटुकं प्रभोः पटुकं तद्वचनं निशम्य मातापितरौ सञ्जातमूर्च्छौ पृथिव्यामपतताम्। ततः शीतलोपचारेण बहुकालानन्तरं लब्धचेतन्यौ विहितानेकसंकल्पौ तावनल्पमवदताम्। हे वत्स! सकलानन्ददातुस्त्वत्तोऽस्मासु दुस्सहा वाणी कथमभूत्? यद्वा कदापि नीरदादपि क्वापि सौदामिनी पतेत्? हे पुत्र! इत्थं नूतने वयसि दीक्षार्थं कथयन् भवान् प्रातःकाले वैकालिकं याचन्निव बालकानां हास्यपात्रमभूत्। श्रीनाभेयादिभिरेकादशभिस्तीर्थङ्करै राज्यं कृत्वा व्रतं स्वीकृतं, तेऽपि च मोक्षमलभन्त। त्वं तु द्वादशस्तीर्थङ्करो नूनं मोक्षं लप्स्यसे तदूर्ध्वं तु नास्ति गतिरिति विपुलसुखदं राज्यं भजस्व। अथ जिनेश्वरेण प्रभुणा मातापित्रोः प्रबोधिनी दशनकिरणमुक्तामालालङ्कृतोत्तमा वाणी कथ्यते स्म। यथा सूर्यप्रभा नयनरोगिणां व्यथाकारिणी तथा यन्मामकीना भारती परममोहान्धकारादितचेतसां दुस्सहेति सत्यम्। नूतने वयसि या दीक्षा सा सज्जनानां नैव हास्याय स्याद्, यतो विद्वद्भिरमृतपानेऽवसरोऽपि न दृश्यते। भोगफलं कर्म भोक्तुं पुरा जिनेश्वरै राज्यं कृतं, मम तु तदेव कर्म छिन्नं, तद्राज्ये कृते न किमपि फलमस्ति। राज्येऽपि सुखं नास्ति, यत ऐश्वर्यप्रमाणतो दुःखं, यतो रसात्यन्तानुमानेन व्याधयो तुदन्ति। अतो हे पूज्यौ! मोहं दूरीकृत्य व्रतं कर्तुं तत्परं मां सर्वथैवानुजानीतम्! इहार्थे कृताञ्जलिरहमस्मि। इत्याकर्ण्य सत्त्वरहिता जयादेवी लज्जां त्यक्त्वा रभसा तथा

इति विधात्रा तुलाधृतम् । मूर्खा जना अश्रुजलरक्तं स्वकामिनीनयनं "प्रेमसागरतरङ्गः" इति विदन्ति, परन्तु प्रमादवह्निदग्धस्य पुण्यगृहस्य ज्वालां न जानन्ति । मनुष्यः स्वशरीरे क्रीडानीरकणान् मुक्ता विदन्ति, परन्तु विषयैस्तप्ते कल्याणशरीरे "एतद्व्रणसमूहः" इति न जानन्ति । स्वल्पबुद्धिमाञ्जनो गीतं मदनास्त्रटङ्कार इति वदति, परन्त्वित्थं न जानाति यत् स नरकद्वारकपाटोद्घाटननादः । गीतगाने प्रशंसायां मूर्खैः शिरःकम्पो विस्तार्यते, परन्त्वयं प्रमाद इति निषेधे शिरःकम्पः कथं न ज्ञायते ? भुवनत्रयसमृद्ध्यापि मानुषं जन्म न लभ्यते, तदित्थं मानुषं जन्म व्यर्थं हार्यते, अहो ! इह जगति मोहः खलु महान् तदेवं सर्वथा संसारो मूर्खजनविस्तारितोऽहतात्मनां महतामयं त्यक्तुमेवोचितः । तदद्यापि मदीयमिदं भोगफलं कियदस्ति ? इति ततस्तत्र प्रभुः स्वकीयमवधिज्ञानं प्रथितवान् । अथ जन्मतोऽष्टादशसु वर्षलक्षेषु व्यतीतेषु कर्मभोगफलं भुक्तमित्यवधिज्ञानतस्तदा मत्वा जितमदनो जयातनयः श्रीवासुपूज्य उच्चैर्मोक्षस्थानारोहणैकसोपानां दीक्षां ग्रहीतुकामोऽभूत् । अथैतस्मिन् समये ब्रह्मलोकाभिधपञ्चमदेवलोकात् सम्यक्त्वपरिणामा महासमृद्धिवन्तो लोकान्तिकनामानो देवाः स्वस्वविष्टरकम्पेन क्षणात् प्रयुक्तावधिज्ञाना विदितद्वादशतीर्थङ्करश्रीवासुपूज्यव्रतसमूहाः क्रियाविदः, सारस्वताः, आदित्याः, वह्नयः, वरुणाः, गर्दत्तोयाः, स्तुषिताः, अव्याबाधनामानो, मरुतो, अरिष्टाभिधाना एते नव त्रिदशसमूहाः समागत्य प्रभुं भक्त्या प्रणिपत्य विज्ञापयामासुः । हे तीर्थनाथ ! संसारसमुद्रे मग्नाञ्जीवानुद्धर्तुं परैरहतं निर्मलं धर्ममयं तीर्थं प्रवर्त्तय ! इति । अथ विदितकृत्यमपि स्वामिनमेवं निवेद्य प्रणम्य च प्रसन्नचेतस एते त्रिदशा यथास्थानं ययुः ।

अथ दीक्षाग्रहणेऽभिलाषुकः प्रभुः क्रीडोद्यानात् स्वावसथं समागत्य मातापित्रोः समीप इदमुवाच–हे मातः ! हे पितः ! माम-

कालपर्यन्तं साष्टलक्षामेकां स्वर्णकोटिं प्रतिदिवसमदात्। इति प्रभुरष्टाशीति कोटिभिः सहितं कोटिशतत्रयं लक्षाशीतिं च सुवर्णं वर्णनैकेन दत्तवान्। अथ तद्दानान्ते त्रिदशपतयोऽत्युत्सुकाः समागत्य महोत्सवेन प्रभोर्दीक्षाभिषेकं चक्रुः। पुरन्दराः सकलतीर्थानीतैर्जलैः प्रभुमभ्यषिञ्चन्त, परं चित्रं यदात्मानं पवित्रयामासुः। अथ वासवेनाहृतानि हृदयभक्तितेजोवन्ति दिव्यवसनाभरणानि प्रभुः पर्यधत्त। तत्समय एव स्फुरदुपक्रमो वासवस्तेजस्तिरस्कृतभास्करकान्ति पृथिवीनाम्नीं माणिक्यशिबिकां निर्ममे। अथ त्रिभुवननाथः संसारसागरकूलस्थल्यामिवानन्यकान्तिमनोहरायां तस्यां शिबिकायां चरणमदात्। अथ स्वभावविशदस्तीर्थपतिधर्मो विवेकमिव भुवनपापनाशकः प्रभुः सिंहासनमारोहत्। अथ श्रेष्ठशृङ्गारैः सुवंशसमुत्पन्नैर्भक्तिदेदीप्यमानैः सहस्रसंख्यैर्मनुष्यैः सा शिबिकोत्क्षिप्ता। क्षणात् तस्यां शिबिकायां पूर्वस्मिंस्त्रिदशा दक्षिणे दानवाः पश्चिमे गरुडास्तयोत्तरे पार्श्वे नागा अलगन्। तत्समये भम्भादुन्दुभिनिःस्वानभेरीशङ्खादिवाद्यपुरस्सरं महामनोज्ञनादं वाद्यं वादयद्भिः कैश्चिद्, अघसंसारनामा रिपुर्जितो जित इति महाहर्षेण निजनिजायुधोल्लासलालसैरग्रगमनशालिभिः कैश्चिद्, विभुसेवया सुकृतवर्णिकां दर्शयद्भिरिव धवलां छत्रपरम्परां धारयद्भिः कैश्चिद्, उद्दामचामरपवनसमूहदूरप्रसर्पणैः सुकृतसागरमुत्तरङ्गं विस्तारयद्भिः कैश्चिद्, उत्तालव्यजनाग्रजाग्रत्पवनमनोहरैर्मोहस्य प्रतापप्रदीपं निर्वापयद्भिरिव कैश्चन, श्यामभ्रमरपातेन विश्वासप्रसवनीरिव पातकसमूहानां वागुरा इव माला धारयद्भिः कैश्चिद्, दर्पपीयूषगण्डूषसदृशस्तवनलीलयोच्चैः स्तुतिं कुर्वद्भिरपि कैश्चिद्, दैवदानवमनुष्यैः परिवारितो जीव! नन्द! जय! इत्याशीर्गण्या नागरिकलोकैः स्तुतः प्रभुर्विहारगृहाभिधानमुद्यानमयासीत्। पूर्वपर्वताद् भास्वानिव यानादुत्तीर्य प्रभुर्बाल्यरागमिवालङ्कारसमूहं त्यक्तुमारेभे। वराको भूषणवर्गो ममैकाकी त्यक्तुं नोचितमितीव तीर्थङ्करेण तत्समये ससहायोऽलङ्कारवर्गो

रुरोद यथा चित्रस्थानपि जनानरोदयत् । अश्रुसंरुद्धकण्ठा जयादेवी प्रभुं क्रोडस्थं विधाय हस्तेन स्पृशन्ती गद्गदस्वरमुवाच–हा पुत्र ! मयि तत् तावकं वात्सल्यं क्षणादेव क्वनु गतं ? यत् त्वमेवं व्रतदीक्षावार्त्तया मामकं स्वान्तं दारयसि । मालतीकुड्मले कुकूलवह्निमोचनं किमुचितं ? अथवा क्वचित् कमलिनीदण्डे क्रकचदारणमुचितम् ? क्षौमवस्त्रे कर्करसमूहबन्धनं किमुचितं स्यात् ? अथवा नयने विपुलमरिचचूर्णस्य प्रक्षेपः किमुचितः ? काचकलशे किमु हठान्मुद्गरताडनमुचितं ? वा रम्भास्तम्भगर्भे किं कृपाणघातपातः सज्जनानां मान्योऽस्ति ? हे कुमार ! शिरीषकुसुमाग्रसुकुमारेऽत्र तावके शरीरे केशलुञ्चनादीनि कष्टानि किमिष्टानि ? अथ जिनेश्वरः पीयूषमनोज्ञं भुवनतापहरं वचनमुवाच–हे मातः ! साररहितैरेभिः कुविकल्पैः किं दूयसे ? तीर्थङ्कराणां शरीरेषु कुलिशेष्विव वाह्यस्पर्शे लोकोत्तरा सुकुमारता, तथाऽन्तरङ्गं सारत्वं स्थिरं जायते । इत्याकर्ण्य प्रभोर्दीक्षाग्रहणे निश्चयं ज्ञात्वा वसुपूज्यभूपो भगवदर्चनीयां जयादेवीं बभाषे । देवि ! त्वामेव जगत्त्रये धन्यां मन्यामहे, यस्यास्तनयो देवासुरमनुष्याधीशपूजनीयो जिनेश्वरोऽभूत् । ततः साम्प्रतं स्वीयसुकृतैकप्रासादस्य प्रभुदीक्षानुमत्या त्वमाश्चर्यकरं कलशारोपणं विधेहि ! एवं कथिता मुक्ताद्युतिनिर्मलवंशवती जयादेवी बभाषे । मम तनयस्येष्टं भवतु ! एतावताप्यहं प्रसन्नाऽस्मि । ततः कृताञ्जलिः प्रभुस्तावापृच्छ्य हर्षतः सकलतीर्थङ्कराणां मतं सांवत्सरिकं दानमारेभे । स जिनेश्वरः समुद्रपर्यन्तं पृथिवीतले संकोचरहितं दानं दातुं स्वसेवकान् क न कल्पवृक्षीचकार ! यस्मै यद्रोचते तेन तद् ग्राह्यमित्युद्घोषिणः काञ्चननीरदाः प्रभुसचिवाः : पृथिव्यां ववृषुः । नष्टप्रभूणि, क्षीणानि, प्रभ्रष्टानि, चिरादपि क्षेत्र–श्मशान–गृहादिपृथिवीखातगतान्यपि, पर्वतकुञ्जेष्वेकत्रीभूतानि, अथवा यत्र तत्र स्थितानि, अतिनष्टसेतूनि, सर्वथाक्षीणध्वजानि, काञ्चनरत्नधनानि वासवादिष्टकुबेरनियुक्ता जृम्भकत्रिदशाः प्रमोदानेऽपूरयन् । प्रभुर्वासरोदयादारभ्य भोजन-

नाम तुभ्यं नमो नमः। हे स्वामिन्! कृपापीयूषवृष्टिभिः सिताभिर्दृष्टिभिर्ज्वलत्संसारदावानलशिखादाहिनोऽस्मान् रक्ष! रक्ष! इति भुवनार्च्यं श्रीवासुपूज्यं स्तुत्वा देववराः प्रभोर्मातापितरौ लोकांश्च संबोध्य नगरे तत्यजुः। अथ ते स्वर्गधामशिरोमणयो वासवा जन्माभिषेकवत् कृतनन्दीश्वरद्वीपोत्तमोत्सवाः स्वं स्वं स्थानमगच्छन्।

अथापरे दिवसे परमेश्वरो दृष्टिपवित्रेण मार्गेण पारणाय महापुरं नाम नगरं जगाम। उद्यन्तं वासरमणिमिवायान्तं प्रभुं विलोक्य प्रेम्णा नागरिकाः कृतकोलाहलाः पक्षिण इव समुत्पेतुः। ततस्तद्वृत्तान्तं ज्ञात्वा हर्षितः सुनन्दनामा वसुधाजानिस्त्यक्तच्छत्रोपानत् त्वरमाणः प्रभुमभ्याययौ। पुण्यवान् प्रभुदर्शनात् पुण्यसागरस्नातः स सुनन्दः प्रभुचरणकमलमार्जनैः केशान् सुगन्धयामास। अथ कृतकृत्योऽसि, धन्योऽसीति कथयता तेन सुनन्देन परमान्नेन परमेश्वरः पारणं कारितः। चन्द्रधवलं पायसं कराभ्यां गृह्णन् प्रभुः सुकृतवृक्षस्य कन्दमिव सुनन्दायादर्शयत्। तत्समये सुनन्दविपुलसुकृतसमुद्रतरङ्गशब्दमनोहरा मधुरशब्दा दुन्दुभयो गगने नेदुः। तदुत्सवोल्लासितसुरभ्रष्टाभरणवसुधेव कापि रत्नवृष्टिः सुनन्दनृपगृहे बभूव। तत्समये तमाश्चर्यकरं दातारं पूजयितुमिव कल्पतरुनायकदेवैः कल्पिता गगनात् कुसुमवृष्टिरभवत्। सुनन्दयशःकम्पितानां कल्पवृक्षपुष्पमालानां पुष्परसैरिव गन्धोदकैराकाशाद् वृष्टिरभूत्। श्रीसुनन्दभूपकीर्त्तितरङ्गश्रेष्ठवसनसमूहो वासवादिभिः सुरैराकाश उत्क्षिप्तश्चलाञ्चलः। इत्थं महतोत्सवेन कृतपारणो भुवनत्रयपतिः प्रभुर्यथेच्छमन्यत्र जग्मिवान्। अमेयमाहात्म्यशालिनीयं धरा नरैर्मा लङ्घतामिति विभोः पारणपृथिव्यां राजा रत्नपीठमकारयत्। ब्रह्मव्रतं यथा साधुगुणा अनुगच्छन्ति तथा ते सुहृन्मुनयो

इत्थं मुमुचे। प्रभुः पूर्वं छत्रच्छायास्पृहया सह मुकुटं तत्याज, ततः स्नानमनोरथैः सहितं संयतकेशगुम्फितकुसुमसमूहं मुमोच। ततो जिनेश्वरो मनोज्ञश्रवणकुतूहलैः सह कर्णभूषणे मुमोच, ततो दुष्टवचनसमन्वितं ताम्बूलं सपदि तत्याज। मुमुक्षुभूपालः प्रभुर्बन्धुप्रेमयुतं हारमुत्तारयामास, तथा बाहुगर्वेण साकमङ्गदौ तत्याज। ततो जिनेश्वरः प्रभुः शस्त्रग्रहणादरैः सह हस्तभूषणानि तत्याज, प्रणतसमूहमोहेन सह च चरणभूषणं तत्याज। इत्याभरणत्यक्तोऽपि भगवान्नधिकं रराज, चन्दनादिविलेपनं रत्नस्य कान्तिं हन्त्येव। मुक्तपट्टवस्त्रो व्यक्तशरीरोऽपि तीर्थङ्करो नीरदत्यक्तः सूर्य इव भुवनलोचनान्यानन्दयञ्छुशुभे। ततः पुण्यस्य रहस्यमिव सूक्ष्ममतिधवलं सरुग्देवदूष्यं नाम वस्त्रं प्रभोरंसदेशे पुरन्दरो न्यधात्। अथ प्रभुर्विपुलाश्रुसमूहरुद्धनयनां जयादेवीं वसुपूज्यं च सविनयं मधुरवचनैरापृच्छ्याथ फाल्गुने मासे वारुणे नक्षत्रे पूर्वाह्णेऽमावास्यातिथौ, चतुर्थतपसा षड्भिः सुहृच्छतैरन्वितः प्रभुर्दुःखफलदानां विषयतरूणामङ्कुरानिव केशान् पञ्चभिर्मुष्टिभिरामूलादुन्मूलयामास। ततः सौधर्मेन्द्रः प्रभोस्तीर्थत्वकारणं केशसमूहं वस्त्रेणालम्ब्य नीत्वा क्षीरसमुद्रे चिक्षेप। अथ नयननिमेषोन्मेषसदृक्षयानायानवेगेन वासवेन प्राणिनां कोलाहले निवारिते समग्रसावद्ययोगं प्रत्याख्यामीत्युच्चारितवचनः कृतसिद्धनमस्कारः प्रभुर्मनोहरचारित्रमङ्गीचकार। तालवृन्तैकभ्रमणसमुत्पन्नेन पवनेन परिश्रमव्याकुलैरिव तीर्थङ्करदर्शनेन क्षणं नारकैरपि सुखं प्राप्तम्। दीक्षया सस्पर्धमिव प्रभोर्मनुष्यक्षेत्रमनोद्रव्यप्रकाशकं मनःपर्यायं ज्ञानमुत्पन्नम्। ततो निर्मिताञ्जलयो वासवप्रमुखा देवश्रेष्ठा भुवनपतिं श्रीवासुपूज्यं प्रणम्य स्तुतिं चक्रुः। हे लोकत्रयपते! हे लोकत्रयगुरो! जय! हे लोकत्रयध्येय! जय! हे लोकत्रयप्रिय! जय!। पापकर्दमश्रेणिमज्जत्प्राणिसमूहोद्धारसमर्थं तथा कालपङ्के मज्जन्तं धर्मं भवानुदुद्धृतवान्। यः स्वामिनामपि स्वामी, यो गुरूणामपि गुरुः, यो देवानामपि देव-

# ॥ श्रीवासुपज्यचरित्रम् ॥

## [ षष्ठा भागः ]

अथेतश्च शत्रुतृणसमूहे वायुवद्वेगं वहन् पृथ्वीपुराख्ये नगरे पवनवेगनामा राजा बभूव। अखण्डपुण्यशाली स राजा पृथिव्याः खण्डं रक्षन् मित्राणाममित्राणां चानन्दं दत्तवान्। समये प्राप्ते श्रमणसिंहनाम्नो मुनेर्व्रतमादाय तीव्रं तपस्तप्त्वा सोऽनुत्तरं विमानमलभत। इतश्च जम्बूद्वीपालङ्कारेऽस्मिन् दक्षिणे भरतार्धे निश्चललक्ष्मीकं विन्ध्यपुरं नाम नगरमस्ति। तत्र सफलशक्ति-र्विन्ध्यशक्तिर्नाम राजा बभूव, यस्मिन् धनुः प्रविशद्विजयलक्ष्मीद्वारतां दधार। यस्य राज्ञः प्रतापसमूहपीडिता भूपानां राजयो यत्कृपाणगर्भे गम्भीरजलभ्रान्त्या समुपेत्य पेतुः। समरनश्यच्छत्रुराजिवरासमूहतिरस्कृतैर्लज्जयेवावनतवदनैर्यस्य तुरगैरशोभि। अथ कदाचित् सभानिषण्णममुं वसुधाधवं प्रतीहारविज्ञापितः कश्चिद्दूतः समागत्य विज्ञापयामास। हे राजन्! त्वं वेत्सि, इहैव भरतार्धे पृथिवीमुकुटोदयेन समुत्पन्नं साकेतमिति नाम्ना प्रसिद्धं नगरमस्ति। तत्र नगरे समरकीर्त्तिविस्तारनिर्झरः शौर्यलक्ष्मीक्रीडा-जङ्गमगिरिः पर्वताभिधानो नृपोऽस्ति। कृतान्तमृत्युद्वयीधारावान् कालो यस्य कृपाणलं बिभ्रदहतोदयो हन्त! शत्रून् यथेच्छं

खलब्ध्याऽन्यत्रविहितपारणाः प्रभुमनुययुः। क्षमाचरो जिनेश्वरोऽपि कर्मशत्रूणां जयं विधातुमसिधारावत् तीव्रं तपः कुर्वन् वसुधायां विजहार॥

॥ इति श्रीवर्द्धमानसूरिकृतस्य पद्यमयस्य वासुपूज्यचरित्रस्य संस्कृतगद्यानुवादे

पञ्चमो भागः समाप्तिमफाणीत्॥ श्रीरस्तु॥

[पद्यमयस्य मूलग्रन्थस्य द्वितीयः सर्गः समाप्तः]

त्रीन्। ततो बलाद् दैवमपि शीघ्रं दुर्बलं गणयन्नसौ भूपस्तत्समय एव रजसाच्छादिताकाशं प्रयाणमकार्षीत्।

अथ सैन्यप्रयाणचूर्णीकृतमार्गगिरिर्धैर्यसागरमकरः पर्वतनृपोऽपि रंहसा प्रतिप्रयाणं व्यधात्। अथ चलद्भिर्ध्वजवस्त्राग्रैः परस्परमपि तर्जयन्तौ वर्धितोत्साहौ सैन्यसागरौ तौ योद्धुं समाजग्मतुः। क्षणं तयोः पृथिवीपरिवृढयोरनुत्पन्नजयपराजयानि घोटकगजस्यन्दनपदातीनां द्वन्द्वयुद्धान्यभूवन्। चिरकालादभिलषितायां संग्राममलक्ष्म्यां सञ्जातसंगतौ शूरैश्चिरसञ्चितरागवद् रुधिरं व्यलोकि। वीरसमूहानां कार्यवारंवारमभ्युत्पत्य प्रहाराणामापतन् समूहो यथेच्छं कवलीकृतः। लुब्धा धनसमूहामिवान्येषु परिपातिनः शत्रुमभूतप्रहारानपि स्वस्मिन्नैवैच्छन्। अपसृत्यापसृत्य शीघ्रं शत्रुषु प्रधावन्तो वीरा विजयलक्ष्म्याः प्रेङ्खाक्रीडाकुतूहलं पूरयामासुः। भुजघनस्य परस्परं संभृत्य कर्षतोर्भुजयोरिव बलवतोः सैन्ययोरिति सदृश एव विजयोऽभूत्। ततो गर्वात् सर्वविधाभिसारेणोत्तिष्ठमानः पर्वतभूपः शत्रुसमुद्रमभिमानतरङ्गरहितं चकार। तेजोवह्निं ज्वालयन् स्वयंपाकव्रतकारी काल इव स पर्वतः शस्त्रैः पशूनिव शत्रुवीरान् खण्डशो विदधञ्जुशुभे। ततः संकीर्णयमराजमुखं शत्रूणां संहारं विदधन् कोपितो विन्ध्यशक्तिरपि युद्धभूमावधावत्। चूर्णीकृतसकलसैन्यौ प्रचण्डबाहुबलौ भ्रुवैव परस्परं तर्जयन्तौ तौ द्वौ गर्जन्तावभिययतुः। यथा विशालौ पर्वतौ तथा तौ परस्परं स्यन्दनगारथिघोटकानाममन्थरं कदनं प्रथयित्वा वसुधायां तस्थतुः। स्यन्दनान्तरोपविष्टावत्यन्तहर्षपराक्रमौ कोपेन तेजस्तेजयन्तौ तौ वीरौ विजयाय युयुधाते। विन्ध्यशक्तिना राज्ञा संग्रामे पर्वतको भूपो निर्जित इति युक्तं, परन्त्वाश्चर्यं यत्पलायमानोऽपि स पत्नं जिगाय। अथ महागजकुम्भस्थलमनोज्ञपयोधरोज्ज्वला तस्य पर्वतस्य लक्ष्मीरिव सा गुणमञ्जरी विंध्यशक्तिना भूपेन गृहीता। अथ सर्वतो गर्वरहितः स कृती पर्वतो राजा संभवनाम्नः सूरेः संसारवासनारहितकरं व्रतमङ्गीचकार। जन्मान्तरे विन्ध्य-

हन्त्येव। यस्य सेना, घोटकचरणसमुद्भवै रजोभिः करिसमुद्भवैश्च मदजलैः सागरस्यापि संहारसृष्टिकारिणी राजते। राज्यलक्ष्मीभाग्यश्रेष्ठमीदृशं तं राजानं नयनकटाक्षैणैवात्यन्तं दीनं कुर्वन्ती "गुणमञ्जरी" नाम्नी वेश्या तस्य प्रियतमाऽस्ति। यां वेश्यां विरचय्य ब्रह्मा सागरे करौ क्षालयामास, तत्र सागरे विविधमणिसमूहव्याजात् तन्मलमिति वेद्मि। अहो! यद्द्युतिदर्शनस्मिताश्चर्याः सर्वे दिगीशा अपि स्वस्मिन् पर्वतीभावं स्पृहयन्ति। निष्कपटतदालिङ्गनसञ्जातरोमाञ्चास्तदाभरणाधिष्ठातृदेव्योऽप्यानन्दं प्राप्नुवन्ति। हे देव! तया रमण्यैव स पर्वतको नृपस्त्वत्तोऽधिकः, परन्तु सैन्येन लक्ष्म्या रूपादिभिश्च गुणैस्त्वं ततोऽधिकोऽसि। तया कान्तया भवान्नतीव शोभते, सा च भवताऽतीव शोभते, हिमांशुविभावर्योरिव भवतोः पृथग्भावेन शोभा न भवति। अथ तद्वचनमाकर्ण्य प्रसन्नेन पृथिवीनाथेन तं चरं सन्मान्य दौत्याय प्रेषितः सचिवो गत्वा सभानिषण्णं पर्वतं नृपमुवाच–शत्रूणां गरलोपमः सुहृदां च पीयूषरसस्तव सुहृद्विन्ध्यशक्तिर्नाम राजा मदाननेन त्वां ब्रवीति। यस्ते शत्रुः स मम शत्रु, यो मम वयस्यः स तव वयस्यो, या तव लक्ष्मीः सा ममापि लक्ष्मीः, या मम भूमिः सा तवापि भूमिः। एवं मित्रत्वसंबन्धेन शोभमानैकभावयोरावयोर्लक्ष्म्यां क्रियायां वा भृशं विभेदो नैव वरः। तद् हे मनीषाप्रिय! मित्र! यदि शरीरेऽपि भेदं न धारयसि तदा मह्यं शीघ्रतरं वारविलासिनीं गुणमञ्जरीं प्रेषय! इत्यस्य वचनेन वायुना कृशानुरिव दीप्तः पर्वतो नृपः स्फुलिङ्गवत् तीव्रामक्षरराजिं विस्तारयामास (अर्थादुवाच)। अद्य विन्ध्यशक्तिना राज्ञा चिरान्मित्रत्वं साधु दर्शितं यन्मम प्राणस्वरूपाऽसौ गुणमञ्जरी याचिता। यदि स राजा ममाग्रे निजाननैवैतदवदिष्यत् तदा तस्य निजखड्गमुखेनाहमुत्तरमदास्यम्। ममैधमानः क्रोधवह्निस्त्वामपि नूनं धक्ष्यति तत् त्वं शीघ्रं याहि! दूतमारणदुर्यशो मा देहि! इति राजनि क्रोधवति वण्ठैः कण्ठे धृतोऽसौ पुरुषो गत्वा पराभवात् समधिकं विन्ध्यशक्तये भूपालाया-

वृष-चन्द्र-सूर्य-कृशानु-समुद्रा इति वासुदेवजन्मसूचकान् स्वप्नानद्राक्षीत्। ततो विन्ध्यभूमिः श्रेष्ठगजमिवासौ समये नूतननमालपत्रसदृशकान्तिं तनयमजीजनत्। प्रमत्तो त्रत्या तनयजन्मवदतां जनानां दानं ददान आद्यन्तयोः पुत्रयोरपि भेदं न कृतवान्। मनतोऽन्यमानपि देशानुत्सवेन लोभयन् महीपतिस्तनयस्य "द्विपृष्ठ" इति सत्यां संज्ञां दत्तवान्। पञ्चपरमेष्ठिनां नमस्कारैर्धर्म इव पञ्चभिर्धात्रीभिः पुष्यमाणः स त्रिपृष्ठो यथाक्रममैधिष्ट। श्रेष्ठोदयवन्तौ रात्रिपतिवासरपती दिशामिव दशानां धात्रीणां मध्ये रममाणौ शुशुभाते। श्यामपीतवसनौ तालध्वजलाञ्छनौ श्वेतश्यामद्युती तौ कुमारौ पृथिवीलोकनयनानामानन्दं चक्रतुः। ततस्तौ स्वयं मन्त्रपास्य इव गुरुभ्यो बाहुभूषणं शस्त्रकला वदनालङ्कारं च शास्त्राणि जगृहाते।

अथ तावेकभाजनदशाद्वयदीप्तौ दीपाविव कान्तिमन्तौ सुखदुःखयोः सदृशौ सदृशस्नेहौ विलेसतुः। तौ निरन्तरं क्रीडयैव वध्यस्यार्धचक्रिणः शस्त्रतोऽधिकमाज्ञाभङ्गनामकं वधं चक्रतुः। दूरात् तयोराज्ञोलङ्घनपराक्रमं विदित्वा शीघ्रगतयो दूतास्तारकं प्रतीदमवोचन्। हे देव! तत्र किङ्करस्यापि द्वारिकाधीशस्य द्वौ तनयावुद्धतौ धुरन्धरवृषभौ रश्मिमिव तवादेशं न मन्येते। स समयो गतः, इदानीं तारकस्य तेजः क्वास्तु? यदेतौ वीरावुदिताविति तयोः सेवकाः कथयामासुः। अतुलबाहुपराक्रमौ सकलशस्त्रवेत्तारौ गर्वानलौ तौ त्वां प्रति प्रतिभातः शुभौ न तदुचितं विधेहि! इत्याकर्ण्योद्धतकोपः कृतान्तयोधोद्धतनादः सेनापूरितवारिधिरर्धचक्री सेनापतिमभाणीत्। सतनयद्वारिकापतिवधसंग्रामप्रतिज्ञयाऽधोकृतकुलपर्वताः पृतनाः सज्जय! न मनोहरोक्तिभिर्न पुरतोलुण्ठनैर्न नरणनैर्नैन न वदनतृणस्वीकारैस्ते कथमपि त्यक्तव्याः। साम्प्रतमेवाधिकोत्साहैरश्वैर्मामकीनं स्यन्दनं सज्जय! समयविलम्बो माऽस्तु! तत्र भम्भां शीघ्रं संभावय!। अथ नीतिकल्पवेत्ता मन्त्रीश्वरो राजानमब्रवीत्। हे स्वामिन्! अद्यपर्यन्तं स राजा तावकः

शक्तिभूपस्य वधे मम शक्तिर्भवतात् ! इदमिदानध्यानेन तेन पर्वतेनानुपमं तपस्तेने । एवं तर्कैः कामधेनुमिव तपो विक्रीय सोऽनशनं गृहीत्वा मरणं प्राप्य प्राणतं देवलोकं जगाम । विन्ध्यशक्तिरपि जन्मानि भ्राम्यन् कुत्रचिज्जन्मनि जिनलिङ्गधरो देवलोके गत्वा देवो बभूव । ततश्च्युत्वा विजयपुराभिधे नगरे श्रीमतीजठरजन्मा श्रीधराख्यराजभूस्तारकाभिधानः कुमारोऽभवत् । स सप्ततिधनुर्मात्रशरीरो मषीकान्तिशाली द्विसप्ततिवर्षलक्षायुष्मान्नतिशयपराक्रमवानभूत् । अन्ते जनकस्य प्रतापलक्ष्मीताडङ्कं चक्रं लब्ध्वा स प्रत्यर्धचक्री पृथिवीचक्रखण्डत्रयमसाधयत् । इतश्च मध्येसागरं चतुर्वर्गलक्ष्मीपरिपूर्णपौरशालिनी नाकसौभाग्यतिरस्कारिणी द्वारिकाभिधाना नगरी वर्त्तते । शत्रुभिरपरिभूता सौराष्ट्रदेशवदनभूषणा या नगरी पश्चिमसमुद्रजलगजमनुष्यघोटकैरेव वेष्टयते । ब्रह्मज्ञो वचनानामप्यगोचराचरणलक्ष्मीः परकामिनीषु ब्रह्मचारी ब्रह्मा नामात्र भूपालो बभूव । तस्य राज्ञः शुभे मनोहरकान्ती खड्गस्य धारे इव सतीव्रतगुणाश्रिते सुभद्रा–उमे द्वे स्त्रियावभवताम् । कलाशोभमानः स राजेन्द्रः कौमुदीविभावरीभ्यां हिमांशुरिव ताभ्यां कामिनीभ्यां शुशुभे मुमुदे च । इतश्च केशरी शिखराद् गह्वरमिव पवनवेगस्य जीव उत्तरतश्च्युत्वा सुभद्रागर्भमलभत । तत्समयेऽसौ सुभद्रा रामजननाभिसूचकान् गज–सिंह–वृषभ–भास्करा इति चतुरः स्वप्नानपश्यत् । अथ शुक्तिर्मुक्ताकणमिवेयं सुभद्रा समये हिमांशुसदृशकान्तिं पृथिव्यलङ्कारतां गतं तनयमजीजनत् । कारागृहत्यागादिभिः शत्रूणामपि हर्षं ददानो ब्रह्माऽस्य पुत्रस्य "विजय" इति नाम कृतवान् । इन्द्रियशोभाभिरात्मेव पृथक्प्रथितकार्याभिः पञ्चभिर्धात्रीभिर्लाल्यमानोऽयं विजयः शोभयैधाञ्चक्रे । क्रमश एधमान एष विजयो हास्यैर्दिशः पुष्पिताः कुर्वन् वसन्तर्त्तुवासरसमूह इव कस्यानन्दाय नाभूत् ? अथ चिन्तामणिः समुद्रात् पुण्यशालिमुष्टिमिव प्राणताद् देवलोकाच्च्युतः पर्वत उमादेव्या जठरमासादत् । अथोमा गज–सिंह–

विज्ञाः संग्रामगायना एकैकप्राणिभक्षणेनातृप्तमालस्यशायिनं कृतान्तमजजागरन्। अथ वीराः स्वस्वप्रभुविजयवाञ्छया पुलकोद्गमवारितान् कननान् संग्रामनधीतिभिः स्वशरीरैः कष्टं गृह्णन्ति स्म। अत्रेष्टश्रिराभिलपितः परिरब्धुमागच्छन् मृत्युर्मा मा पराङ्मुखो भूदिति केऽपि वीराः कञ्चुकान्नागृह्णन्। ततः कपोतध्यूनकारिणि इवात्युत्सुका उभयेऽपि वीराः शरीरविरागमानसा अमिलन्। हृदयवसत्स्वामिप्रतापज्वलिता इव कृपाणा मिथोऽभिघातेन वारं वारं स्फुलिङ्गांस्तत्यजुः। शत्रुतेजोवह्निनीरदेषु हस्तिषु मदनवर्षिषु खद्योतसदृशैर्दशनाघातोत्पन्नैरग्निकणैरद्योति। रथशोभिनां वीराणां बाणाः शाकिनीमन्त्रा इव अदृष्टा एव वध्यशरीरप्रविष्टाः शोणितं पपुः। मणिगणिकान्तिहारवद्भिरश्वद्भिस्तादृशशल्यप्रहारसमुत्पन्नं निर्गच्छच्छोणितं नावेदि। त्रुटतां कवचशस्त्रदण्डास्थिशकलानां शब्दैर्घ्नतामार्तनादैश्च भयङ्करः संग्रामो मृत्योरपि भयायाभूत्। शत्रुकृपाणोत्क्षिप्ता अमर्षिणां वीराणां प्रकम्पितकृपाणाः कराः सिंहनादिनो मस्तका आकाशे देवानप्यत्रासयन्। युध्यमानमहावीरो नष्टवीरसमूहो यमकामिनीनयनोत्सवः क्षणं कामं प्रकटः संग्रामो बभूव। नष्टायुधः कश्चन वीरः शत्रुक्षतं स्वं भुजमेवायुधीकृत्य समागताया विजयलक्ष्म्या आसनकमलं चकार। छिन्नशस्त्रबाहुमस्तकः कश्चन क्रोधत उत्पत्य सक्थिसन्दंशबन्धेन शत्रुं शीघ्रं प्राणरहितं चकार। कोऽपि वीरः संग्रामकण्डूसमूहविनाशाय स्वशरीराण्यभ्युत्थापयन् मन्दप्रहारकृत्युः शत्रोः प्रहारान् दृढीचकार। दृष्टिपातेनैव शत्रुवीरसमूहे नष्टे कोऽपि वीरोऽपूर्णसंग्रामाभिप्रायः प्राय उपवेशनमभजत्। कश्चिद्वीरो कथां प्रहारं न तुल्यं दत्वा हस्ताच्युतशस्त्रे शत्रौ द्विशकलीकृते पश्चात्तापात् स्वमेवावधीत्। निजशरीरे गाढं प्रहारमभिलपन्तौ कौचिन्महावीरौ कृपामन्दप्रहारिणौ कोपेनान्यतोऽन्यतो जग्मिवन्तौ। वितीर्णघातेषु रिपुषु प्रतिघातमकुर्वन्तः स्वोपमं वीरं पश्यन्तः केऽपि गताश्चिरं भ्रमुः। प्रहारकाङ्क्षे रिपौ योऽभ्यासादङ्गनाशमकार्षीत् तमपि सञ्जातवेगा वीराः कातरममन्यत। वीरेभ्यो निर्भयो यस्तदस्त्र-

सेवकोऽस्ति। हे पुरुषोत्तम! आदेशवर्त्तिनं सन्मानयोग्यं चैनं निगृह्णतस्तव परिवारेऽपि विरागो भविष्यति। तद्दोषमुत्पादयितुं तं प्रति चरो नियुज्यताम्! यतो मृत्युरप्यन्नदोषादिना विना शरीरिणं न हन्ति। चरेण गजतुरगरत्नान्यसौ याच्यो, यदिचेन्न दास्यति तदा स दोषी, यतो व्याजदर्शके प्रभौ सकलो जनो दोषवान्नास्ति। अथ मन्त्रिवचसि प्रीतिमावहता महीशेन प्रेषितो दूतः सभायां पार्श्वस्थिततनययुगलं ब्रह्माणमुवाच। हे राजन्! त्वां तारको भूपो ब्रवीति, त्वं मामकीनो भक्तिमान् सेवकोऽसि, तन्ममैव रक्षणीयोऽसि, तव गजाश्वादिना किं प्रयोजनम्?। ततः सर्वमसभ्यं देहि! यत् तव प्राप्यं नास्ति, यतो भरतार्धे यद्वस्तु स्यात् तद् भरतार्धनायकस्यास्ति। इति कथयन्तममुं दूतं क्रोधस्वल्पीकृतकल्पान्तकृशानुर्ब्रह्मा भ्रूतन्तुतेजोभिर्वध्ननिव बभाषे। वंशपरम्परागते राज्ये वयं स्मः स च वर्त्तते, स यदिचेदस्माकं सेवको न तद्वयं तस्य सेवकाः किं स्मः? स मूर्खोऽस्माकं रक्षको भूत्वा रत्नानि याचते किन्तु प्रत्युत यद्यहं याचिष्ये तदा तं को रक्षिष्यति?। मयि सिंहतुल्ये स्थिते शृगालसदृशः स भरतार्धनायकः क? गच्छ! अहं तस्य मस्तकेन सह रत्नानि गृहीतुमागच्छामि। इति कथयित्वा विष्णुना भ्रुकुटिशिखया विष्टरादुत्खात इव स दूतः शीघ्रं गत्वा निजस्वामिने सर्वं सत्यमवोचत्। अथ कोपक्रूरतात्रस्तकृतान्तस्तारकः शत्रुप्राणविनाशाय प्रयाणमकारयत्। जितनीरदगर्जनभम्भानादनूतनश्रवणाद् वीराणां हृदयमयूरा अखण्डं ताण्डवं चक्रुः। ततश्चतुर्भुजविष्णुविजयस्पृहया चतुर्भिनगरद्वारैश्चतुर्विधशस्त्रप्रचण्डश्चतुरङ्गसेनासमुद्भवोऽभूत्। मिलद्भिः सचिववसुधापतिमण्डलेशादिसैनिकैर्नद्यन्तरैर्नदीव सा गच्छन्ती पृतनैधिष्ट। ततः सावेशोऽनुलङ्घितसामर्थ्यः प्रतिवासुदेवोऽप्रमाणैः प्रयाणैः शीघ्रं वर्त्मार्धमलङ्घिष्ट। इतश्च तादृशोत्साहसाहसवर्गालङ्कृतो ब्रह्माऽपि मार्गार्धमागत्य पुरतो वर्त्म रुरोध। ततो विस्तीर्णसमरगुणग्रामग्रहणोन्मुखा उभये भटाः कृतान्तकर्णसुखदां वार्त्तां विस्तारयामासुः। नि-

अन्यनेन कुपितस्तारकस्तमनेन्दुर्यूयेनसवं चक्रं रभसा गगने भ्रामयित्वा तं प्रति तत्याज। जयलक्ष्म्या प्रीत्या श्रवणकुण्डलेनेव तेन चक्रेण नास्यां हृदये हतः केशवः सुखमूर्च्छामवाप। अथ विष्णुप्रतापकृशानुमतिज्वालयतेव विजयेन वसनान्तं व्यजनीकृत्य स वीजितः। ततो मूर्च्छान्ते तदेव चक्रमुद्भ्रम्य विष्णुस्तारकमवोचत्–भोः! त्वं ममाग्रभागं त्यज! जीवन्तं त्यजामि, वसुधां भुङ्क्ष्व!। ततः कोपेनारुणभ्रमभ्रयनकनीनिकस्तारकस्तं दशनपेपसमुत्पन्नाग्निकणश्रेणिं वाणीमब्रवीत्–अरे रे! त्वरितं ममैवेदं त्यज त्यज! यतो भूयः करगृहीतेन यत्नात् त्यक्तेनानेन चक्रेण तावकं मस्तकं हरामि। इति वचनेन पीडितो वासुदेवश्चक्रं शिरस्युद्भ्राम्य त्वरितं तत्याज तथा चक्रेण छिन्नं शत्रुमस्तकमद्राक्षीच्च। इत्थं चिरं विजयलक्ष्मीं सम्भुज्य प्रसन्नः प्रतिवासुदेवः कीर्त्तिरमनागुण्ठनो वीरशय्यायां सुष्वाप। निजाख्यरिपुसंहारप्रसन्नैस्तारकैरिवाकाशात् कुसुमवृष्टिलक्ष्म्या वासुदेवं सेवितुमागामि। गायनोद्गीतगुणसमूहो वासुदेवः संग्रामं जिगाय, स्वयं विजयो यस्यानुगामी स केन जीयताम्? (न केनापीत्यर्थः)। तारकस्य चक्रं राजचक्रं च किं करोमि? इति वासुदेवस्य करे चरणे च लग्नं तदाश्चर्यमस्ति। भरतार्धविजयारम्भोत्सुकहृदयस्य विष्णोश्चक्रमेव जेयदेशवर्त्मोपदेशकमभवत्। जैत्रः स वासुदेवस्तया यात्रया सर्वैः पृथिवीपतिभिः सह दक्षिणं भरतार्धं जीतवान्। ततः स मागधपतिं वरदामपतिं प्रभासपतिं चापि देवानेतान् सेवावाणीनकरोत्। ततः प्रयाणविनिवृत्तो माधवो मगधदेशमाजगाम, तत्र कोटिमनुष्योत्पाटनीयां महाशिलामद्राक्षीत्। दूरावलोकेच्छुर्मनुष्यः स्वहस्तमिव माधवस्तां शिलां स्वमस्तकतटपर्यन्तं क्रीडयोत्पाटयामास। अथानन्देन तां शिलां यथास्थानं स्थापयित्वा माधव उत्तोरणनगरगृहद्वारवर्तां द्वारिकां पुरीं जगाम। ततः पित्रा ज्येष्ठभ्रात्रा सकलैर्वसुधानायकैश्च सिंहासनेऽध्यास्य स माधवोऽर्धचक्रित्वेऽभ्यषिच्यत। उद्यानरक्षको यथा वृक्षराजिं गोपायति

मन्त्रेण चिच्छेद सोऽपि मृत्युभीतो भटेषु गणनां न लब्धवान्। एवं बाहुभ्यां युद्धसागरं तरन्त उभये वीरा विजयलक्ष्म्या दृष्टिपातेन विलोकिताः। अथ विजयलक्ष्म्या अभीष्टं शयनमिव स्यन्दनमारुह्य वासुदेवस्तत्कण्ठमिव हर्षेण पाञ्चजन्याख्यं शङ्खं जग्राह। ततो वासुदेवः पाञ्चजन्यं प्रणादयञ्छस्त्रशय्यासुप्तानि शस्त्राधिदैवतानि सत्त्वरमजजागरन्। तेन शङ्खस्य नादेन प्रतिवासुदेवस्य सैन्यानि वायुना तृणानीव पुरत उड्डाययामासिरे। ततो मेघनादात् पञ्चाननः पर्वतशिखरमिव पाञ्चजन्यनादात् कुपितः प्रतिवासुदेवः स्यन्दनमारुरोह। विजयलक्ष्मीहठाकृष्टिसिद्धमन्त्राक्षरैरिव कोदण्डटङ्कारैः सैन्यानि स्थिरयन् स वासुदेवः प्रतिवासुदेवं जगाम। अथ क्रुद्धौ सज्जितौ तौ दृष्टियुद्धवचनयुद्धपुरस्सरं क्रमशः सकलशस्त्रैर्मिथः योद्धुं प्रारब्धौ। परस्परं छिन्नाः पृथिवीगतवदनास्तयोर्बाणाः कबन्धैरिव पश्चार्धैं रणमस्तके ननृतुः। छिन्नमध्यभागा अपि तयोः केऽपि बाणा अतित्वराबलोध्धुराः क्रोधवन्त इव लक्ष्यं जग्मुः। क्रोधेन रक्तवदनौ श्यामद्युती शरपञ्जरमध्यगौ वाचालौ तौ विजयलक्ष्म्याः क्रीडाशुकत्वं ययतुः। सदृशोद्यमबलवन्तौ सदृशकार्यप्रतिकार्यक्रमौ सदृशलक्षणौ तौ दृष्ट्वा पराजयो भग्नाशो बभूव। विजयलक्ष्म्या स्वैकैकभुजेन परिरम्भिताविव तौ केन केन महायुधेन पराक्रमं न चक्रतुः?। अथापरायुधेन विजयकनिष्ठं द्विपृष्ठं दुर्जयं मत्वा तारकश्चक्रेण हस्तमतिदुर्दर्शं चकार। सूर्यस्य जीवातुमिव सौदामिनीनां रहस्यमिव वह्नेर्हृदयमिव जाज्वल्यमानं तच्चक्रमवलोक्य को नाम न त्रसति स्म?। तादृशप्रभाववच्चक्रं न किञ्चिदिति विचारयन् वासुदेवो नयनकनीनिकाद्युतिनीरदैस्तत्पीतवान्। चक्रेण जितमेवेति मन्यमानः स तारकस्तु दृष्टैयव तर्जयन् प्रहसन् विष्णुमुवाच–मम चिरकिङ्करतनयो दुर्बुद्धिरिति हन्यसे, भो बालक! ममादेशं स्वीकुरु! भोगान् भुङ्क्ष्व! मा म्रियस्व! अथ विष्णुरुवाच–तवायुधानां प्रमाणं मया व्यलोकि, साम्प्रतं चक्रमपि त्यज! अस्य चक्रस्यापि तेजोऽहं पश्यामि। इति

दन्ताश्चतुःषष्टिकलालक्ष्मीनां क्रीडाशय्यातल्पा इव व्यराजन्त। शरीरसामर्थ्यसमुत्पन्नाऽस्य करिणः मूर्तिमती कीर्त्तिरिव स्वादुनिर्मलशीतजला दीर्घिका रदने रदने रराज। प्रतिदीर्घिकमष्टदिग्रमणीमुखप्रतिबिम्बवदष्टाष्ट विकस्वराणि कमलानि शुशुभिरे। तीर्थङ्करदर्शनकौतुकादत्युत्तुङ्गानीव प्रतिकमलचाष्टाष्टपत्राणि शोभामधारयन्। प्रतिपत्रं चतुर्विधाभिनयोल्लासितरसप्रसरलीलया मनोहराण्यष्टाष्ट नाटकान्यभूवन्। अथात्र प्रतिनाटकं प्रभुभक्तिसमूहप्रकटीभूतनिजनिजगुणानि द्वात्रिंशत् पात्राणि व्यराजन्त। इत्याश्चर्यकारकशोभामनोहरं गुणभरितं शुण्डोत्पातेन गगने गङ्गानदीं कुर्वन्तमिव सुगन्धिश्वासकल्पवृक्षपुष्पमालादानवारिभिस्त्रिधा प्रसन्नैश्चञ्चरीकैः समन्ततो गीतयशसमिव भुवनपतिप्रणाममनोरथमिवोन्नतं तं गजराजं सपरिवारः पुरन्दरो रभसाऽऽरुरोह। इत्थं वासवे गजांसवद्रविष्टे स गजराजः प्रभुमपर्योत्सुकमानसस्त्वराकृष्ट इव ततश्चचाल। ततः पूर्वरक्षक इव स गज आत्मानं संक्षिपन् क्षणादपि प्रभुचरणकमलपवित्रमुद्यानवसुधातलमयासीत्। ततो मनोहरवराभरणसमूहधारी सुधर्मेन्द्रोऽसौ धर्मनायकं तीर्थङ्करं नमस्कर्तुमुद्यतो गजादुत्ततार। अहं पूर्वमहं पूर्वमिति ध्यानैधमानतरत्वरा अच्युतादयोऽन्येऽपि वासवाः सुरैः साकं तत्राजग्मुः। ततः स्वामिनः समवसरणार्थं वायुकुमाराः स्वयमेकयोजनां वसुधाममृजन्। निजपोष्यवृक्षसमूहदत्तैर्मकरन्दैरिव गन्धोदकैर्मेघकुमारास्तां वसुधां सिषिचुः। ततो व्यन्तरास्तां भूमिं मनोहरैर्मुक्तामाणिक्यदीनारैर्ववन्धुः, कर्मभिर्बद्धमात्मानं श्लथं चक्रुः। तत्र ते वृक्षान् विना पृथिव्या एव उद्गतानीव सुगन्धीनि तुङ्गवदनानि पञ्चवर्णकुसुमान्यवाकिरन्। अथेह ते व्यन्तरा मुक्ताकाञ्चनमाणिक्यैश्चतुर्गतिकसंसारनिर्गमद्वारभूमिमिव चतुस्तोरणीं चक्रुः। तेषु दिक्तोरणेषु प्रभुं सेवितुमिव साक्षात् तदधिष्ठानदेवताः पाञ्चालिका उच्चैरतिष्ठन्। भीतेन संसारसागरेण सेवने त्यक्ता इव तेषु तोरणेषु प्रबद्धा इन्द्रनीलमया मकरसमूहाः शुशुभिरे। चतुर्विधसंसारनाशकानां चतुर्णां

तथा स वसुधाधवो वसुधां विपुलां नीतिं विस्तार्यागोपायीत् ।

अथ तत्समये छद्मस्थावस्थादूरीकृतपापः समासन्नकेवलज्ञानोत्पत्तिदिवसः श्रीवासुपूज्यो वर्षं विहारं कृत्वा दृष्टिपवित्रां पृथिवीं चरणैः पवित्रयंश्चम्पाख्यनगर्यां विहारगृहाभिधाने व्रतारामेऽगच्छत् । अथ कृततुर्यतपाः प्रभुः पाटलावृक्षमूले प्रतिमास्थितोऽप्रमत्तनामकं गुणस्थानं प्राप्तवान् । ततोऽपूर्वकरणारूढः प्रभुः "पृथक्त्ववितर्कसविचार" नामकं शुक्लध्यानं प्राप्तवान् । ततः प्रभुरनिवृत्ति सूक्ष्मसम्परायनामकं च गुणस्थानद्वयं च प्राप्य क्षणात् क्षीणकषायनामकं गुणस्थानमभ्यारुरोह । अथ प्रभुर्मोहान्तिमक्षणे नष्टेऽवीचारनामकमैक्यश्रुतनामकं च (एकत्ववितर्कविचारं) शुक्लध्यानं द्वितीयमलभत । ततः प्रभुः पञ्चज्ञानावृतीश्चतस्रो दर्शनावृतीः पञ्च चान्तरायानिति घातिकर्माणि ननाश । ततो माघशुक्लद्वितीयायां तिथौ चन्द्रे शतभिषनक्षत्रयुते प्रभोर्भुवनप्रकाशि केवलज्ञानमुदभूत् । तत्समये दिशः शान्तिमभजन्, सुखदाः पवना ववुः, नारकीया अपि क्षणं दुर्लभं सुखं प्रापुः । अथ प्रभुवैभवदर्शनाद् गर्वरहितानां देवेन्द्राणां मस्तकानीव सर्वतो विष्टराणि चकम्पिरे । प्रभुं नमस्कर्तुमागगच्छतागच्छत ! गच्छत ! गच्छत ! इति वासवलोकेषु प्रकटशब्दैर्महाघण्टाः स्वर्गवासिन आदिशन्निव । तीर्थङ्करं प्रभुं नमस्कर्तुमागन्तुमभिलषतः सुधर्मेन्द्रस्य स्मरणेनैरावतदेवो गजीभूयात्र आजगाम । लक्षयोजनप्रमाणशरीरः शुभशोभावान्नैरावतो गजो मेरुपर्वतस्पर्धया रौप्यपर्वत इवोच्चतां ययौ । जिनेश्वरं जिगमिषोस्तस्यैरावणगजस्योच्चैर्मदधारायुगलव्याजान्निकाचितमनिकाचितं च पापं गलच्छुशुभे । स गजो गर्जितैर्महाघण्टाटणत्कारयुगलैश्च जिनेश्वरं नमस्कर्तुं त्रिभुवनमाकारयन्निव रराज । प्रभुवचनाकर्णनोत्कण्ठिताः प्रत्यक्षा बुद्धिगुणा इव तस्य गजस्य काञ्चनपट्टाढ्यललाटान्यष्टौ मुखानि शुशुभिरे । तस्य च मुखे मुखेऽष्टौ

दिव्याङ्कुशं, मुद्गरिणं च धारयन्त्यो हिमांशुकमलसुवर्णाञ्जनद्युतयो जया-विजया-अजिता-अपराजिता इति देव्यः पूर्वादिक्रमेण सुवर्णवप्रप्रतीहारपृथिवीषु तस्थुः। राजतप्राकारे प्रतिद्वारं जटामुकुटः शूलशस्त्रो मनुष्यमस्तकमालाविभूषितस्तुम्बरुनामा देवो द्वारपालतां दधार। तथा समवसरणस्य मध्ये व्यन्तराः श्रीद्वादशतीर्थङ्करशरीरद्वादशगुणोत्तुङ्गं चैत्यवृक्षं रचयामासुः। तदधस्ते विविधमणिसमूहेन वेदिकां चक्रुर्यत्किरणैरशोकवृक्षो मयूरपिच्छातपत्रमिव रराज। तस्योपरि ते तिरस्कृतसकलदेवविमानकान्ति निस्तेजोभूतसूर्येण मणिसमूहेन च्छन्दकं रचयामासुः। तन्मध्ये तेऽस्याः समवसृतिलक्ष्म्या जीवनमिव रत्नैः पूर्वाभिमुखं मयादपीठं सिंहासनमसृजन्। तदुपरि ते प्रभोर्ज्ञानदर्शनचारित्रप्रभुतादर्शकं चन्द्रवन्मनोहरं छत्रत्रयं विस्तारयामासुः। तत्र प्रभोर्वदनं सेवितुं हिमांशुयुगलेन किरणसमूहौ प्रेषिताविव चामरौ यक्षाभ्यां धृतौ। अथ समवसरणस्य प्रतीहारे श्रीधर्मचक्रिनायूचकं कान्त्याद्भुतं कनककमलस्थं धर्मचक्रमभवत्। अत्र यदन्यदपि दिव्यं करणीयमासीत् तत् सर्वं प्रभुभक्त्याऽनुत्पन्नपरिश्रमा व्यन्तरा विस्तारयामासुः। ततश्चतुर्विधत्रिदशकोटीनां कोटिभिः परिवारितः प्रभुस्त्रिभुवनानुकम्पया समवसृत्यर्थं चचाल। अथ नवनवलक्ष्मीनां मुखानीव त्रिदशर्भुवननायकस्याग्रे दिव्यानि काञ्चनकमलानि विस्तारयामासिरे। ततः प्रभुश्चलंस्तेषु कमलेषु द्वयोर्द्वयोश्चरणन्यासं चकार, अन्यानि कमलानि च देवसमूहोऽग्रेऽग्रे चालयामास। ततो वासरपतिर्भुवनान्धकारसमूहविनाशायाकाशमिव प्रभुः पूर्वद्वारेण समवसृतिभूमिं प्राविशत्।

ततः प्रभुश्चैत्यवृक्षं प्रदक्षिणीकृत्य "तीर्थाय नमः" इति कथयित्वा पूर्वाभिमुखो भूत्वा सिंहासनं सिषेवे। अथ व्यन्तरा अन्यासु दिक्ष्वपि तत्क्षणात् रत्नसिंहासनस्थानि प्रभोस्त्रीणि प्रतिरूपाणि चक्रुः। ते व्यन्तराः प्रभोरङ्गुष्ठस्यापि रूपं विकर्तुं समर्था

धर्माणां नाथत्वसूचकानीव चत्वारिच्छत्राणि तत्र व्यराजन्त। मोहं जित्वा धर्मसैन्यैः पटसमूहोऽभ्रमीव तेषु श्वेतवर्णश्चपलो ध्वजसमूहः शुशुभे। तथा तत्तले बलिपीठेष्विवोच्चेषु पृथिवीपीठेषु स्वस्तिकादीन्यष्ट माङ्गलिकानि चिह्नान्यभूवन्। संसारसागरमध्यद्वीपेऽस्मिन् पृथिवीपीठे वैमानिका देवा वेलारत्नसमूहाकारं प्राकारं निर्ममिरे। अस्मिन् प्राकारे विविधमणिमयकपिशीर्ष('कांगरा' इति भाषायम्)समूहोऽभवत्, यत्कान्तिसमूहमयूरः कस्य पापसर्पान् न जहार!। तत्प्राकारबहिर्ज्योतिरिन्द्रा आत्मीयाश्रयीभूतान्मेरुपर्वतादाहृतैरिव सुवर्णसमुदायैर्द्वितीयं प्राकारं चक्रुः। तत्र प्राकारे ज्योतिषां नायकः सूर्यो सघनमण्डलो भूत्वा स्वयमिव रत्नराजिकपिशीर्षतामलभत। तथा तत्प्राकारबहिर्भागे भवनपतिभिर्देवैः प्रभुभक्तिशुभ्रैर्हृदयाणुभिरिव रजतैः प्राकारो निर्मितः। तत्प्राकारोपरि स्फुरद्भिः काञ्चनकपिशीर्षसमूहैस्तस्य प्राकारस्य धवले कान्तिजले चक्रवाकैः पक्षिभिरिवाशोभि। इत्थं सा त्रिप्राकारी ध्रुवं परस्परस्वस्वाकारप्रतिबिम्बपातादनन्तप्राणिपालनार्थमनन्तप्राकारीवाभूत्। तत्र संसारभ्रमौ परिश्रान्तं लोकं वीजयितुमिव स्थिताः पताकाङ्कुशो माणिक्यतोरणाः शुशुभिरे। इह द्वादशश्रावकधर्म्मलक्ष्मीविश्रामैकैकजालवत् प्राकरे प्राकारे चत्वारि पुरद्वाराणि शुशुभिरे। प्रतिद्वारं व्यन्तरैर्लोकपापविनाशाय धूमदण्डच्छलोद्धतकृपाणा धूपकुम्भिकाश्चकासिरे। तैर्व्यन्तरैः प्रतिद्वारं चतुर्विधधर्मलक्ष्मीरमणेच्छया निष्ककमला पुष्करिण्यपि कृता। सुवर्णप्राकारस्यान्तरुत्तरपूर्वतो भुवनपतेर्विश्रामाय ते व्यन्तरा अनुपमं देवच्छन्दं रचयामासुः। पूर्वप्राकारस्य पूर्वभागे काञ्चनवर्णौ स्वशरीरतेजोराजिपरिवेष्टितौ वैमानिकौ द्वारपालौ तस्थतुः। तत्र दक्षिणद्वारे प्रभुभक्तानां मूर्तिमन्तौ कीर्त्तिधर्माविव धवलशरीरौ द्वौ व्यन्तरौ द्वारपालौ तस्थतुः। पश्चिमद्वारि पुण्याकृष्टिध्यानवशत इव सर्वतोऽरुणवर्णौ ज्योतिष्कौ द्वाररक्षकौ बभूवतुः। प्राकारश्रियो वदने इवोत्तरद्वारि भवनाधिपती द्वारपालावलकलतावत् तस्थतुः। क्रमशः सकला अभयं, पाशिनं,

तारकीभ्यो दृष्टिलीलाभ्यो नमोऽस्तु ।। हे प्रभो ! हृदये शाश्वतप्रदीप्तध्यानवह्निकान्तिसदृशा दासीकृतप्रवालास्तव शरीरकान्तयो राजन्ते। हे जगत्पते! संसारसागरतरणतरणीरूपस्य तव दशनकान्तयः श्वेतध्वजवस्त्रसदृशा निर्मला जयन्ति। हे प्रभो! पृथिव्यां भवांश्च भव्यलोकानां भाग्यमिव शोभते, यतो भवतो दर्शनं तेषां लोकानां सकलेन्द्रियहर्षप्रदमस्ति। हे स्वामिन्! अमनस्कोऽपि त्वं यत् सुमनोभिः स्तूयसे, तदहो! तव केवलस्य सुकृतस्यैव महत्त्वमिदमस्ति। हे जिनेश! धर्मदेशनया लोकं वीतरागयिष्यन् प्रागेव दशनकान्त्याऽधरं वीतरागं विदधासि। हे वासुपूज्य! हे जिनेश्वर! एधमानोत्तमज्ञानज्ञेयः कल्याणलक्ष्म्याः स्थानं तव प्रसादः सततं ममास्तु।।

अथेत्थं वासवस्तुतिभिस्तुष्टे देवदानवमनुष्ये निविष्टे निर्ममनायकः स वासुपूज्यो निर्मलां धर्मदेशनां रचयामास। योजनप्रसराः सकलभाषापरिणतिप्रियाः पञ्चत्रिंशद्गुणा जगत्पतेर्भारत्य एवं शुश्रुभिरे। भो भव्याः! सांसारिकाणां विपुलभाग्येन मनुष्यजन्म भवति, तल्लब्ध्वा संसारं प्रोज्झित्वा मोक्षमाश्रयत!। यतो यथा पण्डिता अश्वत्थवृक्षस्य कृमियुतं फलं न सेवन्ते तथा विपुलशोकदुःखपूर्णं संसारं न भजन्ते। भव्यजनैः शाश्वतसुखाय मोक्षाय प्रयत्नशीलैर्भवितव्यम्। यतो ध्रुवं शुभात्मनां दुःखानि न भवेयुः। यत्र मोक्षेऽनन्ताः शक्तिज्ञानदर्शनप्रमोदा नूनं स्थितास्तत्र मोक्षे संसारसुखभ्रमेण को नाम निरुद्यमः स्यात्? संसारसुखस्यास्वादान्मोक्षसुखे यो निरुद्यमः स दुर्बुद्धिः कर्दमभक्षणे स्पृही पीयूषं तिरस्कुर्यात्। संसारे परमं दुःखं मोक्षे च परमं सुखमिति तत्त्वं विदित्वा मोक्षप्राप्त्यर्थे तत्परैर्भवितव्यम्। वृक्षस्य बीजमिव तस्य मोक्षस्य मुख्यं कारणं धर्मस्ततो बुद्धिमद्भिस्त-स्मिन् धर्मे सावधानैः प्रयतनीयम्। अयं धर्मः साधुश्रावकाश्रयाद्द्विद्वद्भिर्द्विविधो ज्ञातव्यः। स द्विविधोऽपि धर्मः स्वल्पास्वल्पवि-

न, तासु मूर्त्तिषु प्रभुमाहात्म्यादेव तद्रूपमासीत्। सकलद्वीपस्फुर्यत्तेजांस्येकत्रीकृत्य रचितमिव प्रभोरनुमस्तकमतितेजस्वि भामण्डलमुद्भभूव। जिनेश्वरदेशनास्वरानुसारी भुवनपापनाशकारी दुन्दुभिराकाशं पूरयन्नुच्चैर्ननाद। प्रभोरग्रे रत्नध्वजदण्डउद्भभूव, यत्पुरतो वैजयन्तीकरेण नृत्यन् धर्मो नटत्वं धारयामास। अस्मिन् च पूर्वद्वारेण समागत्य तिस्रः प्रदक्षिणा दत्वा तीर्थं प्रभुं च प्रणम्याग्नेय्यां दिशि हर्षेणाचारविदो वैमानिकरमण्यः साधूनां साध्वीनां च पदं संत्यज्य तदन्तरे रचिताञ्जलय ऊर्ध्वाः स्थिताः। अथ दक्षिणद्वारेण विधिपूर्वकं प्रविश्य नैऋत्यां दिशि क्रमशो भवनपतिज्योतिष्कव्यन्तरपत्न्यस्तथुः। अथ पश्चिमद्वारेण प्रविश्य वायव्यदिशि भवनपतिव्यन्तरास्तेनैव क्रमेण यथाविधि तस्थुः। अथोच्चैरुत्तरद्वारेण विधिपूर्वकं तत्र प्रविष्टाः कल्पदेवा मनुष्याः स्त्रियश्चैशान्यां दिशि तस्थुः। प्रथममागतः स्वल्पकऋद्धिस्तत्रागतं महर्धिकं देवं ववन्देऽग्रे चायातं तु स वन्दमान एव जगाम। तत्र कापि नियन्त्रणा नासीन्न च कानन दुष्टकथा, न च भयं न च मत्सरिणामपि मात्सर्य्यमासीत्। तथा द्वितीयस्य प्राकारप्रकारस्य मध्ये परस्परं स्पर्शसुखास्थिता मुक्तवैरभावाः केशरिहस्तिप्रभृतयस्तिर्यञ्चस्तथुः। पुना रौप्यप्राकारमध्ये संघट्टादप्यभग्नानि देवदानवमनुष्यपतीनां वाहनान्यवतस्थिरे। तत्समये जयादेवीपद्मावतीसमन्वितो वसुपूज्यो भूपो नगरे शोभां कुर्वंस्तत्रोत्सवैरागत्य प्रभुमभिवन्द्य विधिपूर्वकं तस्थौ। भुवनत्रयेण स्तूयमानयोर्मातापित्रोर्निजतनयैश्वर्यं वीक्ष्य य आनन्दोऽभूत् तदग्रे सागरोऽञ्जलिस्थ इव बभूव। योजनसहस्रेऽपि ये प्राणिनो मान्ति न वा मान्ति, ते प्राणिनः स्वामिमाहात्म्यात् तत्रैकयोजने समवसरणे ममुः। अथ तत्समये श्रेष्ठभक्तिमानिन्द्रः सकलं कोलाहलं निवार्य तीर्थनायकमिति स्तोतुं प्रचक्रमे। हे श्रीवासुपूज्य प्रभो! दशदिङ्निवासिप्राणिकर्मान्धकारनाशकास्तव चरणनखकौमुद्यो नन्दन्तु!। हे प्रभो! संसारवह्निनाशकारणाय शान्तिपीयूषसमुद्रवीचिभ्य इव

तया परोपकारार्थमेवास्मि। तदस्यानामाधाय दारिद्र्याय नीराञ्जलिं दद इति विचिन्त्य माणिक्यपर्वतदिग्वदनोऽसौ शुद्धमतिश्चचाल। अथ कृतज्ञः स दिव्यः पुरुषो रत्नार्थिने तस्मै शुद्धमतये खानिखननाय तीक्ष्णधारया शोभितं कुद्दालं दत्तवान्। एष शुद्धमतिर्माणिक्यगिरिमवाप्य हर्षोद्भवत्पुलकशरीरः खानीः खनन्निह तेजमां स्थानं रत्नानि लब्धवान्। अतिकष्टेनाप्यहं कालेनापि तदमूल्यकं रत्नं ग्रहीष्ये येन साम्प्रतमक्षयं सुखं प्राप्यत इति विचिन्त्यातिकष्टासु माणिक्यपर्वतसीमसु चरणानि ददानः स क्रमशस्तस्य गिरेः शृङ्गं लब्धवान्। यत्प्रभावेण पुरन्दरा अपि सेवां विस्तारयन्ति, तदुदश्चत्कान्ति रत्नं तेन शुद्धमतिना दृष्टम्। तस्य महतो रत्नस्य निरीक्षणादेव शुद्धमतिरात्मानं भुवनत्रयस्योपरि स्फुरितममन्यत। स एव पुरुषो ज्ञानवान् पुण्यवान् दयासागरो गुरुर्येनेदृग्रत्नभाजनं पर्वतो मम कथितः। रत्नाभिलाषुकैः पुरुषैरयमेव रत्नाचलः सेवनीयः, सकलेष्वपि पर्वतेषु रत्नानि सन्तीति तु कविवचनमात्रमेव। अस्य गिरेर्यः कश्चिन्नायकः स एव देवोऽन्यसुराणां येषामीदृशं स्थानं नास्ति तेषां देवत्वं क?। भ्रान्तिभरितभुवनेऽस्मिन् माणिक्यपर्वतेऽपि ध्वान्तसमलनयनानामस्ति नास्तीति संशयो भवति। एनं रत्नाचलं वीक्ष्याप्यपरान् पर्वतान्निच्छतोऽस्यान्धदृष्टेर्लोकस्य प्रकाशेऽन्धकारे चापि भेदो न। 'अयं पर्वतोऽपि रमणीयोऽस्ति, तथाऽन्ये पर्वता अप्यद्भुताः सन्ति' यस्यैवं संशयज्ञानं स्यात् स पापैः कथं न लिप्यते?। अपरपर्वतस्था अपि भाग्यशालिनः प्रयत्नाद् रत्नानि लभेरन्निति वार्त्तापि हा! एतत्पर्वतवासिनां हास्यायास्ति। इतरपर्वतवासिभिः पुरुषैरेतच्छैलवासिनः पुरुषा दर्शनेनापि लज्जेरंस्ततः प्रशंसां कुतः सहेरन्?। अहं धन्योऽहं कृतकृत्योऽहं प्राप्तमनुष्यजन्मफलोऽपि येनासाधारणप्रभावमेतद्रत्नं लभ्यते। हन्त! भाग्यरहितं जडबुद्धिं मां धिक्! येन पुरा समुपार्जितैस्तै रत्नैरपि दिवसा(निष्फला)अगम्यन्ततमाम् इति मनसि विचारयन् स शुद्धबुद्धिः सुनिश्चलं तद्रत्नं धारया-

लम्बेन मोक्षसुखायास्ति। तत्र साधूनां सदा सावद्ययोगानां सर्वतो विरतिरूपः चारित्रलक्षणो निर्दोषो धर्मः स्यात्। यदि सावद्ययोगानां देशतो विरतिः स्यात् तदेष श्रमणोपासकानां गृहस्थानां (श्रावकाणां) धर्मो ज्ञेयः। द्विविधोऽप्ययं धर्मो विशदया श्रद्धयाऽधिकं कर्त्तव्यः। पुनः सा श्रद्धाऽऽकर्णितैः सद्गुरोस्तत्त्वोपदेशैः समुपजायते। अहो! ते गुरवोऽपि, उपदेशो निर्मलबुद्धिमुख्येष्विव, आस्तिकताभाजनेषु विविधहृदयेषु फलन्ति, नान्यत्र कुत्रचित्। तद्यथा—

अथ महामाहात्म्यशालि "अनन्तजनं" नाम नगरमस्ति, यन्नागरिकैरेव भुवननगराणि सततमपि वसन्ति। तत्र नगरे दुर्जनानां महाकष्टप्रदः साधूनामानन्दकारी "चित्रगति"नामा वसुधाधवः प्रतिवसति। अस्मिन् नगरे कष्टं तिष्ठन्तश्चत्वारो नगरनिवासिनः "यत्र सुखं भवतां प्राप्तं स्यात् तत्र कुत्रापि गन्तव्यं" इत्येकदा तेन राज्ञा कथिता निर्जग्मुः। तेषां नामानि च शुद्धमति-योग्यमति-मन्दमति-दुर्मतिश्चेति। ते तु ग्रामक्षुद्रेषु कर्मवृत्तितोऽजीवन्। शीतवाय्वातपेष्वपि कामं वृत्त्यर्थं भ्रमन्तस्ते चत्वारः कष्टोपार्जितद्रव्यपाथेया रत्नद्वीपं जग्मुः। अत्र रत्नद्वीपे ते मूर्खाः कुपर्वतेषु सत्रासान्नल्पतेजोवतः पाषाणशकलान् रत्नभ्रान्त्या गृह्णन्तः प्रसन्ना बभूवुः। इह तैर्दिव्यालङ्कारदीप्यमानः श्रेष्ठपरिच्छदः कोऽपि महान् पुरुषो वृक्षच्छायाश्रितो व्यलोकि। अथ प्रसन्नमानसया प्रशान्ताख्यया भार्यया प्रेरितोऽसत्यवचनरात्रिविनाशसूर्योऽयं पुरुषस्तानब्रवीत्—युष्माकं रोचितैः पामरयोग्यैरेभिः पाषाणशकलैः किं? यानि परीक्षका नगरवासिनो हस्तेनापि न स्पृशन्ति। इतः पुरतो महागुणस्थानं माणिक्यपर्वतोऽस्ति, यस्य तेजःसु ध्वान्तानि तेजांसि च न चकासति। यदि तं पर्वतं गच्छत तत् तानि तानि रत्नानि प्राप्स्यथ येषामग्रे महातेजोवतां रत्नानां महन्मूल्यमप्यल्पकमस्ति। अथ शुद्धमतिश्चिन्तयामास अनेन नरेण मम साधु कथितं, ईदृशां जीवनं प्रकट-

यातायानशतानि विस्तारयामास । अथ सोऽपि कालेन निर्विण्णो दिव्यपुरुषवचनं विस्तारयन् माणिक्यपर्वतमाश्रित्य शुद्धमतेर्गति-(मोक्षं)प्राप । यस्तु दुर्मतिश्चतुर्थः पुरुष आसीत् स दिव्यपुरुषस्य वचनं निशम्यात्र निजनामयोग्यविचारे (दुष्टविचार इत्यर्थः)मनः स्थिरमकार्षीत् । कपटेन महत्त्वं प्राप्तोऽयं कोऽपि मायावित् पुरुषो रत्नद्वीपस्थितान् पुरुषान् यथेच्छं विप्रतारयति । अयं पुरुष आगच्छन्तं जनं मधुरवचसा सादरं विलोभ्य क्वचन नीत्वा क्षणान्निजं पाथेयमपि गृह्णाति । इत्थमस्मिन् पापाचारे मनो निश्चलं कुर्वाणः स दुर्मती रत्नद्वीपस्य मार्गमपि तत्याज । स भाग्यरहितो दुर्मतिः क्वचित् कूपावर्त्तशिलागर्तकर्दमकण्टकभरिते महाभयङ्करे विपिने पपात । ततो दुष्टप्राणिसमागमदुःखितस्तेषु तेषु दुःस्थानेषु पतन् विपिनान्निर्गन्तुमसमर्थो बभूव । अत एव हे भव्याः ! एतदन्तरङ्गदृष्टान्तं निशम्य बुद्धिमद्भिः शुद्धमतिवद्भवितव्यं न पुनर्दुर्मतिवत् ।

यन्निगोदनिवासस्तदनन्तजननामकं नगरं ज्ञातव्यं, तत्र कालपरिणामरूपश्चित्रगतिर्नाम राजा ज्ञातव्यः । यस्तु शुद्धमतिः स तद्भवमोक्षगो भव्यजीवो ज्ञेयः, यश्च योग्यमतिः स आसन्नसिद्धिवान् भव्यजीवसदृशो ज्ञेयः । यस्तु मन्दमतिः स भवे मन्दगतिर्दूरभव्यो ज्ञातव्यः, यश्च दुर्मतिः, सोऽनन्तसंसारदुःखभोग्यभव्यो ज्ञातव्यः । अथ तेऽमी चतुर्विधा जीवाः कथमपि कालपरिणामवशाद् व्यवहाराभिधानराशावाययुः । तथा कुग्रामाः कुभवा ज्ञेयाः, तापशीतवायुप्रभृतिकष्टसमुत्पन्नमकामनिर्जरापुण्यमल्पमल्पं निजपाथेयं ज्ञातव्यम् । मानुष्यकभवो रत्नद्वीपो ज्ञेयस्तत्र मिथ्यादर्शनानि कुपर्वता ज्ञेयाः, तत्राज्ञानतपांसि कुरत्नानि च ज्ञेयानि । तत्र चारित्रं वृक्षो ज्ञेयः,सद्गुरुर्महान् पुरुषो ज्ञेयः, भुवनत्रयप्राणिहितकारिणी दया तस्य रमणी ज्ञातव्या । यच्च सर्वज्ञप्रभुशासनं स माणिक्यगिरिर्ज्ञातव्यो ध्यानं च कर्मखानीनां खनने समर्थः कुद्दालको ज्ञातव्यः । श्रेष्ठतपोभिश्च श्रेष्ठपुण्या

मास, यदच्छिद्रमप्यनन्तैर्विशदैर्गुणैः प्रोतमासीत्। तद्रत्नधारणात् स शुद्धमतिर्देवदानवपूज्यां समृद्धिं लेभे, यतो मणिमन्त्रौषधीगुणा अचिन्त्य प्रभावा भवन्ति। प्रतिक्षणतद्रत्नसङ्गसुखनिर्भरश्रद्धावान् स शुद्धबुद्धिर्महाहर्षमपि( मोक्षम् )अलभत। अहो! भाग्यवतां किं न भवति?। तदुक्तं–"भाग्यं फलति सर्वत्र न विद्या न च पौरुषम्"।

अथ यो योग्यमतिरासीत् सोऽपि दिव्यपुरुषस्य वाणीनां गुणैः प्रसन्नस्तथा मूलाच्छुद्धमतिं वीक्ष्य लब्धनिश्चयः पूर्ववत् प्राप्तकुद्दालो ज्ञातः खानीः खनन् कृतप्रयासश्च बहुमूल्यं रत्नसमूहमपि लब्धवान्। असौ योग्यमतिः किञ्चिद्रत्नमूल्यसुखास्वादोऽभूत्, परन्तु तत्र लोकोत्तरं (अमूल्यं) रत्नं प्राप्तुमादरमादधौ। किञ्चिद् दिव्यं नगरं गत्वा रत्नलब्धलक्ष्मीकः स वाञ्छासहसम्पन्नभोगयोगश्चिरं स्थिरः सुखेन तत्र तस्थौ। ततो नष्टलक्ष्मीको लक्ष्मीप्राप्त्यर्थं माणिक्यपर्वताद् रत्नानि लब्ध्वा पुनः पुनः स यथेच्छं दिव्यानि नगराणि ययौ। अथ कदाचित् स योग्यमती रत्नद्वीपे माणिक्यपर्वतं गत्वा सप्ताष्टवारगमनश्रान्तो मनसि विचारयामास। साम्प्रतमपि हितैषिणा दिव्येन पुरुषेण मम तावच्छाश्वतसौख्यस्य कारणभूतममूल्यं रत्नमादिष्टम्। ततस्तत्प्राप्तये यत्नं करोमीति विचार्य तथा चकार, ततस्तदमूल्यं रत्नं लब्ध्वा स शुद्धमतिरिव शुशुभे। यस्तु मन्दमतिर्नाम नर आसीत् स दिव्यपुरुषवचनेष्वीदग्विमर्शस्पर्शेन मनश्चञ्चलं विस्तारयामास। तेजःस्थानान्येतानि प्रत्यक्षाणि रत्नानि परिक्षिप्यास्य पुरुषस्य तथ्यातथ्यसन्देहगोचरे वचने को नाम विश्वासं कुर्यात्?। इति निश्चित्य तैरेव पाषाणशकलैरखण्डानन्दो दिव्यं नगरं यियासुः स क्वचित् पल्लीं पपात। ततस्तदुचितलब्धस्वल्पमूल्योपभोगभोक्ता सोऽत्र सुखदुःखयोः संकरे वासरान्ननैषीत्। भुक्तलक्ष्मीकः स मेघवद् यत्र तत्र भ्रमन्नपि भूयो दैववशाद् रत्नद्वीपं जगाम, तथा पाषाणशकलानि लब्धवान्। ततस्तद्योग्यलब्धस्थानलक्ष्मीदुःखजीवनः स क्षीणाश एवं

श्रेष्ठागार इव, मन्त्रगेयापीडितरुत्तरः प्रगल्भदेवीवर इव, कल्याणानामाकरस्त्वं संसारदुःखपीडितैरस्माभिः प्राप्तोऽसि। तद् हे दया-सागर! अस्मान् संसारात् त्वमस्मान् पाहि! पाहि! प्रसीद! अस्मभ्यं दीक्षां देहि! साधुक्रियां शिक्षय!। इति प्रार्थितः श्रीसङ्घप्रमुखेभ्यः सूक्ष्मादिभ्यो यथाविधि दीक्षां तत्क्षणाच्च व्रतशिक्षां दत्तवान्। इत्थं सूक्ष्माद्याः श्रमणा धरणीप्रमुखाः साध्व्यश्च सुयशःप्रमुखाः श्रावका जयाप्रमुखाः श्राविकाश्च बभूवुः। इत्थं श्रीवासुपूज्यो भगवान् पापसमूहविनाशकं भुवनार्च्यं चतुर्विधं सङ्घं निश्चलत्वेन स्थापयामास। प्रभोर्यदा ज्ञानं भावि तदा व्रतमहं ग्रहीष्य इति ध्यानवती पद्मावती प्रभुणा दीक्षिता। अथ त्रिकालज्ञः स प्रभुर्गणधरनामकर्मणां तेषां सूक्ष्मप्रमुखानां पट्पष्टेर्महात्मनां तत्त्वपृच्छात्रयेण श्रुतज्ञानवृक्षस्य प्रथमं बीजमिवोत्पत्तिर्विगमो ध्रौव्यमिति पदत्रयं तत्समये क्रमशोऽब्रवीत्। अथ ते त्रिपदानुसारत एकादशाङ्गानि चतुर्दशपूर्वस्थं द्वादशमपि विस्तारयामासुः। तत्समयेऽवसरवित् त्रिदशैः महितः पुरन्दरः शीघ्रं सुगन्धिचूर्णभरितं मणिस्थालमादाय प्रभोरग्रे तस्थौ। अथ प्रभुरुत्थाय तेषां सुमतीनां शिरसि चूर्णक्षेपं विदधन् सूत्रेणार्थेन च तदस्तदुभयेन च क्रमशो द्रव्यैरथ गुणैः पर्यायैर्नयैरपि च तत्समयेऽनुयोगस्य गणस्य चानुज्ञां दत्तवान्। अथ दुन्दुभिनादैर्माङ्गलिकोद्गारगीतिभिरमरदानवमनुष्या आनन्देन च तेषु गणधरेषु वस्त्राणि चिक्षिपुः। पुनः सिंहासनोपविष्टो विश्वगुरुरग्रे स्थितानां मुनीशानां गणधरयोग्यां तत्त्वशिक्षां ददौ। तस्मिन्नवसरे स्थूलैरुज्ज्वलैरखण्डैरगद्रव्यप्रमाणः शालितण्डुलैस्तत्कार्यजैः रचितः, देवन्यस्तैः सुगन्धिद्रव्यैर्विपुलीभूतसुगन्धिः, देवमनुष्योदश्चितः, वसुपूज्यमहीपेन कारितो बलिर्वाद्येषु वाद्यमानेषु कामिनीलोके गायति पूर्वद्वारेण समवसरणे प्रविवेश। प्रभोर्दत्तप्रदक्षिणो मनुष्यैरम्र उत्क्षिप्तः स बलिः कल्याणलक्ष्मीनर्त्तनप्रारम्भे कुसुमवृष्टिरिव रराज। भक्तिमन्तो मनुष्याः सुगुरोर्वचनमिव पृथिवीतलेऽपतन्तं बलेरर्धभागं देवा

निर्मला रत्नराजिर्ज्ञेया, रत्नपर्वतमेखलायां च यच्छ्रेष्ठं रत्नं तत् सम्यक्त्वं ज्ञातव्यम्। माणिक्यपर्वतस्तुतिव्याजात् पञ्चातिचारपरिहारो या देवदानवपूज्या लक्ष्मीस्तत् केवलज्ञानं ज्ञातव्यम्। केवलज्ञानसञ्ज्ञाढ्यः परमानन्दः स मोक्षगमनोत्सवो ज्ञेयः। इति कोऽपि भव्यमनुष्योऽत्र भवे कृतकृत्यो भवेत्। आसन्नसिद्धिकस्तु तपसां फल इच्छुकः स्यात्, तेन दिव्यनगरेषु भवेषु भोगा भोक्तव्या इति तन्मूल्यसमुद्भवं फलं ज्ञातव्यम्। तस्य मनुष्यस्य श्रेष्ठनगरेषु यत् सप्ताष्टवारं गमनागमनं ते तु सुकृतोदयव्ययोत्थाना मनुष्यदेवभवा ज्ञातव्याः। दिव्यनगरीगमनमभिलषतो दूरभव्यस्य यः पल्लीपातस्तत् स्वल्पभोगसमृद्धि भूतप्रेतादिजन्म ज्ञातव्यम्। सुखदुःखभागी दूरभव्योऽपि महतो भवान् भ्रमन् पुनर्गुरोर्वचनं लब्ध्वा भव्यो भूत्वा मोक्षं प्राप्नुयात्। अभव्यस्तु गुरुद्वेषान्मनुष्यजन्ममार्गदूरगो दुर्गतिसमूहसञ्चाराभिधाने कान्तारे प्रविशति। तत्र विपिने दुष्कर्माभिधैर्दुष्टप्राणिभिर्भृशं पीडितोऽसौ कूपादिस्थानसदृशेषु (नरकादिरूपेषु) दुःखस्थानेषु पतति। एषु स्थानेषु स्पष्टं वारंवारं दुःखाद्दुःखान्तरे पतन्नयं कदाचिदपि कुजन्मनां पारं न यायात्। इत्यन्तरङ्गदृष्टान्तमवबुध्य सुमतयः सज्जना अहितत्यागपूर्वकं स्वीयहिते तत्परा भवन्तु!।

## ॥ इति चतुर्विधजीवविचारावच्छिन्नान्तरङ्गकथा ॥

इति प्रभोः श्रेष्ठतरं वचनं नियम्य पीयूषभरितश्रवणाः प्राप्तप्रबोधा जनाः स्वश्रेयस्युद्यता बभूवुः। लघुकर्माणः सूक्ष्मदर्शिनः सूक्ष्माद्या बहवो मनुष्याः कृताञ्जलयः प्रभुं विज्ञापयामासुः। हे प्रभो! महाविपिने भ्रान्तैः श्रेष्ठो वैदेहक इव, गर्ते पतद्भिर्दार्ढ्यवान् करावलम्ब इव, क्षुधादग्धैः पुरतोऽभीष्टदानशालेव, रोगग्रस्तैः स्वीकरणीयो महावैद्य इव, मरुभूमौ ग्रीष्मे दिवसे सञ्चारात् परिश्रान्तैरद्भुतो जलाशय इव, बहुदिनात् प्रवासस्थैरतर्कितः प्रियालोक इव, रिपुशस्त्रप्रहारत्रस्तैः शक्तिशाली शरण्य इव सिन्धुपूरवेगाकृष्टैरुद्यतः

# ॥ श्रीवासुपूज्यचरित्रम् ॥

## [सप्तमो भागः]

[पद्यमयस्य मूलग्रन्थस्य चतुर्थः सर्गः प्रारभ्यते]

अथ सद्गुणैर्विनय इव मुनिभिरनुगम्यमानः प्रभुर्निजचरणैर्वसुधां पवित्रयन् प्रतस्थे। जघन्यतोऽपि प्रभोः समीपे देवानां कोटिः सेवार्थमभूत्, प्रतिदिवसं च सर्वत ऋतुवातेन्द्रियार्था अनुकूलाः, कल्पवृक्षोपमस्यास्य विश्वपतेर्गच्छतो वृक्षा अवनतमस्तकाः शोभनाः शकुनाश्च बभूवुः। मार्गे गच्छतः प्रभोः समीपे निजदुराननलं जानन्तः कण्टकास्त्रपिता इव नीचवदनत्वमभजन्। यत्र प्रभुरगच्छत् तत्र कुत्रचिदतिवृष्ट्यवृष्टिरोगमारिशत्रुत्वेतिदुर्भिक्षनिजान्यचक्रभयान्यपि नासन्। अनेधितनखश्मश्रुकेशः स्याद्वादोपदेशकः प्रभुर्देशेषु विहरन् क्रमशो द्वारिकानगर्यासन्नक्षितिमगमत्। अस्यां देवसमूहैः क्षणात् **समवसरणे** रचिते **जिनेश्वरः** पूर्ववत्तत्र प्रविश्य सिंहासनं भूषयाञ्चकार। तत्समये भूपमान्यास्तन्मनुष्या द्वारिकाभर्तुर्द्विपृष्ठस्य चेतःस्वाद्यं समवसृतिप्रमुखं सकलं वृत्तान्तं न्यवेदन्। धराधवस्तेभ्यो हर्षेण रूप्यस्य सार्धा द्वादशकोटीर्दत्तवान्, तथा च स्वज्येष्ठभ्रात्रा **विजयेन** सह **समवसृत्यां** जगाम।

गृहीतवन्तः। पृथिव्यां पतितस्य तस्य बलेरर्धं राजा जग्राह: शेषं तु स्वल्पं स्वल्पं मनुष्यास्तीर्थशेषामिवागृह्णन्। तस्य बलेर्माहात्म्येन पूर्वोद्भवा रोगाः क्षणादेव दूरीभवन्ति, भूयो नूतना रोगाः षण्मासाभ्यन्तरे न सम्भवन्ति। मातुलिङ्गबाणधारिणौ दक्षिणौ बाहू धारयन् नकुलधनुर्दण्डाभ्यां वामौ भुजौ शोभयन् धवलकान्तिर्मरालपक्षिवाहनः कुमाराभिधानो यक्षः श्रीवासुपूज्यप्रभोरस्मिंस्तीर्थेऽधिनायको बभूव। घनश्यामा घोटकगा शक्तिवरदानलशालिनौ दक्षिणौ भुजौ धारयन्ती गदाकुसुमशोभितौ वामौ करौ धारयन्ती स्वामिनः सततं सन्निहिता जाता चण्डाभिधाना शासनदेवता समुत्पन्ना। अथ नाकिभिरन्वितः प्रभुरुत्थायोत्तरद्वारेण निर्गत्य यथा हंसः कमले विश्राम्यति तथा स देवच्छन्दे व्यश्राम्यत्। अथ प्रभोराज्ञां प्राप्य तथा जिनेश्वरस्तुतिं विधाय शेषेषु मुनिराजेषु यथाक्रममुपविष्टेषु तत्समये प्रभुचरणपीठस्थः सूक्ष्मनामा गणधरशिरोमणिर्जगल्लोकमनःप्रीत्यर्थं धर्मदेशनां विस्तारयामास। सर्वज्ञप्रभुवचनघनसारलवानुकारं धारयन्तीं शान्तिपीयूषकुसुमवृष्टिं श्रवणसुखकरीं प्रभुशिष्यभारतीं निशम्य विपुलभक्तिसमूहेन मुनीन् प्रणम्य "त्रिभुवनानन्ददाता तीर्थङ्करप्रभुकृतप्रतिष्ठ एषोऽनुपमः श्रीसङ्घो जयतात्" इति मुखहिमांशुकिरणमनोहराशिषं विस्तारयन्निव लोकः स्वीयं स्वीयं गृहमगच्छत्॥

॥ इति श्रीवर्द्धमानसूरिकृतस्य पद्यमयस्य वासुपूज्यचरित्रस्य संस्कृतगद्यानुवादे षष्ठो भागः समाप्तिमफाणीत्॥ श्रीरस्तु॥

[पद्यमयस्य मूलग्रन्थस्य तृतीयः सर्गः समाप्तः]

शीरमणीतिलको हरितिलको नाम भूपो बभूव। तस्य राज्ञो मनोहरगुणैः शोभमाना गौरीनाम्नी प्रेयसी बभूव। उपयाचितलक्षाभिम्नयोर्दम्पत्योर्निपुणजनलक्ष्योत्तमलक्षणोऽपुत्रतादोषनाशकस्तनयोऽभवत्। अस्मिंस्तनये गर्भस्थिते भूपेन हरितिलकेन पराक्रमतः शत्रवो जिता इति जननी महोत्सवपूर्वकं तनयस्यास्य "विक्रम" इति नाम चकार। समये विनयवान्नुपाध्यायाधीनः स विक्रमः सर्वशास्त्रेष्वधीती सकलकलानिष्णातश्चाभूत्। मदनगजरमणविपिने यौवने गन्तुमुद्यन्तं तं विक्रमं राजा द्वात्रिंशद्राजकुमारीभिः पर्यणाययत्। अथ यावदसौ मनोहरेषु द्वात्रिंशन्निवासगृहेषु ताभिर्नृपसुताभिः क्रीडितुं प्रवृत्तोऽभूत् तावदकस्माद्रोगैः परिवेष्टितः कुष्टकासश्वासशोफशूलजलोदरैः शिरःपीडागडुनेत्रार्त्तिवान्तिवायुभिः स विक्रमः पीडितः। यथा मूर्खे हितं वचनं व्यर्थं तथास्मिन् विक्रम उपयाचितवस्तिप्रभृतिकर्म मन्त्रौषधीक्रियाः सर्वं व्यर्थमभवत्। शीर्णनासिकौष्ठपाणिचरणः स व्याधिभिर्भृशं पीडितः शय्यागतः सततं कष्टं रारटीति स। ततः स पीडाशान्त्यर्थं नगरबहिःस्थस्य धनञ्जयनाम्नो यक्षस्य शतं महिषान् मेने। तत्समये क्रीडाविपिने दुष्कर्मान्धकारत्रासदिवसो विमलकीर्त्तिनामा केवलज्ञानी भगवान् समवासरत्। ततोऽधिकभक्तिमान्नानन्दसन्दर्भोत्सुकैर्नगरवासिभिर्जनैरन्वितो वसुधाधवः केवलिनं भगवन्तं नमस्कर्त्तुं जगाम। तज्ज्ञात्वा मनीषी विक्रमोऽपि विचारयामास—हा! लाभैर्लोभा इव मम रोगा औषधैरेधन्ते। पर्वतेषूदग्रैः करिदशनैरिव मम व्याधिषु तैर्मुद्रामण्डलमन्त्रौषधैरुपयाचितैर्भग्नम्। तन्मामकीना रोगफणिनो यद्बलाद् दर्पात् सर्पन्ति तदन्धकारमद्य शमयामि, ज्ञानसूर्यं यतिं भजामि। अथोद्यमसाहस्यसौ विक्रमो राजानमिति व्यजिज्ञपत्—शान्तिसमूहं केवलिनं नमस्कर्त्तुं मां सह नयत!। अथ महीनाथनिरश्रुरूर्णमुक्ताराजिघटितश्मश्रु वदनं सृजंस्तं मनुष्यविमानेन सुखं सममनयत्। सुवर्णकमलसिंहासनमध्यनिषण्णं मधुर-

कृतिचन्द्रो द्विपृष्ठः प्रभुं प्रदक्षिणीकृत्य प्रणम्य च भ्रात्रा सह पुरन्दरस्य पश्चाद्भागे समुपाविशत्। अथ त्रिभुवनपतिर्जगल्लोकप्रबोधाय सकलभाषानुगामिनीं धर्मदेशनां करोति स। प्राणिनामनन्ता भवाः स्युः परन्तु **मनुष्यभवः** प्रशस्यते, यदमुना **मनुष्यभवेन** स्वर्गमोक्षप्रमुखाः सुखलक्ष्म्यः समुपार्ज्यन्ते। एषोऽपि **मनुष्यभवो** विदुषां चतुर्विधपुरुषार्थानां साधकत्वेन हर्षायास्ति, यतस्तान् पुरुषार्थान् विना जन्मसंख्यापूरणकारणेन **मनुष्यभवेन** किम्?। यस्मिन् पुरुषे पुरुषार्थाः शोभन्ते स पुरुषः प्रशंसनीयः, यतस्तदेव सरः सेवनीयं यत्र जलानि स्थिरत्वं गच्छेयुः। धर्मार्थकाममोक्षनामानस्ते पुरुषार्थाश्चत्वारो लोके प्रसिद्धाः सन्ति, किन्त्वर्थकाममोक्षाणां कारणं **धर्म** एव वर्त्तते। तस्मात् सकलपदार्थतरूणां बीजं नूनं धर्म इति मन्वानैर्निर्मलज्ञानवद्भिर्जनैरयं **धर्मः** प्रतिदिवसं सेवनीयः। एतद्धर्मवृद्ध्यर्थं निर्मलमतिभिर्गृहस्थैर्द्वादशानि व्रतान्यपि विज्ञाय निषेवणीयानि। तत्राहिंसा सत्यमस्तेयं ब्रह्मचर्यमपरिग्रह एतानि पञ्चमहाव्रतानि मुनेस्तु सर्वतो भवन्ति। गृहमेधिनाममूनि पञ्चाणुव्रतानि देशतो भवन्ति, तथा **दिगवकाश-भोगोपभोगा-नर्थदण्डाभिधं** त्रिधा **गुणव्रतं** ज्ञातव्यम्। तथा **सामयिकं देशावकाशः पोषधसेवनमतिथिः संविभाग** इत्येवं चत्वारि **शिक्षाव्रतान्यपि** भवन्ति। परन्तु द्वादशानां व्रतानामुत्कृष्टजीवनरूपं **सम्यक्त्वमस्ति** यथा गुणानां जीवनमुदारता तपसां वा क्षमासमूहः। **सर्वज्ञे** प्रभौ सद्गुरौ धर्मे च या हृदये निश्चला श्रद्धा सेति **सम्यक्त्वं** कथ्यते, यत्तत्त्वज्ञैरात्मनो हितं ज्ञातव्यम्। अस्य **सम्यक्त्वस्य** माहात्म्याद् विक्रममहीपालस्येव मनुष्याणां सुराः सेवाकर्त्तारस्तथा विस्तारिण्यः सकला लक्ष्म्यो जायन्ते। तथाहि—

अथ जम्बूद्वीपे पुष्पसदृशं कुसुमपुरं नाम नगरमस्ति, यत्र काञ्चनमयावासकान्तयः केसरतां धारयन्ति। इह नगरे पृथि-

शान्ततामलभत। अथ पातकभारेणोच्चैर्गतिं गन्तुमसमर्थः स राजा नीचैर्गतीनां सीमानं सप्तमीं दुर्गतिमगमत्। स मुनिरपि तदालोच्य, प्रतिक्रम्य तत्पापमतिक्रम्य तीव्रं तपस्तप्त्वाऽऽयुःक्षयाद् देवलोकं जगाम। अथ स पृथिवीपतिजीवस्तु सप्तमान्नरकादुद्धृतः स्वयम्भूरमणाख्ये सागरे मत्स्यत्वं ययौ। स मत्स्यस्ततः सप्तमीमेव जगतीं जगाम। ततोऽप्युद्धृत्य मत्स्योऽभवत्। ततश्च षष्ठीं दुर्गतिं ययौ। अथ चण्डालरमणीभवं लब्ध्वा भूयस्तत्रैव जगाम। ततो भयङ्करसर्पो भूत्वा स पञ्चमीं दुर्गतिं गतवान्। पुनस्तिमिजन्मान्तरस्तामेव भूमिं ययौ। ततोऽथ सिंहो भूत्वा स चतुर्थं नरकं जग्मिवान्। पुनस्तिमिशरीरान्तरितस्तत्रैव जगाम। ततः शशादनो भूत्वा स तृतीयं नरकं जगाम। अथ गृध्रशरीरं गृहीत्वा तामेव दुर्गतिं ययौ। पुनः सर्पो भूत्वा स द्वितीयां भूमिं गतवान्। ततो भुजगो भूत्वा स पुनस्तत्र नरके जगाम। ततो मत्स्यो भूत्वाऽसौ प्रथमां वसुधामयासीत्। अथ स जीवः पक्षी, एकेन्द्रियः, विकलेन्द्रियः, हीनेन्द्रियसमूहस्तिर्यङ्नीचजातिर्मनुष्यो देवश्चाभवत्। ततश्च नारको बभूवेति स शतशो भवचरोऽभूत्, निरं च विविधयोनिसमुद्भवां भूरिपराभूतिमशिश्रियत्। विपत्तीनां स्थानं स वन्धार्त्तिवधप्रमुखाभिः कष्टकोटीभिर्व्याकुलो जन्मनि जन्मनि मृत्युमलभत। इति भयङ्करा विपदः सहमानेन तेन बह्व्योऽवसर्पिण्य उत्सर्पिण्यश्च निन्यिरे। अथाकामनिर्जराक्षामकर्मा स वसन्तपुरनिवासिनः सिंहदत्ताख्यस्य गृहस्थस्य नन्दनोऽजायत। अथ यौवने सोऽयं तापसो भूत्वा दुस्तपं तपस्तप्त्वाऽज्ञानकष्टस्य तु फलं तत्र तनयत्वमाप। मुनिर्हिंसाजैनशासनद्वेषसमुत्पन्नं तत् पापमेष ताभिस्ताभिस्तीव्राभिः कष्टकोटीभिरशोषयत्। हे राजन्! शोषितावशिष्टेन तेन दुष्कर्मणायं तव तनयो रोगसमूहस्य पात्रं बभूव। इति दुःश्रवं वचनं निशम्य भयभीतो महीपश्चकम्पे, स विक्रमकुमारस्तु जातजातिस्मरण उवाच–हहा! हे प्रभो! पूर्वं विवेकरूपं दीपमलब्ध्वा मोहान्धकारहतो वर्त्मभ्रष्टः कष्टमहासागरे-

वादिनं तं मुनिराजं धराधवः कुमारेण सह ववन्दे । ततो नराणां पापरूपं विषं पीयूषरसप्रवाहधारिण्या भारत्या हरन् मुनिराजो धर्ममादिदेश । अथ धर्मदेशनान्ते राजा हरितिलको विक्रमवचनेन यतिराजमपृच्छत् । अयं कुमारः सर्वथाऽऽरोग्यवान् कथं न भवति ? । अथ रदनकिरणैर्वदने प्रकटदृश्यस्फुरद्धर्म इव ज्ञानविनाशितसन्देहः केवली भगवानब्रवीत् । पुराऽपरविदेहपृथिवीरत्ने रत्नस्थलाभिधाने नगरे कपटानां स्थानं पद्मनामा दुष्टभूपोऽभवत् । मृगयारसासक्तः स राजाऽन्यदा वनभूमितलं जगाम । तत्र च कायोत्सर्गध्याने स्थितं सुयशोनामानं मुनिमद्राक्षीत् । धर्मज्ञानयोः शत्रुः स पद्मराजा धर्मज्ञानाधारे मुनिराजस्य हृदये कङ्कपत्रं निचखान । अथ निजव्यलीकसन्देहेन मिथ्यादुष्कृतवचनो धर्मसमाश्रयवृक्षः स मुनिर्घातव्याकुलो वसुधायां पपात । अथ धिगिति वदन्तं लोकं मारयन्नसौ नृपः शीघ्रं सचिवैः पञ्जरे क्षिप्त्वा पापलक्ष्मीक्रीडाकीरः कृतः । तस्य राज्ञस्तनयं पुण्डरीकं राज्ये संस्थाप्य नरकयोग्यः स महीपतिर्मन्त्रिभिः पञ्जराद्युक्तिपूर्वकमत्याजि । अथ स सुयशा यतिपतिस्तु पञ्चनमस्कारान् स्मरन् षड्जीवसमूहान् क्षमयँल्लवसप्तमो देवो बभूव । स राजजघन्यः पद्मस्तु साधुसमुदाये भृशं शत्रुभावं वहंल्लोकैर्निन्द्यमानोऽपि तन्नगरारामं न मुमोच । अथैकदा ध्यानासक्तः कीर्त्तिप्रक्षालिताकाशः सोमनामा मुनिस्तेन राज्ञा स्वात्मा दुर्गताविव दण्डपातेन पृथिव्यामपाति । ततः पृथिवीजीवान् क्षमयित्वा शरीरं प्रमार्ज्य तथैव प्रतिमास्थितो यतिरमुना पापेन राज्ञा प्रहारेणापाति । इति भूयोभूय एवं विदधन्नेष राजा, अवधिज्ञानविदितराजजन्मना पवित्रेण साधुनेति तिरस्कृतः । रे ! रे ! दुष्ट ! निजतुष्टये शान्तिगम्भीरान् साधून् मारयंश्चैवं पापान्न बिभेषि तदा मादृशेभ्योऽपि कथं भीतोऽसि ? । रे ! दुष्ट ! सुयशःप्रमुखाः साधवस्त्वामक्षमन्त, परन्त्वहं न क्षमिष्ये, हन्मि, निजाभीष्टं दैवतं स्मर ! । इति कथयित्वा स मुनिः सौदामिन्या वृक्षमिव तेजोलेश्यया त्वरितं तं राजानं भस्मसात्कृत्वा नीरद इव

निजमायुःकाण्डं कथं समाप्तं करोषि ? । अथ हास्यप्रक्षालिताधरो राजकुमारो वचनं जगाद्–भो यक्ष ! जीवहिंसापातके स्वमात्मानं न क्षिपामि । कृतबहुपालना अपि कस्यचिदपि प्राणाः स्थिरा न, तत्कः कृत्याकृत्यज्ञस्तत्कृतेऽकार्यमपि विदध्यात् ? । इति श्रुत्वा गुह्यकः क्रोधेन, यथा समुद्रोऽभ्यर्णाचले तरङ्गमास्फालयति तथा विक्रमकुमारं चरणसंग्रहादुत्पाट्यास्फालयामास । ततो गुह्यको मूर्च्छां दूरीकृत्य क्रोधान्धः पुनस्तमुवाच–रे रे ! अदेयवदद्यापि मामकं देयं किं न यच्छसि ? । त्वं जीवेषु दयां विदधासि तथा धर्मप्रकटीकरणकारणे मद्व्यथता गतेऽमुष्मिन् स्वजीवे कृपां न करोषि ? । अथ धर्माश्रयः साहसी विक्रमकुमार उवाच–धर्मज्ञः को नाम निजकजीवकृते शतं जीवान् हन्यात् ?। हे यक्ष ! धिक् ! जीवलक्षहिंसयेह तवापि दुर्गन्धमयं स्थानं फलमस्ति, परत्र च नरकवेदना । त्वं पूर्वभवं स्मर ! धर्मादेव सुरत्वं प्राप्तोऽसि, तज्ज्ञानवानपि पापकार्ये सञ्जातकीडस्त्वं किमसि ? । अतः पुण्यैकपरिणामेन जगदानन्दकारणेन वन्दनादिना तवापि हर्षं धर्त्तु युज्यते । इति युक्तिमद्भिस्तस्य विक्रमस्य वचनैर्नम्रीभूतहृदयो गुह्यको व्याजहार–अहो ! त्वयाऽहं साधु प्रतिबोधितः । ततोऽद्यापि पापोचितैः शरीरिणां वधैर्न प्रसीदामि, मनुष्याणां नमस्कारमात्रेण प्रसन्नतां यास्यामि । हे विशदाशय विक्रमकुमार ! त्वमपि मम नाम नमस्कारं कुरु ! तेनैवाहं ते सकलं किल सम्पूर्णमनुमंस्ये । अथ कुमारोऽब्रवीत्–हे गुह्यक ! प्रणामो नाम प्रह्वासविनयप्रीतिस्वामिभावनाभेदेन पञ्चविधोऽस्ति । मानसोत्सङ्गितमत्सरैः सत्कारैः परिज्ञानतिरस्कारेभ्योऽपि यः क्रियेत स प्रह्वासनामा नमस्कारः । जनकादिभ्यः सुतप्रभृतिभिर्विनयेन यः क्रियेत तं नीतिकोविदा विनयप्रणाममामनन्ति । प्रेमवद्भिर्यो विधीयेत तं प्रीतिप्रणामं कथयन्ति, कामं स प्रीतिकोविदेभ्यो वयस्यादिभ्यः प्रसन्नतार्थं क्रियेत । पुनः गत्कारमानलक्ष्मीदानशालिनि प्रभौ य ऐहिको विधीयते तं स्वामिप्रणामं कथयन्ति । सद्गुरौ रागरहिते च तीर्थङ्करे

ऽपतमहम् । भयङ्करैस्तत्तरङ्गैरितश्चेतश्च ताड्यमानो दैवात् तत्तटमासाद्यास्मिन् रोगकर्दमसंकटे मग्नोऽभूवम् । हे जगद्गुरो ! हे प्रभो ! हे निःस्पृह ! तदनवलम्बितं हस्तालम्बं देहि ! इतश्च मामाकर्ष ! इह मयि दयां विधेहि !। अथ प्रभुः करमिव सम्यक्त्वैकगुणप्रोतद्वादशव्रतालङ्कारं श्रावकधर्मं प्रततान । अथ प्रमोदसञ्जातपुलकाङ्कुर आनन्दाश्रुलवमिश्रलोचनो विक्रमकुमारो यथाविधि श्रावकधर्मंमग्रहीत् । ततो राजा भद्रको बभूव। अथ मुनिराजं प्रणम्य तौ नगरं जग्मतुः, ज्ञानामृतसमुद्रो मुनिश्च पृथिव्यां विजहार । धर्मवृक्षमूलसम्यक्त्वरसास्वादविहितादरो विक्रमकुमारः क्रमशश्छीन्नपापमूले रोगैर्मुक्तो बभूव । नूतनप्रोल्लासितलावण्यपवित्रसकलशरीरशोभो धर्मभूषणः स विक्रमो मुक्तेरपि प्रियतमोऽभवत् । अथैकदा स धनञ्जयो यक्षो रात्रिशेषे प्रत्यक्षो भूत्वा तमुवाच– मम शक्त्या त्वं नीरोगशरीरोऽसि, ततो मे शतं महिषान् यच्छ !। अथ विक्रम उवाच–हे यक्ष ! महिषान् याचंस्त्वं किं नाम न लज्जसे ? मम शरीरं तु मुनिकथितेन धर्मौषधेन नीरोगमभूत् । हे यक्ष ! विलोकितविश्वासं कष्टतः समुपलब्धं धर्माभिधमौषधं को नाम विद्वाञ्जीवहिंसापापसमुद्रे क्षिपेत् ? । अथ यक्षपतिरब्रवीत्–मामकीनं यशोऽन्यस्य यच्छसि ? ततस्तव तत्करिष्यामि येन कामं पश्चात्तापमनुभविष्यसि । इत्युक्त्वा यक्षेऽन्तर्हिते दक्षशिरोमणिर्विक्रमकुमारोऽनाकुलहृदयः कृत्यकार्याण्यकार्षीत् । एकदा विक्रमकुमारस्तत्रामरनिकेताभिधानारामलक्ष्मीमुकुटे चैत्यमन्दिरे कल्याणकमहोत्सवे जगाम । ततः स्नात्रविलेपनपूजननाटकस्तुतिमहोत्सवैर्जिनेश्वरस्य यात्रां जनयित्वा यावदेष न्यवर्त्तत तावत् स धनञ्जयो यक्षः स्वकेलिकान्तारोत्सङ्गे तस्य भयव्याकुलं सकलं सैन्यमस्तम्भयत् । अथ स गुह्यको यमवह्निराक्षसान्धकारकोटिरचितामिव हतगगनचरस्फूर्त्तिं स्वमूर्त्तिं मायया विरच्य रोषप्लोषितया भयङ्करमेगघर्घरनादया वाण्या तं राजनन्दनं साक्षेपमिदमुवाच । रे पुरुषाधम ! मम महिषान् कथं न ददासि ? असमयेऽपि

दीप्यमानसूर्यकिरणकेसरजलशोभामनोहरया वसुधया नगराय निनाय। अथ महीजानिः प्रतिमार्गनागरिकरमणीनयनकमलतोरणे नगरे महोत्सवपूर्वकं विक्रमकुमारं प्रावीविशत्। अथ कियता कालेनैष राजशिरोमणिर्विक्रमे राज्यभारमारोप्य नामशेषत्वं ययौ।

अथ विक्रमो राजाऽनित्यताध्यानपीयूषसागरतरङ्गमज्जनं विदधज्जनकशोकवह्निसम्भवं तापं तत्याज। अथ विक्रमो राजा सुवर्णमिव जनकशोकवह्निविशेषनिर्मलं विवेकं हृदयाभूषणं व्यधात्। ततस्तेन न्यायकल्पवृक्षोद्यानच्छायामध्ये निवेश्य पृथिवी सर्वाङ्गं जिनेश्वरमन्दिरालङ्कारैरभूष्यत। अत्र राजनि पृथिवीतलं सप्तव्यसनरहितमत्यक्तपुण्योद्योगमभवत्, प्रजा नृपवच्छोभन्ते। अथ कदाचिदुत्कटः सन्निपात इव कलिङ्गदेशवासवो यत्र आकस्मिकापातपूर्वकं तद्देशविनाशायाययौ। मृगेण मृगपतिरिवाद्भूतबलेन तेन कस्यापि दैवस्य प्रभावात् स विक्रमभूप आचक्रमे। अथ सैन्यधूलिभी रविमण्डलतेजांसि विनाशयन् पृथिवीपतिर्विक्रमोऽपि तस्य सम्मुखमाजगाम। प्रकटप्रचण्डपराक्रमकार्ययोस्तयोर्यमविक्रमराजयोर्वीरपञ्चाननविनाशकः संग्रामः प्रवृत्तोऽभूत्। समुत्पन्नदैवप्रभावस्वसंक्रमो जितविकटसेनाकोटिर्यमो विक्रमनृपमुत्कटे संकटेऽनयत्। तत्समये स्मरणमात्रसमुपस्थितो यक्षः कृतबाहुसंयमं यमं चरणसमीप उपायनीकृत्य विक्रममपश्यत्। उद्यमरहितं दीनवदनं रिपुं दृष्ट्वा विपुलदयाशयो विक्रमो बन्धादुन्मुच्य स्वदेशं गन्तुमाज्ञापयामास। ततोऽनष्टमित्रभावं गुह्यकं सन्मान्य प्रणम्य च निवासायादिश्य निजनगराय भूपः प्रतस्थे। अथ यशोऽलङ्कार पृथिवीकान्तो मङ्गलशृङ्गारमनोहराया नगर्य्या हृदये (मध्ये)रथ्यानयनमार्गेण प्रविवेश। तस्मिन् भूपे धरां शासति सौराज्यसमृद्धा शोभमाना नगरनिवासिनो महोत्सवैः सततं सुरान् देवलोकाद् वसुधामानिन्यिरे।

अथैकदा घोटकश्रेणिक्रीडायै बाह्यपृथिव्यां गच्छन् महीभर्त्ता महोत्सवलीनभूरिजनं किमपि गृहमदाक्षीत्। अथाश्वान् वाहयित्वा

यः क्रियते तं विद्वांसो भावप्रणामं कथयन्ति। अतो हे यक्ष! त्वं विचारय! एतेषु पञ्चविधेषु नमस्कारेषु त्वं कं नमस्कारमर्हसि? इति राजपुत्रस्य वचनं श्रुत्वा धनञ्जयो यक्षो व्याजहार–हे राजकुमार! त्वं मयि भावमयं नमस्कारं विधेहि! यद्भुवनोत्पत्तिसंहारोद्धारकारणं सुरोऽहमस्मि। यतः संसारसागरसमुत्तारतरणीभूतसमृद्ध्यः सकलदर्शनदेवता मदंशा एव द्योतन्ते। हे विक्रमकुमार! मम प्रणाममात्रेणानुलङ्घनीयस्तव भवार्णवश्चरणलङ्घनीयत्वं गमिष्यति। अथ हास्यस्यूताननो राजकुमार उवाच–हे गुह्यक! क्रियापापान्मयाकृष्टस्त्वं वचनपातके मा पत!। जगतामुत्पत्तिसंहारोद्धाराः सन्ति न वा सन्तीति त्वं समीचीनतया न वेत्सि स्वं च तत्कार्यसमर्थं ब्रवीषि। यच्छरीरतेजसा तव दृष्टिः सहसा लुप्यते तैर्देवेन्द्रैः स्तुतान् देवान्निजांशान् दर्शनदेवता वदसि। त्वं स्वयं संसारसागरे चञ्चलत्वेन तिमिरिव दृश्यसे, ततो नमस्कारात् तदुत्तारं मे कुतो ब्रवीषि। तन्निष्फलेनैव वचनेन वृथा पापं मा कुरु! अस्मिञ्जन्मनि तीर्थङ्करप्रभुमन्तरा मम नमस्कारो न भवेत्। इति पृथिवीपतितनये कथयति स यक्षराज इमां विवेकनिर्मलां भारतीमब्रवीत्। हे राजकुमार! त्वादृशोऽनुपमस्वरूपवान् धैर्यवान् धर्मवान् वाग्मी च कोऽपि पुरुषः कुत्रचिन्न मया व्यलोकि। त्वयाहं वचनैर्जितस्तेन तावकः सेवकोऽस्मि, निर्मलधर्मोपदेशाच्च त्वं मम सद्गुरुरसि। हे कुमार! यद्यहं तव शिष्यस्तदा स्वसेवकाय मह्यं निवासार्थं निजहृदयैककोणं देहि! येन हृदयगतां तव गुणश्रेणिमवैमि। प्रभो! यदीदं मम चेतस्तव जिनसेपोत्सवं जानीयात् तदा स्वं मानसं कदापि त्वया न विरहयिष्यामि। हे स्वामिन्! कचिद्विकटे संकटेऽहं स्मर्त्तव्य एव यतो हि सेवकानां प्रभावयमेव महानवसरो भवति। इति कथयित्वा राजपुत्रमेनमापृच्छ्याऽदृश्यो भूत्वा च स यक्ष आश्चर्यमयकुमारचरित्रचमत्कृतः स्वनिलयं जगाम। ततो विदितसमाचारः पृथिवीपतिः प्रभातशेषायां विभावर्यां त्वरितं राजकुमारसमीपं जग्मिवान्। स हर्षेण कुमारमालिङ्ग्यो-

मयामीन् । अथ स विक्रमश्चिरप्रेमसम्बद्धां श्रद्धां परिणयन्निव कर्मदारुकुठारं श्रीगुरुं प्रदक्षिणीचकार । अथ वसुधाधवो गुरुं प्रणम्य यथोचितं विष्टरं सिषेवे, तथा तद्भारतीवृष्टिधारासम्पातचातकः शुशुभे । अथ धरणीपतिर्दीक्षार्थं मुनिराजं प्रार्थयित्वा जैनशासनस्योन्नतिकरणार्थं भूयः पुरमगच्छत् । अथ धनञ्जयाभिधयक्षराजकृतसामीप्यमनोहरो देवदानवाश्चर्यकरश्रेष्ठमहोत्सवो यक्षेशविहिताभिः सुकृतसागराभिः प्रभावनाभिर्वैधर्मिकैरपि स्तुत्यं जिनशासनं जनयन् सिद्धिलोभनरूपवान् विक्रमो राजा नगराद्गुरुमगच्छत्, तथा संसारमस्तकशूलं ज्ञानवृक्षस्य मूलं व्रतं स्वीचकार । अथ गजेन्द्रौ चन्द्रसेने प्रणम्य पुरगामिनि वसुधापतिमहामुनिर्गुरुभिः साकं क्षितिं विजहार । श्रद्धानिर्मलतपःकारी निर्मलसिद्धान्ताध्ययनक्रमः स ज्ञानी विक्रमराजर्षिः पृथिवीं बोधयित्वा परमपदं (मोक्षं)लेभे । इत्येवं तत्त्वज्ञानपूर्वकं विक्रमराजर्षिवत् सम्यक्त्वं सेवनीयं येन जनः शीघ्रं लोकद्वयभयमुक्तो भवति ।

## ॥ इति सम्यक्त्वोपरि विक्रमराजकथा ॥

पापान्धकारविनाशकस्य सूर्यस्येव तस्य सम्यक्त्वस्य राशिवदाभोगवृद्ध्यर्थं द्वादश श्रावकव्रतानि सन्ति । तेषु द्वादशव्रतेषु प्रथमं दोषरहितत्रसजीवहिंसाशरीरार्त्तिपालनलक्षणमहिंसाभिधं श्रावकाणामणुव्रतमस्ति । पुण्यकमलमरालाऽतिविशदाऽहिंसेयमेव संसारमोक्षनीरक्षीरविवेकाय विद्वद्भिः सेव्यते । पृथिवीस्वर्गभोगसौख्यलक्ष्मीसोपानराजिशोभिनी मोक्षैकगमावधिरहिंसा नाम निःश्रेणिरस्ति । अहो ! हिंसा शाश्वतं दुःखमहिंसा च परमं सुखं सूर-चन्द्रयोरिव प्राणिनो ददाति, तद्यथा—

अस्ति रूपेण समृद्ध्या पुण्यसमूहेन च वासवनगरात् प्राप्तजयं "जयपुरं" नाम नगरम् । तत्र नगरे लक्ष्मीनां भाजनं "शत्रु-

तत्समय एव वलमान स राजा विक्रमस्तद्गृहमतिविलापसमूहगर्भमपश्यत्। तत आश्चर्यव्याकुलेन भूपेनैकः समीपस्थो मनुष्यस्तत्कारणं पृष्टः, स च ज्ञात्वा राजानं विज्ञापयामास। हे प्रभो! गते दिवस एतद्गृहपतेरनपत्यस्य महाधनिकस्यान्धस्य नयनप्रादुर्भाव इव तनयोऽभूत्। साम्प्रतमेवाश्वश्रेणिविलासगमनोत्सवे देवेनेह तत्कारणसमुत्पन्नो महोत्सवो विलोकितः। साम्प्रतमेव च पुनर्दैवयोगतः स बालको मृतस्तद्वियोगपीडामार्गेण तस्य पिताऽपि तमन्वगच्छत् (अर्थात् सः पिताऽपि मृतः)। तनयजननोत्सवागतः सकलोऽयं कुटुम्बलोकः प्रत्युत द्विगुणे दुःखे पतितो रारटीति। अथ संसारनाटककौटिल्यात् संजातरोमाञ्चशरीरोऽव्याकुलचपलमानसः पृथिवीपतिरचिन्तयत्। संसारस्य विचित्रता विदुषामप्यपरिच्छेद्या। अयं लोक उच्चैरन्यद्विचारयति भवति चान्यदेव। ग्रीष्मतापव्याकुलो मनुष्यो हि सुखाय वृक्षस्य च्छायामागच्छति, हा! परन्तु तत्कोटरस्थितेन महासर्पेण दश्यते। अहो! मनुष्यः शत्रोर्विनाशकारणमायुधं वहति, परन्तु कदाचिदेष दैवात् तेनैव शत्रुणा तेनैव शस्त्रेण च हन्यते। कश्चन नरो मनोरथसदृश फलं यत् प्राप्नोति तन्नूनं महाविपत्तिसमूहक्षेपविश्वासकं भवति। 'केवलदुःखैकमात्रप्रदे मयि विरक्तो लोको मुक्त्यर्थं मा धावतु!' इति संसारः सुखलवानपि ददाति। मनुष्यस्य या संसारसुखप्राप्तिः सा मत्स्यस्य गलिकायन्त्रनियुक्तकवलसदृशी दुरन्तैवास्ति। कुलिशलेपेनेव संसारभावेषु यन्नियन्त्रितमस्ति तदिदं मानसं जनश्चञ्चलं कथं नु वदति?। ये तीर्थङ्करा लोकाकाशमलोकाकाशे क्षेप्तुं समर्थास्तदाश्रयबलात् स्वीयं मनः संसारभावतः कृषामि। इति संचिन्तयन् मेदिनीजानिर्विक्रमः शीघ्रं स्वगृहं जगाम। तथा स्वतनयं चन्द्रसेनं राज्ये संस्थाप्य व्रतोत्कण्ठितः स्थितः। ज्ञानेन विदितविक्रममहीशहृदयः निसर्गदयासागरः केवलज्ञानी सद्गुरुस्तस्मिन् समये तन्नगर(मुद्यान)मागच्छत्। ततस्तत्समाचारकथयितारमुद्यानरक्षकं दानैरानन्द्य हर्षोल्लसितो विक्रममहीश उत्कण्ठित उद्यान-

निरुपमकलगुणस्य तव धैर्यरससागरनूतनकमलिनी दृष्टिरसौ पराक्रमं सूचयति। तद् हे वीरसमूहशिरोमणे! रोपितं स्खलच्छत्रुशल्यं हृदयादुदयादपि तरितमाकर्ष। अन्यायमदिराकलशो भयङ्करविनाशो मम न्यायतरुगजः कुम्भनामा नरश्चरटीभूय ('धाडपाडु' इति भाषायाम्) वल्गति। एष दुष्टः कुम्भः स्त्रीस्तथा गाश्च हरति मुनीनपि हन्ति सेनारुद्धो यमस्यापि दुर्गमं दुर्गमश्चति। तन्ममानन्दाय महादुर्गविनाशको मनोज्ञपराक्रमस्त्वं तद्दुर्गं गुप्तं प्रविश्य सुप्तं तं विदारय!। इति राजनि वदति चन्द्रकुमारः प्रारब्धतीर्थकृद्धर्ममहावारिधिजागरममृतमयीं गिरमब्रवीत्। हे स्वामिन्! असमरेषु प्राणिनो हन्तुं मम प्रत्याख्यानं, समरेष्वपि भयभीतान्नुन्माहगृहीतांश्छस्त्ररहितान् हन्तुं प्रत्याख्यानमस्ति। इत्यस्य चन्द्रस्य विक्रममयं धर्ममयं च निश्चयं विज्ञाय स धरित्रीवल्लभः स्वहृदयमानन्दाभिमानयोः स्थानमकरोत्। क्रमशः प्रसन्नो मेदिनीनेता तं शरीररक्षकाणां स्वामिनं सचिवानामग्रेसरं सर्वेश्वरं च चकार। अथ कदा पापव्यापारनिपुणः स्वन्त्रासदशसेनासमूहः स उद्धतः कुम्भचरटो देशं प्राविशत्। प्रबलवीरसमूहश्चन्द्रस्तद्वधायाधावत्, तथाऽन्यत्सर्वगैः सैन्यैश्च दुर्गमार्गान् रुरोध। सावधानभयङ्करचन्द्रकुमारसेनाभयात् पलायमानं तं कुम्भचरटं पुरोदुर्गगानन्दवीरसमूहो रुरोध। पुरतः, पार्श्वतः, पश्चान्मिलद्भिः सैन्यैः कुम्भचरटः सकलदिग्धावद्दवानले धावद्वनगज इव व्याकुलो बभूव। झञ्झावातेषु वायस इव तासु पृतनासु स कुम्भचरटः कथञ्चिज्जीवनोपायलेशमप्यलभमानो मयि पराक्राग्निकणोऽपि नास्तीति ज्ञापयन्निव सनिःश्वासं वदननिहिततृणश्चन्द्रकुमारस्य पुरतोऽलुठत्। तत्प्रीतमानसो विस्तीर्णानुकम्प उत्कीर्तिरयं चन्द्रकुमारो हर्षितपुलकशर्णं कुम्भमुत्थाप्यालिलिङ्ग। तद्दिनादारभ्य भृशमानन्दितो राजा जाज्वल्यमानसूर्यतेजसं चन्द्रकुमारं तनयादपि तथात्मनोऽपि चाधिकममन्यत।

ऽथा"भिधो राजा बभूव, यस्य कीर्त्तिक्षीरसागरः शत्रुदुष्कीर्त्तिशैलाच्छुशुभे। भुवनमिदं व्यक्तानन्दं विधातुं सूर्यचन्द्राविव सज्जनानां मान्यौ सूर-चन्द्रनामानौ तस्य तनयावभूताम्। ज्येष्ठे तनये श्रेष्ठगुणश्रमेण प्रेमविलासं धारयन् महीपतिस्तस्मै पुत्राय सूराय युवराजपदं दत्तवान्। चन्द्रस्य तु धराजानिना जीविकाऽपि न रचिता। ततो निजावासशयनः स चन्द्रो रात्रौ विचारयामास-महीपेन स्वयमद्य हर्षेण सूरो युवराजः कृतः, अहं जीविकया पदातिरपि न कृतः, अहो! जनकस्य कियान् मोहः?। तन्महीशेन तिरस्कृतस्य ममात्र स्थातुं न युज्यते, यूथपतिना तिरस्कृतो गजयुवा किं यूथे तिष्ठेत्?। एवं विचार्य निबिडानादरश्चन्द्रकुमारः स्नेहरहितो रात्रावलक्षितो निजगृहात् सावधानः प्रतस्थे। मानसावेशहृतकष्टो निजदेशत्यागरागवान् कुमारश्चन्द्रः सुकुमारोऽपि दूरं देशान्तरं प्रविवेश। अत्र रत्नपत्तननामकमद्भुतं नगरमस्ति, तदारामाभ्यर्णे वृक्षस्य तले परिश्रान्तश्चन्द्रकुमारस्तस्थौ। ततः कर्णसुखदं ध्वनिमाकर्ण्य तदनुसारत उद्यानं प्रविशँश्चन्द्रकुमारः सुदर्शनं मुनिमपश्यत्। सभामध्यक्षितौ निषण्णं तत्त्वार्थोपदेष्टारं यतिं प्रणम्य तदाननाद् भावपवित्रः स चन्द्रकुमार इति धर्ममश्रौषीत्। पवित्रशरीरैर्गृहमेधिभिस्तावदपराधिनोऽपि त्रसा जीवा न हन्तव्याः, ते निरपराधाः पुनः किम्?। स्वश्रवणभागानन्दकरीमित्यादिदेशनां श्रुत्वा स चन्द्रकुमारो जीवदयां स्वीकृत्येति निजवाण्या स्वीचकार। मयोच्चैरपराधिनोऽपि स्वामिन आग्रहेऽपि हन्त! शौर्यवृत्तितोऽन्यतो जीवा न हन्तव्याः। इति गृहीतनिश्चयो महापराक्रमवांश्चन्द्रकुमारो गुरून् प्रणम्य तत्रैव नगरे जयसेनाभिधानं वसुधापतिमसेवत। पवित्रतासत्योचितताचातुर्यदाक्षिण्यप्रमुखैरद्भुतैः स्वीयैः सेवागुणैरेव स चन्द्रो राज्ञः प्रियो बभूव। अथैकदा प्रेममयहास्यस्नपिताधरो भूभर्त्ता निर्मलविवेकममुं चन्द्रमेकान्ते निवेश्य व्याजहार। वासवसंग्रामेऽपि मम ये क्षीरोपमयशसो धैर्यवन्तो वीराः सन्ति तानपि तव दृष्टिस्तृणानीव पश्यति। कार्यज-

शबरो जघान। अथैकस्मिन् गजयूथे करिशावकौ बभूवतुः, युद्ध्यमानौ च यूथपरिभ्रष्टौ तौ लुब्धकव्रजो जग्राह। परम्परया तौ चन्द्रमहीपतिगृहमाजग्मतुः, वारंवारं चद्रुमसमरवाघोरगैर्बलान्यपिध्येताम्। अथ कदाचित् तत्र केवलज्ञानप्रकाशतेजस्वी जैनशासनसूर्यः सुदर्शनो नाम मुनिराजः समागतः। तत्समये पृथिवीपरिवृढो भक्तिगम्भीरा मनोवृत्तीर्वहन्, पुरवासिभिः साकं मुनिराजं प्रणामेच्छुः कान्तारं जगाम। अथ तत्त्वार्थवेत्तारं यतिराजं प्रणम्य धरित्रीनायको धर्मदेशनामृतसमूहं पातुमुपाविशत्। अथ धर्मदेशनान्ते राजा पप्रच्छ, तदा स केवलीभगवांस्तयोर्गजयोरतिभयङ्करं वैरकारणं ज्ञापयामास। तद्वृत्तान्तगृहीतवैराग्यः स चन्द्रराजा वेगतः संसारोद्वेगेन स्वतनयं भूपं विधाय संन्यस्तवान्। स राजर्षिस्तपःसूर्यभासा शुशुभे, तत उद्दामानन्दपीयूषवापीं देवपुरीं जगाम। विशेषतर्वर्धमानवैरतरङ्गोद्धतौ तौ वारणौ तु दुःखरसास्वादभाजनं प्रथमं नरकं जग्मतुः। ततस्तस्मान्निर्गतौ तौ प्राप्तपापयोनिजननावनन्तभवमनन्तमात्मानौ परितः संचरतः। चन्द्रराजर्षिजीवस्तु प्रशंसनीयं नाकसुखं चिरं भुक्त्वा निर्मलमनुष्यजन्म प्राप्य मोक्षलक्ष्म्या नायको बभूव। मोक्षलब्धिकारणममुं निदर्शनं निशम्य स्वस्य कल्याणमिच्छद्भिः प्राणिभिरहिंसाव्रतसेवकैर्भवितव्यम्।

## इति प्राणातिपातविचारे सूरचन्द्रयोः कथा ॥

नीरद इव जीवदयालतानवपल्लवकरणदक्षो मृषावादत्यागस्तु नूनं सज्जनानां संसारदवानलविनाशायास्ति। यत्क्वाप्यसत्यं न वक्तव्यं तद् द्वितीयमणुव्रतं ज्ञातव्यम्, तत्र पृथिवीकन्यागोधनन्यासासत्यसाक्ष्ये विशेषतोऽसत्यं न वक्तव्यम्। यत्प्राणिनामहितं स्यात् तत् सत्यमप्यहो! न वक्तव्यम्। अत्र पृच्छको विद्वद्भिः वचनप्रपञ्चेन बोधनीयः। धर्महितकरं निश्चित्यानृतमपि वचनं वक्तव्यं, यतः पुण्यसमूहलक्ष्म्या सत्यमपि तत्सादृश्यं न प्राप्नोति। ईदृक्सत्यवचनानां वक्ता राजपुरीनामनगरीनायको हंसो

अथ दुष्टहृदयश्चन्द्राग्रजः स सूरो यौवराज्यलक्ष्म्याप्यतृप्तो राज्याय जनकवधे बुद्धिं दधार। तीक्ष्णायुधसमूहो दूरं वञ्चितयामिकः स सूरो यमादिष्टः सर्प इव मध्यरात्रे उन्मार्गे राजसदनं प्रविष्टः। ततः पराङ्मुखं सुप्तं राजानं स सूरस्तीक्ष्णायुधेन जघान, महांल्लोभः पापानां मूलं वर्त्तते। तदुक्तम्—

"लोभात् क्रोधः प्रभवति लोभात् कामः प्रजायते। लोभान्मोहश्च नाशश्च लोभः पापस्य कारणम्" ॥१॥

ततस्त्रसन्नसौ सूरः संमुखसुप्तया देव्या विलोकित 'एष घाती गच्छति", 'एष घाती गच्छति' इति शब्दः पूत्कृतः। ततो द्वारपालेषु धावत्सु धरापतिरिदमूचिवान् कोऽयं घातकः? इति विदितव्यः, एष मा वध्यताम्। अथ तं स्वपुत्रं सूरं घातकं विदित्वा मेदिनीनाथो यूथाद् विनष्टमुष्ट्रमिव तं देशान्निरासयत्। अथ स भूभर्त्ता दासेरकमेलकैर्वेगवद्घोटकारुढैः प्रधानपुरुषैः स्वपुत्रं चन्द्रकुमारमाकारयामास। ततो जयसेननरेन्द्रमापृच्छ्य समागतश्चन्द्रकुमारस्तथास्थितं जनकं दृष्ट्वा हर्षदुःखयोर्भाजनमभूत्। ततस्तं पुत्रं चन्द्रकुमारं राज्ये संस्थाप्य सूरकुमारे समत्सरो राजा तत्प्रहारार्त्तिना मृत्वा क्वापि पर्वते व्याघ्रो बभूव। कलङ्कमलिनः स सूरोऽपि कुकर्मभिर्जीवन् देशान्तराणि भ्राम्यंस्तद्व्याघ्रभयङ्करं विपिनं जगाम। पापनष्टपराक्रमोऽयं पलायमानः प्राग्रिपुत्वद्वेषादमुना क्रोधिना व्याघ्रेण तत्र व्यापादितः। स सूरजीवस्तत्रैव कान्तारे वनेचरत्वं गतः, पापर्द्धिवर्धितारम्भः स तेनैव व्याघ्रेण व्यापादितः। क्रोधावेशान्धैस्तस्य परिवारैः स व्याघ्रोऽपि हतः। एवं तावुभौ तत्रैव पर्वतविपिने वराहावभूताम्। तत्र त्रिवत्सरौ प्रकटद्वेषौ मिथः समरव्यसनासक्तौ तौ वराहौ लुब्धकसमूहो जघान। ततः क्वापि कान्तारान्तरे हरिणावुभावभवतां तथैव च प्रथितमत्सरसंग्रामौ

इति कथयित्वा कम्पितक्ष्मापादिसेनासमूहो वसुधानेता मार्गे तुरगवाहनं वाहयामास । अथ स्वामिभक्तिवियोगिना निजनिजपरिजनदर्शनखेदभाजा परिवारलोकेन भूपोऽत्याजि । यथा यथा स राजा तैरत्याजि तथा तथा स हर्षं लेभे यात्रापुण्यस्य भागिनोऽमी क्रमशस्मुदन्नीति मेने । अथैकेन छत्रधरेण सहितो लोकैस्त्यक्त एकाकी स राजा वर्त्मभ्रष्टः कामप्यरण्यानीं प्राप्तवान् । मनोहरतरवरेण्यघोटकसुन्दरालंकारदर्शनादतिलोभेन सानन्दाः पुलिन्दा मां मा पीडयत्विति विचिन्त्य छत्रभृत उत्तरीयं परिधाय यात्रिकवुद्धिः स राजा ककुभो दृष्ट्वा तीर्थदिग्वदनः प्रतस्थे । अथ समुत्पन्नवायुवरत्वर एको व्याकुलो हरिणः समागत्य तस्य पश्यतो लतागमूढनिकुञ्जं प्रविवेश । तमनु कश्चिच्छवरश्चापं स्फारयन्नागतो नयनवर्त्मातीतहरिणस्तं भूभुजमवोचत् । हे स्वामिन् ! अत्र दलविस्तृतिच्छन्ने विपिने पदं न पश्यामि, मम भक्ष्यं स सारङ्गः क्व गतः ? मम दयया कथय ! । सत्ये कथिते सारङ्गवधोऽन्यथा कथितेऽसत्यवचनं तदयं लुब्धको धिया विप्रतारणीय इति विचार्य राजा जगाद-भोः ! मम वृत्तान्तं पृच्छसि ? वर्त्मभ्रष्ट इवापतमहम् । लुब्धक उवाच-अहो ! मूर्ख ! कथय ! त्रस्तः सारङ्गः क्व गतः ? । राजोवाच-हे महाभाग ! मम नाम हंस इति । व्याध उवाच-मम हरिणस्य वर्त्म कथय ! । मेदिनीजानिरवदत्-मित्र ! मम स्थानं राजपुरी । मृगयुः क्रोधेन प्राह-रे ! अन्यत्पृच्छयसेऽन्यच्च वदसि ! । स नृप उवाच-हे मित्र ! अहं क्षत्रियवंशोऽस्मि । मृगयुरत्युच्चैर्व्याजहार-भोः ! किं महाबधिरस्त्वमसि ? । राजोवाच-यन्मम वर्त्म वदसि तन्नगरं गच्छामि । व्याध उवाच-यस्तव बाधिर्यरोगः स चिरमस्तु । इति कथयित्वा मृगयुरयं मृगनिराशो यथागतं जगाम तथा पुण्यसमूहाक्रान्तो मेदिनीधवः पुनः शनैर्जगाम । अथ स बुद्धिमान् राजा पुर एकं मुनिं समागच्छन्तं विलोक्य प्रणम्य वर्त्म न त्यक्त्वा पूर्ववत् प्रतस्थे । ततोऽग्रे यमराजस्य दृष्टिपाताविव क्रोधरक्तौ भयङ्करभृकुटी व्याधावुभावागत्य राजानमवो-

नाम राजा यथा वैभवं बिभराम्बभूव तथा भवद्भिराकर्ण्यताम् ! ।

अथ निरन्तरधर्मकारकः सत्यवचनवक्ता स राजा मासगम्ये विपिनसमूहमनोहरे रत्नशृङ्गनामके पर्वते पूर्वजैः स्थापिते जिनमन्दिरे चैत्रीयात्रामहे स्वल्पपरिच्छदः श्रीऋषभं जिनेश्वरं वन्दितुं प्रतस्थे। अर्धमार्गे गच्छन्तं तं हंसनृपमतित्वरासमागतो व्याकुलः कश्चिदुपागतो दूतो न्यवेदयत्–हे राजन् ! त्वयि यात्रार्थं निर्गच्छति दशमे दिवसे सीमानिवासी रिपुरर्जुनभूभर्त्ता तव नगरीमापपात। त्रस्यतो निरस्य विहितशस्त्रान् सकलान्निहत्य सोऽर्जुनराजा सभाण्डागारगजतुरगं राजगृहं जग्राह। भयव्याकुलं समस्तं नगरमभयदानत आनन्द्य सिंहासनं निषण्णः स निजादेशमदापयत्। अतोऽन्यगृहनिलीनेन श्रीसुमन्त्रनाम्ना सचिवेनाहं त्वयि नियुक्तो यदत्रोचितं तत् क्रियतामिति। अथ भ्रुकुटिक्षेपान्निकटस्था वीरास्तं राजानमवोचन्–हे धनुर्धर ! वलामहे तवाग्रे कः शत्रुः स्फुरेत् ?। तत्समयेऽपि निश्चलं हृदयं दशनकान्तिकुसुमैः पूजयन् महीधवोऽनुत्पन्नवदनमालिन्यस्तानब्रवीत्। सम्पत्तयो विपत्तयोऽपि पूर्वकर्माधीनाः सन्ति, परन्तु मूर्खास्तत्सम्पत्तिषु हर्षं विषादं वा कुर्वन्ति। विदुषां तूभयत्र साम्यं तदुक्तम्–"सम्पत्तौ च विपत्तौ च महतामेकरूपता।" साम्प्रतं भाग्यप्राप्यं जिनयात्रामहोद्यमं परित्यज्य भाग्यलभ्याय राज्याय धावनं नोचितम्। तद् हे निर्मलनयनाः ! एनां यात्रां पूर्णामकृत्वा नानुगमिष्यामि। यतो विघ्नैः प्रारब्धोत्तमकार्यत्यागो नीचजनकार्यम्। उक्तं च नीतिविदा–

"प्रारभ्यते न खलु विघ्नभयेन नीचैः प्रारभ्य विघ्नविरता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारब्धमुत्तमगुणा न परित्यजन्ति" ॥१॥

सत्यवचनं तान् वदामि तदा तद्वधपातकं मां सकलशरीरं ममालिङ्गति। यदि च ताञ्छीघ्रं न दिशामि तदेते राजपुरुषैरनिहतास्ते तस्करा मम सङ्घविनाशपापदायिनो भवन्ति। तदत्र किं करोमीति विचारात् समुत्पन्नमतिः सुबुद्धिः स राजा तान् भटानब्रवीत्–मयात्र ते चौरा दृशा न विलोकिताः। तच्चौरदर्शनाय युष्माकमिह विलम्बितुं नोचितं, यत्र सङ्घो वर्त्तते तत्रोत्साहं रक्षितुं त्वरितं गम्यताम्!। ते मलिम्लुचा अपि तत्र यास्यन्ति तद्यदि यूयं प्रथमं गच्छथ ततो भवतामद्भुतौ यशो धर्मश्च प्राप्तौ स्तः। इति वचनेन गृहीताश्चर्यास्ते भटाः सङ्घाभिमुखं जग्मुर्मलिम्लुचास्तु गुल्मान्निर्गत्य तं राजानं प्रणम्य बभाषिरे। हे वीर! अत्र गुल्मे सन्तः कथयन्तश्च वयं त्वया विदिता एव, परन्तु राजभटेभ्यो न कथिताः, अतस्त्वं जीवनदाताऽस्माकं पिताऽसि। धर्मक्षीरसागरचन्द्रिकां पापान्धकारसूर्यकान्ति तव बुद्धिं स्तुमो यया बुद्ध्या वयं सङ्घश्च पालिताः। इति वदित्वा वलित्वा ते ययुः। प्रातःकाले सोऽपि राजाऽग्रे चचाल। अथ कैश्चिदश्ववारैरन्वागत्याभाष्यत। दण्डितासमनायकाद्भीतो राजपुरीवासवो हंस इह क्वापि विलोकितः? तं हत्वा द्रुपसागरं तरामः। निजजीविताय पापमसत्यं को भाषते? इति विचिन्त्याथाहं स हंस इति कथयित्वा गृहीतायुधोऽसावग्रे तस्थौ। तथा धर्मे मतिं धारयन् भूपः पञ्चपरमेष्ठिनमस्कारान् सस्मार, अत्रान्तरे गगने दुन्दुभिर्दध्वान, कुसुमवृष्टिश्च पपात। हे सत्यवादिन्! जय! जय! इति हर्षवचनं कथयन् सम्यग्दृष्टिस्तद्वननायको यक्षस्तस्याग्रे बभूव। तव सत्यवचसा प्रसन्नस्त्रासिततावकशत्रुसमूहस्त्यक्षनामैतद्विपिननाथो यक्षोऽहं त्वामिदं कथयामि। तवाभिलषिते यत्र तीर्थे यात्रास्ति तदद्य दिनं तज्जिनमभिवन्दितुं गन्तासो मम विमानं सुशोभय!। इत्यस्य वचनेनायं हर्षेण तद्विमानमारुरोह, तत्कालं च निजं दिव्याभूषणभूषितमपश्यत्। दिव्यगायनसमूहेन गीयमानकीर्त्तिगुणो यक्षार्धासननिषण्णः स हंसो जैनतीर्थं जगाम। अत्रासौ राजा कल्पवृक्षप्रसूनैर्दिव्यसुगन्धिद्रव्य-

चताम् । चिराच्छूरनामा पल्लीनायकोऽद्य तास्कर्याय निर्गतो दूरादस्मिन् कान्तारे पाषण्डिनं मुण्डं ददर्श । तमशकुनं मन्यमानः स तद्वधायोद्यतशस्त्रावावां सेवकौ शीघ्रं प्रैषीत्, कथ्यतां स क्वापि त्वया विलोकितः ? । राजा विचारयामास, मयि छद्मवचने वा मौनभाजि वा सरलेन मार्गेण गच्छन्ताविमौ यतेर्यमौ । इदानीमसत्यं वचनमपि सत्यादप्यधिकपुण्यकारीति शब्दव्याजादयमसत्यं सत्यमवोचत्–दुःखमार्गजुषामशकुनाय स वामेन पथा गच्छति, मुनिस्तथा विचित्रगमनो यथा युवाभ्यां नासाद्यः । असद्गुरूपदेशेनासंयमस्य मार्ग इव तौ व्याधौ तद्वचनेन व्यर्थं तत्र वर्त्मनि पर्यधावताम् । तादृशवचनपीयूषासेकैधमानपुण्यवृक्षः कीर्त्तिकुसुमैः सुगन्धि स हंसराजा तथैव मार्गे चचाल । कुसुमपातसुगन्धीभूतपृथिवीतलमण्डलं सारं तरुं रात्रिप्रारम्भकाले शयनाय सिषेवे । 'तृतीये दिवसे धनसागरे तस्मिन् सङ्घे पतिष्यामः, दारिद्र्यभारमुन्मोच्य धनतरङ्गेषु तरिष्यामः, हन्त ! भूयः पूर्वपात एव केचिज्जना हन्तव्याः, यथा मयाधीनः स्वल्पपरिवारो रक्षकस्त्रसती'ति समीपे लताकुञ्जे बहूनां बलवतां वचनं श्रवणचरीकृत्याकर्ण्य स राजा हंसो विचारयामास । दुर्जने दुर्गुणा इव केचित् तस्कराः श्रेष्ठसङ्घविनाशाय यथेच्छमिह विश्रामार्थमायाताः । क्वचिद् दूरादेभिस्तस्करैर्ध्रुवं धर्मरुचिः सङ्घो लुंट्य एकाकिना मया केनोपायेन गोपायितुं शक्यः ? । इति विचारयन्नसौ हंसनृपो निद्रया रहितस्तत्समये दीपप्रकाशितककुभ उदायुधान् कानपि भटानद्राक्षीत् । असौ कोऽपि तस्करपुरुष इति कोपेन तैः स उत्थाप्याकारदर्शनादयं कोऽपि महात्मेति विचार्य कथितः । केचित् तस्कराः क्वचित् त्वया वीक्षिताः ? कथयन्तश्च वाऽऽकर्णिताः ? यतः सङ्घविनाशेच्छव इह मार्गे हेरिकेण कथिताः । इतः स्थानाद्दशभिर्योजनैः श्रीपुरं नाम नगरमस्ति, तस्य गाधिनामा जैनो भूपस्तांस्तस्करान् हन्तुमस्मान् प्रैषीत् । तद्यदि वेत्सि तदा शीघ्रं कथय ! येन तांस्तस्करान्निहत्य कीर्त्तिं सङ्घपालनया च पुण्यानि प्राप्स्यामः । अथ हंसराजर्षिर्विचारयामास–यदि चेत्

पद्महृदनामकं
सीमरूपयाऽगण्यपुण्यसंलभ्यमकलङ्कारमनोज्ञया जिनेश्वरं पूजयन्त्या लक्ष्मीदेव्या मनोहरं नृत्यन्मरालविशदतरङ्गं पद्महृदनामकं सरः सा स्वप्ने रात्र्यन्ते ददर्श। स्वप्नं दृष्ट्वाऽऽनन्देन यान् रोमाञ्चाङ्कुरान् दधार तैरेव स्वीकृतशरीरा प्रबुद्धा सा धन्या स्वामिनं प्रति व्याजहार। सोऽप्युवाच—हे प्रिये! तव कल्याणकारी लक्ष्मीवान् महागुणवान्निर्मलाशयो जिनेश्वरभक्तस्तनयो भविष्यति। अथ प्रसन्ना धन्यंमन्या तीर्थङ्करध्यानहृदयासौ धन्या निद्रां परित्यज्य तं रात्रिशेषं निनाय। तस्मिन् दिवसे लाभान्तरायिकं कर्म दूरीकृत्य स वणिग् निक्रयतो द्विगुणं लाभमाप। इति व्यापारकेल्येधमानधनः स सुधर्मो वणिक् क्रमशः सुखलेशानामाधातिथित्वं जगाम (अर्थात् किञ्चित् किञ्चित् सुखं प्राप)। अथ धन्यायाः शरीरशोभयैव शारदनीरदरेखाया मध्यगतः सूर्य इव शुभो गर्भो ववृधे। सीमन्तोन्नयने धनचिन्तापीडितः स सुधर्म एकदा विलक्षश्वरणाङ्गुष्ठेन गृहमध्ये महीं लिलेख। ततस्तदुल्लेखनखातायामुर्व्यां स वणिक् चञ्चत्काञ्चनमणिमाणिक्यमण्डलैः पूर्णं बिलमेकमद्राक्षीत्। आश्चर्यहर्षसन्दर्भी सुधर्मो वणिक् ततः पुरन्दरभवनवन्मणिसुवर्णमयं गृहं रचयामास। ततस्तस्य वणिजो गृहे रूपनृत्येऽप्सरःसदृशः किङ्करत्वे विनयावनतो दासीनां समूह एकत्रीबभूव। तोयेषु कृष्यमाणस्त्रियाः सीमन्तोन्नयमहामहे तस्मिन् सुधर्मे दानं ददति दातव्यरत्नमनोहरतावीक्षणाद्दातारोऽपि याचकतां ययुः। तोयेषु कृष्यमाणेष्वपि कूपमिव सुवर्णरत्नसमूहेषु कृष्यमाणेष्वपि वणिक् तद् बिलं पूर्णमेव ददर्श। तत्समृद्धिप्रसन्ना वाञ्छासमकालप्राप्तदोहदा सा धन्या सन्मुहूर्ते सुखेनाद्भुतं नन्दनमजीजनत्। स वणिङ् नन्दनजननमहे वितरणाधिक्येन गीतप्रमुखमनोहरत्वेन च देवानामप्याश्चर्यमकार्षीत्। शोभाभिस्तं पुत्रं लक्ष्मीसमूहमिव वीक्ष्य जनको महतोत्सवेन तस्य "लक्ष्मीपुञ्ज" इति नाम चकार। अचिन्त्योपचितैः समयसमययोग्यैर्भावैरनुत्पन्नचिन्तादुःखोऽयं बालको यथेच्छं मदन इव ववृधे। क्लेशलवमप्यस्पृशन्नसौ लक्ष्मीपुञ्जः कदापि

रसैर्दिव्यनाटकैश्च जिनेश्वरयात्रां समाप्तामकरोत्। ततो निजालये गतः स राजा हंसो यक्षबद्धं रिपुं विमुच्य भूपविष्टरगतो नगरीमानन्दयामास। पृथिवीतलालभ्यैर्भोगैरयं प्रत्यहं प्रसन्नो विधेयोऽस्मिंश्च सुकृतशालिनि भूपेऽन्तरायसमूहः पालनीय इति प्रेमनिपुणो गुह्यकश्चतुरो देवसेवकान् कथयित्वा श्रीहंसं नृपमापृच्छ्य कान्तिदीप्तदिग् जगाम। अहो! सत्यवचनप्रभावः! यदिहापि स हंसधराधव आनन्दं लेभे, परलोके च नाकसम्पत्तिमाप। तदसत्यवादगरलविकारक्लेशदूरीकरणामृतरसे सत्यवादे भो भव्याः! भवन्तोऽनुरक्ता भवन्तु!

## ॥ इति मृषावादविचारे हंसनृपकथा ॥

हे संसारमार्गस्य पथिकाः! पुनरसत्यवादतरुच्छायावदस्तेयं व्रतं क्लेशनाशाय यूयं सेवध्वम्!। आहितं स्थापितं नष्टं विस्मृतं पतितं स्थितमस्वकीयं द्रव्यं न स्वीकुर्यादित्यचौर्यं नाम तृतीयमणुव्रतं ज्ञेयम्। अचौर्यव्रतक्षीरसागरमध्यस्थानकारिणां सज्जनानां संसारदावानलशिखासमूहस्तापकारणाय न भवेत्। अदत्तादानविरमणाख्याणुव्रतनिश्चयाचलः सकलः प्राणी लक्ष्मीपुञ्ज इव सकलमचिन्तितं लभते। तथाहि—

अस्ति सफलप्रारम्भधार्मिकधर्मतरङ्गविशदं शोभातिरस्कृतान्यनगरं श्रीहस्तिपुरं नाम नगरम्। तस्मिन्नगर उदारदारिद्र्यमुद्रासकलपौरमुख्यः सद्धर्मरसैकभाजनं सुधर्मनामा वणिक् प्रतिवसति स। कैश्चिद्वराटकैः किंचिद्वस्तु क्रीत्वा विक्रीय च प्रत्यहं स कांश्चिद्वराटकांल्लाभे समुपार्जयन् समयं निनाय। धर्माचरणवती कार्यसमूहे निजस्वामिहृदयानुसारिणी तस्य धन्यानाम्नी प्रियतमा बभूव। विचित्राभिर्विभूतिभिर्दले दले स्फुरन्तीभिर्मनोहरशरीराभिः कृतैर्गीतनृत्यतूर्यैः प्रसन्नया रत्नकमलगर्भवर्त्तिन्या नयनभाग्य-

निन्यथेश गुणधरस्तुरगमरायणचारेण प्रतस्थे। तृष्णाव्याकुल एकस्मिन् वृक्षे जलपूर्णां दृतिं दृष्ट्वा कस्येयं दृतिः ? इति वारंवारमु-
च्चस्मान–'औषधं निलोकितुं दूरे गतस्य प्रभोर्वैद्यस्येयं दृतिः, अहं नैव वदिष्यामि तद्विशदं नीरं पिब ! ।' वृक्षशाखाग्रपञ्जरस्थकीरमु-
स्यादिति श्रुत्वा कराभ्यां श्रवणौ प्रच्छाद्यासौ कीरमवोचत्। तृष्णा मम प्राणान् गृह्णातु, पुनस्तेनादत्तं जलं न पिबामि, अदत्तादानं
महापापं कथ्यते। सपञ्जरं कीररूपं संहृत्य शाखाग्रादुत्तीर्य कोऽपि पुरश्चरः पुरुषः स्थित्वा सानन्दमुवाच–वैताढ्यपर्वते विपुलाना-
रम्यां नगर्यां सूर्याभिधो विद्याधरोऽहमस्मि, तत्र नगरे पितरं विशदनामानं यतिं वन्दितुं विपिने गतोऽभूवम्। संख्यातीतधन-
स्यापि मम परद्रव्ये हृते सुखं भवति, अतो मामुद्दिश्यायं मुनिरस्तेयव्रतवर्णनामादिदेश। त्वया तु तदग्रेऽदत्तादानविरतिश्चक्रे, तदा
महासाश्रयोऽहं चिरं विचारितवानस्मि। एते सार्थवाहा लक्ष्मीलेशयाचका दूरं देशं गच्छन्ति तन्निभालितमन्यद्रव्यममी सुखेन किं
नव हरन्ति ?। तन्नूनमस्य सार्थपस्य परीक्षां करिष्य इत्यदृश्येन मयाऽद्य तु प्रस्तावः प्रापि। हे मनुष्यरत्न ! अहं रत्नस्रजं निधिं च
तवादर्शयं परन्तु त्वं च महतामपि वस्तूनां लोभेन न जितः। ततस्तुरगं मृतं विधाय चरणगमनेन तृषातुरस्य तव मया शुकप्रेरणया
सलिलं शीतलं जलमदर्शि। प्राणरक्षणरूपे श्रेष्ठे महति कार्ये त्वमल्पस्यापि वस्तुनो लोभेन न तिरस्कृतः। इति तं कथयित्वाऽयं सूर्यः
मीयान् विद्याधरानाकारयामास, तत्र तेऽदृश्या आसन् , ते तत्र व्यक्ता बभूवुः। ततः स सूर्य एभिर्विद्याधरैर्मणिस्रजं, निधिं
तुरङ्गमन्यद्विपुलं द्रव्यं च समानीय सार्थवाहस्याग्रे तत्याज। ततः स धनहयसहितं लोकानन्दकरं गुणधरं क्षणात् सार्थपतिवियो-
गपीडिते सार्थं निनाय। अथैतद्धनं किमिति सार्थवाहेन कथितः स सूर्य उवाच– किञ्चिद्धनं मदीयं किञ्चिच्च कौतुकाज्जनतो हृत-
मस्मि। राजर्षेः पितुर्बोधैर्मया यत् तास्कर्याचरणं न त्यक्तं तत् तव व्रतदर्शनेनाद्य स्वयमेवामोचि। इत्थं त्वं मम गुरुरसि, तत्तव पूजा-

न रुरोद, निरन्तरहर्षहास्याननो मातापित्रोः सुखकरो बभूव। कुतोऽपि प्रकटीभूता निर्मलाः कलाः प्रतिदिवसं गृह्णन् कान्तिसमूहशरीरो नयनप्रियश्चन्द्र इवैधिष्ट। शरीरशोभाकलागुणसमूहोदयैस्तत्तद्दिक्तत्त्वं तं लक्ष्मीपुञ्जमष्टभ्यो दिग्भ्यः स्वयंवरा अष्टौ कन्याः समागताः। सततं रत्नगृहे लीनः स लक्ष्मीपुञ्जो दर्शनस्पर्शनशत्र्वोरन्धकारसूर्यकान्त्योः स्वरूपं नाबुध्यत। यद्यदानन्दकरं वस्तु तत्तत् सकलं स उपभुक्तवान्, यद्यच्च दुःखकरं तत्तत् सत्तयाऽपि न बुबुधे। अङ्गनाभिरेव संवृत्तनृत्यगीतप्रमुखेनानन्दितः स पश्चोत्तरदेव इव गच्छन्तं समयं नाबोधि। अचिन्तिता भोगा मम कुतः स्युः? इति कदापि सुख्यसौ लक्ष्मीपुञ्जः प्रियाणामुत्सङ्गे प्रसुप्तो यावदचिन्तयत् तावद्दिव्यशरीरो दिव्यवस्त्रालङ्कारतेजस्वी कश्चित् पुरुषोऽग्रे प्रकटीभूय बद्धाञ्जलिरुवाच–हे धन्योदरसरोमराल! सकललक्ष्मीनां महास्थानं विपत्तीनां दूरं मणिपुरनामकं महानगरमस्ति। तत्र गुणधरनामा पुण्यशाली सार्थवाह आसीत्। स एकदा विपिने विशदाभिधस्य यतेः समीपमयासीत्। 'प्राणिनो द्रव्यहरणं मरणादपि दुःखप्रदं स्यात्, अतः पुण्यवद्भिस्तस्करकार्यत्यागो विधेयः।' इति मुनेर्वचनं श्रुत्वा स पुण्यशाली गुणधरस्तत्र विद्याधरसभायां तदा हर्षेणादत्तादानविरतिं चकार। नगरं प्राप्तः कदापि स विपुलधनस्पृहया भूरिभाण्डसमूहः कस्मैचिद्देशान्तराय चचाल। अथ निजदेशान्तेऽस्मिन् सार्थे महाविपिने प्रविशति तुरगारुढः क्वचित्प्रौढचरणदण्डेऽग्रे गच्छन्नसौ गुणधरः काञ्चनलक्षमूल्यां मणिमालां पतितां विलोक्य व्रतभङ्गभयात् तस्यां वारंवारं दृष्टिमपि न दत्तवान्। किं सार्थो दूरे गच्छति? यत्कोलाहलोऽपि न श्रूयते, इतिसमुत्पन्नहृदयदाहोऽसौ ततस्तुरगमवाहयत्। वर्त्मनि तुरगखुरोत्खाते क्षितितले स गुणधरः काञ्चनपूर्णं ताम्रकलशं वीक्ष्य व्रतविनाशभयात् त्वरितं ततो ययौ। तत्समये सहसा तुरगे मृते पापभीतः स विचारयामास–वाहयतो ममायमश्वो मृत्युं प्राप, हा! हतोऽस्मि!। य एनं तुरगं जीवयति तस्मै स्वीयं धनं दद इति

नारीणां त्यागलब्धमेधसां चतुर्थमणुव्रतं कथयन्ति सूरयः। ये परनारीत्यागव्रततीव्रतयोद्धुरास्तेषु भयान्मोहप्रमुखा दोषाः पदं न ददति। अहो! नागिलस्येव विपत्तीनां दूरकारि ब्रह्मव्रतं मोक्षस्य सन्मुखीकारकारणं कथ्यते। तथाहि—

भोजनृपतिरूपफणिपरिपालितं धर्मस्य निधानमिव महापुरं नाम नगरं वर्त्तते। तस्मिन् नगरे जिनेश्वरसेवोत्साहोत्पन्नविवेकविक्रमदुर्हृदय आश्चर्यकारिणीश्रीको लक्ष्मणनामाढ्यो वणिक् प्रतिवसति। तस्य वणिजोऽनलङ्कृतशुभाऽपि तीर्थङ्करभक्तिशोभिता विवेकिनी विनयवती च नन्दाभिधाना तनया वर्त्तते। सतीशतमस्तकमाला बाल्यवयोविलङ्घिनीयं वरावलोकिनं पितरं निरातङ्कतयेनान। यः पुरुषः कज्जलरहितं दशावर्जितं निस्तैलव्ययं कम्पहीनं च दीपं प्रत्यहं दधाति स मम विवाहकारको भवतु। वणिक् तस्या इति वचनं वरेषु प्रतिदिनं कथयन्नस्या अभिग्रहः क्व पूर्यः? इति चिन्तया दुःखी बभूव। अथ चारुशरीरो नागिलनामा धूर्तो धनैर्लब्धुमतुष्टं विरूपाक्षनामानं यक्षमाग्रहात् प्रार्थयामास। यथा नन्दया दीपः कथितस्तथा त्वं मम गृहे भवेति। यक्षेण वरे दत्ते स नागिलो वणिजः समीपे जगाम उवाच च-दरिद्राय धूर्त्ताय च मह्यं निजां तनयां ददासि चेत् तदा नूनमहं तस्या अभिग्रहं पूरयितुं समर्थोऽस्मि। भो! यादृक्तादृक्त्वं भवेर्यद्यभिग्रहं पूरयिष्यसि तदा सागराय भागिरथीमिव तुभ्यमहं नन्दिनीं ददामि। तर्हि मम गृहमागत्य तादृग्दीपो दृश्यतामिति नागिलेन कथिते सकुटुम्बः स वणिक् तथा चकार। दारिद्र्योपहतेऽप्यस्य गृहे तादृशमेन दीपं विलोकयन् स श्रेष्ठी तनयाविवाहोत्साहवानानन्दं लेभे। तत्समये लोकस्तादृग्दीपदर्शनाश्चर्योत्ताननयनो बभूव, परन्तु नन्दा नानन्दवती जाता। अथ श्रेष्ठिवर्यो। विभवैस्तस्य गृहं शोभयित्वा महोत्सङ्गितनगरस्तेन नागिलेन तनयां पर्यणाययत्। निरुगुणागर्णा तां कोमलाङ्गीं परिणीयापि स नागिलो द्यूतान्न न्यवर्त्तत। अहो! व्यसनं कस्य सुत्यजम्? । असौ द्यूतकारो यथा

यामेतद्धनं ढौकितमिति वदन्तं विद्याधरं गुणधर उवाच–यस्य यद्धनमहारि, तत्पापविनाशाय तस्मै देहि! इति कथितः सूर्यो निजकिङ्करैस्तद्वाक्यं तथा व्यधात्। इदं च मम धनं त्वं गृहाण! इति वदन् विद्याधरो निजं सर्वस्वं पुरतस्त्यक्त्वा सार्थवाहेनावोचि–त्वमिदं धनं गृहाण, यन्मया प्रतिश्रुतं, ममैनं तुरगं जीवयति तस्मै सकलं धनं दद इति। किञ्चाहं दानयोग्यं पात्रं न, तत्तव धनं नूनं न स्वीकरिष्यामीति गदन्तं सार्थपं विद्याधरो बभाषे। अहं तवोपदेशस्येह जन्मनि ऋणरहितत्वं न यास्यामि, तन्निजमायाविहिते कार्ये तव धनं कथं स्वीकरोमि?। हे सार्थपते! मम धनं त्वं न स्वीकरोषि तथा तव धनमहं न गृह्णामि, तत आसां लक्ष्मीनां स्वामी को भविष्यति?। सार्थपोऽप्युवाच–एको धर्म एव जगत्त्रयलक्ष्मीनामधिपः,यस्मै यस्मै स ददाति तस्य तस्य ताः श्रियो भवन्ति। तदेहि! गच्छावः, "सर्वज्ञप्रभुदर्शिते भुवनपतौ धर्मे सर्वत्र लक्ष्मीं विन्यस्य कृतार्थां कुर्वः। अथ हर्षवता तेन विद्याधरेण वचने स्वीकृते प्रसन्नौ वरावुभौ धनं सर्वं सप्तक्षेत्र्यां ददतुः। ततोऽसौ गुणधरः सुखाद्धर्मैः संसारं क्षिप्त्वा हे कान्तिसमूह! लक्ष्मीपुञ्ज! भवान् पुण्यसमूहवान्नभूत्। गुणधरोपदेशेनैव सूर्योऽपि प्रोज्झितचौर्यो चित्तं ददानः पूर्णायुः पुण्यप्रमाणेन व्यन्तरस्वामी समुत्पन्नोऽस्मि। तव भाग्यदेवताशक्तिप्रेरितोऽहं गर्भादारभ्य वेगेन तव समयसमययोग्यं हितमपूरयम्। इति व्यन्तरकथनान्ते मूर्च्छां लब्ध्वा प्रबोधवान् समुत्पन्नजातिस्मृतिर्हर्षास्पदं लक्ष्मीपुञ्जो निर्मलं धर्ममाराध्याच्युते देवलोके सुरत्वं प्राप्य ततः प्रशस्यं मनुष्यजन्मासाद्य मोक्षलक्ष्मीमशिश्रियत्। इति लब्धसकलश्रीकलक्ष्मीपुञ्जोदाहरणाल्लोकेनास्तेयव्रतप्रशंसनीयेन भवितव्यम्।

॥ इत्यदत्तादानव्रतविचारे लक्ष्मीपुञ्जकथा ॥

पुनर्मोक्षमार्गे पथिकानां सज्जनानामचौर्यव्रतदीपस्य प्रकाशोल्लासवद् ब्रह्मव्रतं कथितम्। निजासु भार्यासु सन्तोषस्तथा पर-

कोटराग्रे सुष्वाप । अथ स्वामिवियोगवती काऽपि विद्याधरी गगने गच्छन्ती नागिलरूपमोहिता संजातमदना तमासाद्य बभाषे । हे स्वामिन् ! मदनाग्निज्वालातप्ता तव शरणं गताऽस्मि । हे लावण्यसागर ! मां बाहुतरङ्गेषु स्नपय ! । विद्याधरमुकुटस्य हंसराजस्याहं दयिताऽस्मि, ततः कवित्वतो गीतेनेव त्वया मानसमाकर्षि । चण्डाभिधस्य विद्याधरभर्तुरहं लीलावतीनाम्नी तनयाऽस्मि । त्वया स्वीकृता भूयः गतयं लीलावती भविष्यामि । यदि मां न स्वीकरोषि तदा मृत्युर्मां स्वीकरिष्यति तद् हे धर्मज्ञ ! त्वं नारीहत्या-पापवान् न भविष्यसि । तथा स्वामिनो जनकस्य च विद्यानां तद् रहस्यं जानामि, येन तौ जित्वा तत्प्रभुत्वं तव दास्यामि, तन्मां गृहाण ! । मम वचनमन्यथा मा कार्षीरित्युक्त्वासौ हरिणलोचना कम्पमाना तस्य चरणौ शिरसा स्प्रष्टुमधावत । ममान्यनारीस्पर्शोऽपि माभूदिति विचार्य शीघ्रं स नागिलो वह्निना दह्यमानाविव क्रमौ ततश्चकर्ष । अथ कुपिता सा गगने तप्तलोहगोलं विकृत्य, 'मां गृहाण ! अन्यथाऽनेन भस्मसात्करोमी'ति तमब्रवीत् । अथ लोभवचनादलुभ्यतो भयस्थानादबिभ्यतस्तस्य शिरसि स सूत्कारी ज्वलन् गोलः पपात । दग्धोऽयं दग्ध इति विद्याधरपत्न्यां मनसि विचारयन्त्यां स नमस्कारं सस्मार, विपत्तिसमूहश्च नष्टोऽभूत् । अथ लज्जाटोपेन विद्याधर्यदृश्यत्वमलभत । त्वां विना जनकभवनेऽपि रतिर्नेति कथयन्ती दास्युद्घाटितप्रतीहारा नन्दा तदा तदन्तिकमाजगाम । तत आकृत्या, वचनेन, गत्या च तां नन्दां जानन्नपि स नागिलो विद्याधरीविप्लवाशङ्की संकीर्णस्थो बभाषे । हे कमलनयने ! यदि त्वं सत्यं नन्दासि तदाशु मामेहि ! यदीतरासि, तद्धर्मः प्रभुरस्तु, तव स्तम्भनमस्तु ! । ततः स्तम्भितगमना तद्वृत्ताश्चर्यस्तब्धमूर्तिरेव सा विद्याधरी स्थितस्वरूपैव पुरतस्तस्थौ । ततः स तत्तत्कपटमवलोक्यान्यकपटशङ्कितः कृतलोचः शीलनाशभयात् स्वयं व्रतमग्रहीत् । अथ शासनदेव्या दत्तं मुनिवेषं धारयन् स नागिलस्तत्प्रदीपाग्रभागं समेत्येदमुवाच—अयि विरूपाक्ष !

यथा धनमहारयत् तथा तथा स वणिक् तनयाप्रीत्याऽपूरयत। धनानि हारयित्वापि, बहिःप्रमदा रन्त्वापि भवनमागतः स सहर्षं नन्दया पर्यचर्यत। ततः स इदं विचारयामास–अहं नूनमस्याः प्रियो न, यदित्थमपराधेऽपि मयि रोषं न करोति। अथैकदा द्यूतकारेभ्यो हारितत्रस्तः स विपिनं प्रविवेश। अत्र ज्ञानिनं मुनिं वीक्ष्य बद्धाञ्जलिः सः पप्रच्छ। उत्तमस्वभावापि सा प्रिया नन्दा मां हृदये कथं न धारयति ? इति पृष्टेऽस्य योग्यत्वं विदित्वा ज्ञानी यतिरुवाच–विवेकवती सा नन्दा स्वामिनमपि विवेकवन्तमभिलषन्ती तादृग्दीपव्याजाद्विवेकं तद्गुणं व्याजहार, अञ्जनं माया, नवतत्त्वाज्ञानं दशा, प्रेमभङ्गः स्नेहव्ययः, सम्यक्त्वखण्डनं कम्प उच्यते, तैर्दोषैरहितं विवेकं यो धारयति स मम स्वामी भवत्विति दीपापदेशतो जगाद, परन्तु तद्भावार्थं केनचिदपि न पृष्टा अञ्जनरहितं दशारहितं स्नेहव्ययहीनं प्रत्यहं कम्पहीनं चाश्चर्यकरं दीपमेव त्वं भवनेऽकरोः। तादृशं दीपं दृष्ट्वा नष्टोत्तरा सती सा नन्दा सती लज्जया मौनवती निर्विवेकिनाऽपि भवता परिणीता। अथ सा सतीति परिणेतुस्तव मोदस्थाने मोदते, विवेकिनी सा त्वां निर्विवेकीति हृदये न धारयति। अथ मुनिकथितं विवेकं स विशेषतोऽङ्गीचकार, प्रेमपुष्टिदं निजस्त्रीसन्तोषं व्रतमग्रहीत्। ततो हर्षेण भवनं गत्वा स्नात्वा जिनेश्वरं पूजयित्वा सुपात्रेभ्यो दानं वितीर्यासौ यथाविधि बुभुजे। अथ विवेकिनमिव पतिं हर्षेण वीक्ष्य सा नन्दा भागिरथीजलपवित्रेण वचनेन तं व्याजहार–हे स्वामिन् ! शीलजलप्रकटसिक्तया मम जिनेश्वरसेवयाऽद्य फलितं, यद्विवेकवान् विलोकितोऽसि। नागिलोऽप्युवाच–हे कोमलाङ्गिनि ! मया यद्व्यसनं त्यक्त्वा विवेकोऽङ्गीकृतस्तत्र गुरोरुपदेशः कारणमस्ति। ततः प्रभृति सद्धर्मशीलप्रेमगुणैस्त्रिधा दृढं तयोर्हृदये स्यूते भृशमेकतां तौ धारयामासतुः। अनुपमरूपयोर्धर्मध्यानासक्तमत्योश्चिन्तात्यक्तहृदयोस्तयोः शरीरकान्तिर्यथेच्छमैधिष्ट। अथ कदाचिन्महामहाकृष्टा नन्दा तातगृहं जगाम। नागिलो विधुन्यस्तनयनो निबद्धभूमि-

लोलुभं मानसं पञ्चमव्रतविनाशाय प्रपञ्चमप्युत्पादयेत्। तद् द्रव्यममूहेन पूरितं भवनं विहाय क्वचिद्देशान्तरे गच्छावो लक्ष्मीमहाग्रहात्। कृटाव: इति निश्चित्य श्रीक्रीडाकोमलात् पश्चात् षट्पद इव रात्रौ स श्रेष्ठी तया शृङ्गारसुन्दर्या समं भवनाद्बहिरयासीत्। करण्डभूषणां तीर्थङ्करप्रतिमां धारयन्नसौ पञ्चपरमेष्ठिनमस्कारान् स्मरन् पुरद्वारमाययौ। अथ शूरनामके तन्नगरनाथे शूलरोगादनपत्ये मृते सचिवैः कल्पितो दिव्यगजस्तदा तत्र समागतः। स गजवर्यः कान्तासहितं तं विद्यापतिं पुण्यघटजलैरभिषिच्य स्वशुण्डेन स्वपृष्ठमारोपयामास। अथ गजराजमौलिस्थितोऽसौ श्रेष्ठ्यप्रीणयन् महोत्सवेन प्रसन्नैर्मन्त्रिभिर्वसुधेन्द्रराजसदनाय निन्ये। स श्रेष्ठी नीरदोन्मुक्तं राहुग्रस्तं निशापतिमिवात्मानं लक्ष्मीकर्दमादुन्मुक्तं राज्यमहाकर्दमप्रपातिनममन्यत। अथ तस्मिन् सिंहासनोपविष्टेऽभिषेकं निषेधति, सचिवलक्षे विलक्षे गगने दिव्यसरस्वती प्रादुरभूत्। 'अद्यापि तव विपुलं भोगफलमस्ति, तद्राज्यलक्ष्मीः स्वीकृत्य सानन्दमुत्सङ्गीकुरु।।' प्रशस्यमतिः स इत्यात्मभाग्यदेवतावचनं श्रुत्वा भद्रासने जिनेश्वरस्य प्रतिमां स्थापयामास। चरणासनोपवेशनः स बुद्धिमान् धर्मविद्भिः प्रसन्नैः सचिवैरात्मनि जिनेश्वरदास्याभिषेकं कारयामास। विद्वान् स आत्मने भुक्तमात्रं परिग्रहं संधारयन् सकलं वस्तुसमूहं जिनेश्वरनामचिह्नमचीकरत्। पूतमानसः कृतज्ञः स श्रेष्ठी तत्र निरन्तरं भूरिधनव्ययतो जिनेश्वरस्य यात्रामहं कारयामास। लोकात् तस्मिन् करमगृह्णति प्रभूतव्ययकृते तद्भाग्यदेवता सततं राजभवने रत्नैरवर्षत्। अयं विद्यापतिर्धर्माधीन इति निर्धार्य तं जेतुं समागतोधमा राजानो जिनेश्वराधिष्ठायिभिर्गुह्यकै रोगमुत्पाद्य नाशिताः। अथ शत्रूणामुत्कटं सैन्यारम्भं शत्रुक्षयं च विदित्वाऽऽनन्दप्रीतमानसो विद्यापतिः श्रेष्ठी विचारयामास। अहो! ये शत्रुराजानो वासवविक्रान्तिजुषस्तेऽपि धर्ममाहात्म्यात्सद्यःस्थानं विनाशमीयुः। सेवमानं मां स्वल्पपरिग्रहं जानन् धर्मो महापरिग्रहान्वरीञ्जेतुं सहायतां चकार। तदहं परित्यक्तसकलप-

वसने, एकं पात्रम्, दिवसभोज्यमात्रो भोजनसंग्रहः, स्वोपयोग्यन्यदपि स्वल्पमूल्यमेकद्विसंख्यकं वस्तु ममास्तु, जिनेश्वरसेवोपयोगि तु बह्वप्यस्तु। आनन्दनिर्मलाशयो मनीषी धर्मध्यानाग्रेसरः स श्रेष्ठीति परिग्रहं प्रमाय दिवसं निनाय। प्रभाते वित्तं विना याचकानां मुखं कथं दर्शनीयं ? ततः सुप्ते लोके रात्रावेव देशान्तरगमनमुचितमिति शृङ्गारसुन्दर्या सह विचार्यायं सुष्वाप। अथ यावद्देशान्तरगमनोत्को मध्यरात्रेऽभ्युत्थितस्तावत् तावद्भिरेव धनैः पूर्णं भवनमवलोक्याश्चर्यविकस्वरहृदयो हृदयवल्लभामुवाच—इयं लक्ष्मीर्दशमे दिवसे दैवेनाकृष्यमाणा गमिष्यत्येव सम्प्रति तु दीयमानापि ममालयान्न गच्छति। लक्ष्म्याः स्थैर्यास्थैर्यकृतेऽदानं दानं वा कारणं नास्ति, मूर्खा व्यर्थं स्वस्मिन् प्रसिद्धां कृपणतां विस्तारयन्ति। दीयमानापि लक्ष्मीश्चेन्न गच्छति तद्दीयत एव, अदीयमानापि चेन्न तिष्ठति तद्दीयत एव। इति तयोर्दम्पत्योराश्चर्यान्वितयोर्वार्त्तालापरसवीचिप्लुतयो रात्रिलतादावानलः पीतवर्णः सूर्य आकाशमालिलिङ्ग। अथ तथैव लक्ष्मीं वितीर्य वासरयोग्यं कर्म विधाय पूर्णपुण्यशाली प्रतिज्ञातपरिग्रहोऽयं सुप्तवान्। इत्थं नव दिनानि यावद्धानिरहितां लक्ष्मीं ददान एष श्रेष्ठी कल्पवृक्षस्याधिदेवीनामपि प्रशंसनीयत्वं प्राप। दिष्ट्या पूर्वपुण्यजलकर्दमो मोक्षमार्गस्य दूषको मदीयो लक्ष्मीसमूहः श्वस्तने वासरे शोषं गमिष्यतीति प्रसन्नचेता निर्मलाशयः स विद्यापतिः श्रेष्ठी रात्रौ सुप्तवान्। अथाकस्माद्धर्षसुन्दरनयनया लक्ष्म्या स्वप्ने बभाषे। तद्बलाद् दैवं दुर्बलं विदधद्भिर्गर्वगर्भितैर्दानपुण्यैस्त्वयि निश्चलैवाहं कृता। हे महाबुद्धिमन् ! 'अत्युग्रपुण्यपापानां फलमत्रैवाश्नुते,' इति सुभाषितं त्वया यथातथमकारि। तदहं तव भवनं कदापि न त्यजामि, भाग्यभङ्गीभिर्यथाकामं मामुत्सङ्गीकृत्य भुङ्क्ष्व ! । अथ मध्यरात्रे त्यक्तनिद्रः स श्रेष्ठी कान्ताग्रे स्वप्नसंकथां वदित्वा प्रतिज्ञैकक्रीडास्थानमिदमुवाच। हा ! भोगैकफलेन लक्ष्मीदानव्यसनेनैवावयोर्मोक्षफलेन तपसा विना भवं गमिष्यति। कदापि लोभक्रीडाभिश्शृङ्खलं

सर्वज्ञसेवकोऽप्येष स्वगृहलक्ष्मीनां संख्यातिमपि नैव ज्ञातवान्। अभिलषणीयगुणोदया जिनेश्वरशासनकमलचञ्चरीका शृङ्गा-
रसुन्दरी तस्य प्रियतमा बभूव। अनन्तगुणलाभबुद्धिः स विद्यापतिः श्रेष्ठी यत्नपूर्वकं सप्तक्षेत्र्यां धनं वपन् यथासमयं धर्मपोषणं
चकार। सततं वित्तमुपार्जयतः सज्जनानामृणं दूरं कुर्वतो यथेच्छं धर्मं विदधतो महापापं स्वल्पयत उच्चैः सुखतरङ्गमयं दिवससमूहं
गमयतस्तस्य श्रेष्ठिनोऽग्रे कदापि कापि प्रमदा स्वप्न इदमुवाच–तव गुणराजिवशंगताहं लक्ष्मीदेवी त्वामिति भणामि, अद्यतो दशमे
दिवसे दैवेन क्रुद्धा तव भवनाद्गमिष्यामि। अथ निद्रारहितं, दरिद्रोऽहं भविष्यामीति दुःखितं तं विद्याधरं मस्तकनिहितहस्तयु-
गला शृङ्गारसुन्दरी व्याजहार। सूर्यस्य स्यन्दनेऽन्धकार इव यदाकर्णितविलोकितपूर्वं तन्मालिन्यं तव वदने किं दृश्यते?। हे
स्वामिन्! त्वया प्रेम्णा सकलसुखभागिनी कृतास्मि, अद्य दुःखभागप्रदाने किं मां प्रतारयसि?। अथ स्वामिनि स्वप्नस्वरूपं कथ-
यति प्रथितहास्या सा शृङ्गारसुन्दरी भूयो विवेकसुधासारणीं गिरमुवाच–मोक्षमार्गसंचारक्रमस्तम्भनशृङ्खला भोगफलकर्मचिरस्था-
यिनी लक्ष्मीः सज्जनानां हृदयशल्यमस्ति। लक्ष्मीः सुरेव मदयेत्, सा चेद्गच्छति तद्गच्छतु! किन्तु मदनाशको विवेक एक एव
त्वां मा त्यजतु। श्रियाः फलं सुपात्रदानं तत्त्वया बहु स्वीकृतमिदानीं ततोऽधिकं दरिद्रतायाः फलं तपो गृहीतव्यम्। हे नाथ!
मोक्षमार्गावरणकरी श्रीश्चेद्भाग्यैर्नाशं गच्छति तदानन्दस्थाने निर्भरं क्लेशं कथं धारयसि?। अथवोष्ट्रकान्तोपमा लक्ष्मीर्दशमे दिवसे
कथं यास्यति? निजाधीना साऽद्यैव सप्तक्षेत्र्यां रोप्यताम्!। ततः परिग्रहप्रमाणनामकं व्रतं स्वीकृत्य स्थातव्यं, तथा संतोषपो-
षक एष समयो नेतव्यः। इति पत्नीवचनैः प्रसन्न एष श्रेष्ठी क्षणात् प्रभातकालीनकार्यपूर्वकं सकलं वित्तं सप्तक्षेत्र्यामवपत्। ततः
स्थापितशरीरोपयोगिस्वल्पपरिग्रहः स श्रेष्ठी मध्याह्नसमये जिनेश्वरं संपूज्येदमुवाच। शृङ्गारसुन्दरी प्रिया, एका शय्या, द्वे

अथ प्रदीपतोऽपि वाणी प्रादुरभूत्—हे प्रभो! यक्ष! नन्दातिलोभेनाराध्याश्चर्यकारिदीपतां प्रापितोऽसि, कृतकृत्योऽसि, त्वं गच्छ!। अथ तादृक्षमहाशीलप्रसन्नया विस्तीर्णविद्यया विद्या- यावज्जीवं भवान् सेवनीयः, सूर्यस्येव मम कान्तिभिः स्पर्शदोषो न भवेत्। अथ तादृक्षमहाशीलप्रसन्नया विस्तीर्णविद्यया विद्या- धर्य्या प्रतिपदं विधीयमानप्रभावनस्तथाविधकथाज्ञानैधमानहर्षया व्रतध्यानदूरीभूतपापमूलया नन्दया च सहितः सूर्योदयेऽप्यनष्ट- कान्तिना दीपेन तेजस्वी जनेन सविस्मयं दृश्यमान एष नागिलो गुरुं जगाम। गुरुसङ्गतः स नन्दासमन्वितो यथाविधि व्रतं लब्ध्वा महाकान्तारोद्यानग्रामनगरादिषु विजहार। ततो रात्रिष्वपि तस्य प्रदीपस्य प्रकाशे पठन्नयं स्वल्पैरेव दिवसैर्ज्ञातज्ञातव्यसमूहो- ऽभूत्। संयमात् पूर्वं बद्धायुस्तया नन्दया प्रेमवान्सौ मृत्वा हरिवर्षक्षेत्रे कल्पवृक्षस्य तले युगलतां जगाम। तद् युगलं भाग्यशेषेण दैविकभोगं भुक्त्वा महाविदेहनामके क्षेत्रे मानवभवं लब्ध्वा मोक्षमलभत। अतो नागिलनन्दावद्धर्षाद्वैततत्परैर्निपुणैर्धर्मद्रुमैकवर्षणं चतुर्थं व्रतमङ्गीकर्त्तव्यम्।

## ॥ इति चतुर्थव्रतविचारे नागिलकथा ॥

धीरा नरा ईदृक्षचतुर्व्रतीरूपदर्शनादर्शतुल्यमतिविशदं पञ्चमं व्रतं (परिग्रहपरिमाण)नामकं स्वीकुर्वन्तुः!। असन्तोषप्रमुख- दोषसर्पमोहमहागरलपीयूषं परिग्रहस्य यन्मानं तत्पञ्चममणुव्रतं ज्ञातव्यम्। अतिभयङ्करसंसारकामिनीभीतस्य बुद्धिमतो मुक्तिरम- णीसमागमेङ्गितस्थानलक्षणं परिग्रहपरिमाणनामको व्रतकल्पवृक्षोऽद्भुतो विद्यापतेरिव प्रतिषिध्यमानामपि लक्ष्मीं दद्यात्। हे श्रावकाः! तद्वृत्तान्तं निशामयत!।

पोतनपुरनामके नगरे प्रख्यातो विपुलैश्वर्यशाली विद्यापतिनामा धनवान् व्यापारी प्रतिवसति स्म। नक्षत्राणां दैवज्ञ इव

लक्ष्मीमहा-
लोलुपं मानसं पञ्चमव्रतविनाशाय प्रपञ्चमप्युत्पादयेत् । तद् द्रव्यसमूहेन पूरितं भवनं विहाय कचिद्देशान्तरे गच्छावो
प्रकाम । इत्युक्त्वा इति निश्चित्य श्रीक्रीडाकोमलात् पश्चात् षट्पद इव रात्रौ स श्रेष्ठी तया शृङ्गारसुन्दर्या समं भवनाद्बहिरयासीत् ।
करण्डभूषणां तीर्थङ्करप्रतिमां धारयन्नसौ पञ्चपरमेष्ठिनमस्कारान् स्मरन् पुरद्वारमाययौ । अथ शूरनामके तन्नगरनाथे शूलरोगाद-
नपत्ये मृते मन्त्रिभिः कल्पितो दिव्यगजस्तदा तत्र समागतः । स गजवर्यः कान्तासहितं तं विद्यापतिं पुण्यघटजलैरभिषिच्य स्वशुण्डेन
स्वपृष्ठमारोपयामास । अथ गजराजमौलिस्थितोऽसौ श्रेष्ठ्यप्रीणयन् महोत्सवेन प्रसन्नैर्मन्त्रिभिर्वसुधेन्द्रराजसदनाय निन्ये । स श्रेष्ठी नीर-
दोन्मुक्तं गद्ग्रस्तं निशापतिमिवात्मानं लक्ष्मीकर्दमादुन्मुक्तं राज्यमहाकर्दमप्रपातिनममन्यत । अथ तस्मिन् सिंहासनोपविष्टेऽभिषेकं
निषेधति, मन्त्रिवलक्षे विलक्षे गगने दिव्यसरस्वती प्रादुरभूत् । 'अद्यापि तव विपुलं भोगफलमस्ति, तद्राज्यलक्ष्मीः स्वीकृत्य सान-
न्दमुन्मङ्गीकुरु ! ।' प्रशस्तमतिः स इत्यात्मभाग्यदेवतावचनं श्रुत्वा भद्रासने जिनेश्वरस्य प्रतिमां स्थापयामास । चरणासनोपवेशनः
स बुद्धिमान् धर्मनिद्धिः प्रसन्नैः मन्त्रिभिरात्मनि जिनेश्वरदास्याभिषेकं कारयामास । विद्वान् स आत्मने मुक्तमात्रं परिग्रहं संधा-
रयन् सकलं वस्तुसमूहं जिनेश्वरनामचिह्नमचीकरत् । पूतमानसः कृत्यज्ञः स श्रेष्ठी तत्र निरन्तरं भूरिधनव्ययतो जिनेश्वरस्य यात्रा-
महं कारयामास । लोकात् तस्मिन् करमगृह्णति प्रभूतव्ययकृते तद्भाग्यदेवता सततं राजभवने रत्नैरवर्षत् । अयं विद्यापतिर्धर्माधीन
इति विचार्यतं जेतुं समागतोद्यमा राजानो जिनेश्वराधिष्ठायिभिर्गुल्मके रोगमुत्पाद्य नाशिताः । अथ शत्रूणामुत्कटं सैन्यारम्भं शत्रय-
मं च निर्दिश्याऽऽनन्दप्रीतमानसो विद्यापतिः श्रेष्ठी विचारयामास । अहो ! ये शत्रुराजानो वासवविक्रान्तिजुषस्तेऽपि धर्ममाहात्म्या-
द्दुर्यशःस्थानं विनाशमीयुः । सेवमानं मां स्वल्पपरिग्रहं जानन् धर्मो महापरिग्रहान्नरीञ्जेतुं सहायतां चकार । तदहं परित्यक्तसकलप-

वसने, एकं पात्रम्, दिवसभोज्यमात्रो भोजनसंग्रहः, स्वोपयोग्यन्यदपि स्वल्पमूल्यमेकद्विसंख्यकं वस्तु ममास्तु, जिनेश्वरसेवोपयोगि तु बह्वप्यस्तु। आनन्दनिर्मलाशयो मनीषी धर्मध्यानाग्रेसरः स श्रेष्ठीति परिग्रहं प्रमाय दिवसं निनाय। प्रभाते वित्तं विना याचकानां मुखं कथं दर्शनीयं ? ततः सुप्ते लोके रात्रावेव देशान्तरगमनमुचितमिति शृङ्गारसुन्दर्या सह विचार्यायं सुष्वाप। अथ यावद्देशान्तरगमनोत्को मध्यरात्रेऽभ्युत्थितस्तावत् तावद्भिरेव धनैः पूर्णं भवनमवलोक्याश्चर्यविकस्वरहृदयो हृदयवल्लभामुवाच—इयं लक्ष्मीर्दशमे दिवसे दैवेनाकृष्यमाणा गमिष्यत्येव सम्प्रति तु दीयमानापि ममालयान्न गच्छति। लक्ष्म्याः स्थैर्यास्थैर्यकृतेऽदानं दानं वा कारणं नास्ति, मूर्खा व्यर्थं स्वस्मिन् प्रसिद्धां कृपणतां विस्तारयन्ति। दीयमानापि लक्ष्मीश्चेन्न गच्छति तद्दीयत एव, अदीयमानापि चेन्न तिष्ठति तद्दीयत एव। इति तयोर्दम्पत्योराश्चर्यान्वितयोर्वार्त्तालापरसवीचिप्लुतयो रात्रिलतादावानलः पीतवर्णः सूर्य आकाशमालिलिङ्ग। अथ तथैव लक्ष्मीं वितीर्य वासरयोग्यं कर्म विधाय पूर्णपुण्यशाली प्रतिज्ञातपरिग्रहोऽयं सुप्तवान्। इत्थं नव दिनानि यावद्दानिरहितां लक्ष्मीं ददान एष श्रेष्ठी कल्पवृक्षस्याधिदेवीनामपि प्रशंसनीयत्वं प्राप। दिष्ट्या पूर्वपुण्यजलकर्दमो मोक्षमार्गस्य दूषको मदीयो लक्ष्मीसमूहः श्वस्तने वासरे शोषं गमिष्यतीति प्रसन्नचेता निर्मलाशयः स विद्यापतिः श्रेष्ठी रात्रौ सुप्तवान्। अथाकस्माद्दर्पसुन्दरनयनया लक्ष्म्या स्वप्ने बभाषे। तद्बलाद् दैवं दुर्बलं विदधद्भिर्गर्वगर्भितैर्दानपुण्यैस्त्वयि निश्चलैवाहं कृता। हे महाबुद्धिमन्! 'अत्यर्थपुण्यपापानां फलमत्रैवाश्नुते,' इति सुभाषितं त्वया यथातथमकारि। तदहं तव भवनं कदापि न त्यजामि, भाग्यभङ्गीभिर्यथाकामं मामुत्सङ्गीकृत्य भुङ्क्ष्व!। अथ मध्यरात्रे त्यक्तनिद्रः स श्रेष्ठी कान्ताग्रे स्वप्नसंकथां वदित्वा प्रतिज्ञैकक्रीडास्थानमिदमुवाच। हा! भोगैकफलेन लक्ष्मीदानव्यसनेनैवावयोर्मोक्षफलेन तपसा विना भवं गमिष्यति। कदापि लोभक्रीडाभिश्रृङ्खलं

स्नयनं पद्मपदीकर्तुमुत्सुकः कोऽपि मनुष्यश्रेष्ठो द्वारि वर्त्तते । अथैष प्रतीहारी राजभ्रूचलनसंज्ञया शीघ्रं तं मनुष्यं सभाभूमौ प्रवेशयामास । अथ विचक्षणः कृतनमस्कारः संक्रान्तासनः स वचनपीयूषैः पृथिवीधवकर्णौ स्नपयामास । हे वसुधावल्लभ ! वेत्सि, नागपुरनामके नगरे शत्रुक्राथकारितेजाः श्रीनागचन्द्रनामा भूपोऽस्ति । तस्य राज्ञो देवाङ्गनावर्णनेषु प्रशस्यतमा कामदेवशुकैकपञ्जरी रत्नमञ्जरी कान्ता वर्त्तते । मदनमहीपतेरुर्वरास्तित्वं शरीरिणी गुणश्रेणिरिव तयोर्गुणमालानाम्ना प्रसिद्धा तनया विद्यते । तच्छरीरसंगता लक्ष्मीः स्फुरत्कमलगजेन्द्रकुम्भद्वद्वेन्दुवासिनीं साक्षात् कमलां जहासेव । यौवनमनोहरायै तस्यै वरान् विचारयन् मेदिनीजानिः प्रभायै तपनमिव तव नन्दनमेव निश्चिकाय ।हे राजन् ! इत्यर्थं त्वयि प्रार्थयितुं मम राजा विश्वासपात्रीभूतं मां प्रधानचरं नियुक्तवान् । तद् हे प्रभो ! मनोज्ञकान्त्युल्लासनिर्विभ्रममदनाय नन्दनाय यथेच्छं मदनरमणीविजयिनीं तामुररीकुरु । हे नाथ ! महोत्सवलाभात् तं राजानं वरप्राप्तितस्तां कुमारीं दौत्यसाफल्यतश्च मामनुगृहाण ! इत्यस्मिन् दूते कथयति प्रसन्नो धरानयकः सिंहश्रेष्ठिवदनकमले निहितनयनद्वन्द्व उवाच । हे बन्धो ! आवयोः कश्चिद्भेदो न, अमुं तनयमादाय नागपुरं याहि ! अयं सम्बन्धश्च क्रियताम् ! । अस्माद् भयङ्करादनर्थदण्डाद् भीतः कृतज्ञः स सिंहः किञ्चिदधोवदनो भूभुजः प्रत्युत्तरं न दत्तवान् । ततः किञ्चित्क्रोधकलुषनयनः पृथिवीधवो व्याजहार-हे मित्र ! अयं सम्बन्धः किं साधुर्न यदुत्तरं न ददासि ? ।अथ राजानं क्रोधलेशलाञ्छनं पश्यन् सिंहश्रेष्ठी सुधामधुरां वचनकलां कलयामास । योजनशतादूर्ध्वं न गच्छामि,इति मदीयं व्रतं वर्त्तते, नागपुरं नगरं त्वस्मात् साग्रं योजनशतमस्ति । तद्व्रतनाशभयोऽहमस्मिन् परिणये न गच्छामि तथा चैवं विधेषु कृत्येषु मादृशा न दिश्यन्ते । इति वचनसमिधेन्धनेन ज्वलत्क्रोधमहावह्निः स राजा तच्छिखासमूहसन्तप्तामिव वाणीमुवाच-यत्र मम यातुं युक्तं स्यात् तत्र मया त्वं निदिश्यते,

रिग्रहो यदि धर्ममगुं भजे तदन्तःशत्रुविनाशेऽप्ययमुद्यमी भवति। इति विचिन्त्य विद्यापतिः शृङ्गारसुन्दरीगर्भसमुत्पन्नं शृङ्गारसेननामानं तनयं निजे स्थाने स्थापयामास। स्वयं संयमसूरिनाम्नामाचार्याणामग्रे व्रतमङ्गीकृत्य तपोवह्निना कल्याणमयमात्मानं निर्मलं व्यधात्। ततो विद्यापतिमुनिः सम्पूर्णायुर्देवलोकमगच्छत्। पञ्चभिर्मनुष्यदेवजन्मभिः परमं पदं (मोक्षं) लेभे। तद्विद्यापतिनिदर्शनज्ञाननिश्चलमानसैर्धर्मेच्छुभिर्भव्यलोकैर्मितपरिग्रहैर्भवितव्यम्।

## ॥ इति परिग्रहप्रमाणव्रतविचारे विद्यापतिकथा ॥

पुनर्दशदिक्कृतसंचारे सीमानुलङ्घनं प्रथमं दिग्विरतिनामकं गुणव्रतं प्रथयन्ति। पापगजदुरुत्थानपातसंवर्तगर्त्तिका धर्मपृथिवीनाथसुवर्णासनमिदं व्रतं राजति। इदं दिग्विरतिव्रतं धर्मपुष्पस्योच्चैर्वृक्षो यदधिरूढानां मनुष्याणां पापश्वापदाद् भयं न भवति। दिग्विरतिव्रती यः पुमान् स्वं गतौ सङ्कोचयत्येव स नरः सिंहश्रेष्ठीव संसारलङ्घनवरफलप्रारम्भो भवति। तथाहि—

अथ नगरविस्तारेषु सर्वश्रेष्ठा वासन्तीति प्रसिद्धा नगरी वर्त्तते, आश्चर्यमिदं यदियं पुरी सरलगुणवद्भिः पुम्भिः पूर्णास्ति। तस्यां पुरि कीर्त्तिपालनामा राजा बभूव, यस्य कीर्तिकन्याक्रीडासु गगनाङ्कोऽपि संकटो बभूव। तस्य भूभुजो रूपशोभास्पर्शसंलुब्धैरिव सकलैर्गुणैरन्वितः श्रीमान् भीमनामा तनयो रराज। तस्मान्नन्दनादपि निजेभ्यः प्राणेभ्योऽपि महाप्रियस्तत्र पृथिवीवल्लभस्य सिंहनामा श्रेष्ठिवर्यः सुहृद्भूत्। जिनेश्वरभक्तिर्जैनशासनज्ञानं जैनधर्माचरणमिति सारभूतं भूषणत्रयं स नित्यं धारयामास। तच्छ्रेष्ठीमुखनिहितलोचनं चारुपरिषदं तं भूभुजं कदापि प्रतीहारिश्रेष्ठो निवेदयामास। हे स्वामिन्! मनोहराकारो भवदाननकमले

प्यनयत् पद्‌पदीकर्तुमुत्सुकः कोऽपि मनुष्यश्रेष्ठो द्वारि वर्त्तते । अथैप प्रतीहारी राजभ्रूचलनसंज्ञया शीघ्रं तं मनुष्यं सभाभूमौ प्रवेशयामास । अथ विचक्षणः कृतनमस्कारः संक्रान्तासनः स वचनपीयूषैः पृथिवीधवकर्णं स्नपयामास । हे वसुधावल्लभ ! वेत्सि, नागपुरनामके नगरे शत्रुक्वाथकारितेजाः श्रीनागचन्द्रनामा भूपोऽस्ति । तस्य राज्ञो देवाङ्गनावर्णनेषु प्रशस्यतमा कामदेवशुकैकपञ्जरी रत्नमञ्जरी कान्ता वर्त्तते । मदनमहीपतेरुर्वैरस्तिलं शरीरिणी गुणश्रेणिरिव तयोर्गुणमालानाम्ना प्रसिद्धा तनया विद्यते । तन्वङ्गीरङ्गंगता लक्ष्मीः स्फुरत्कमलगजेन्द्रकुम्भद्वद्वेन्दुवासिनीं साक्षात् कमलां जहासेव । यौवनमनोहरायै तस्यै वरान् विचारयन् मेदिनीजानिः प्रभायै तपनमिव तव नन्दनमेव निश्चिकाय ।हे राजन् ! इत्यर्थं त्वयि प्रार्थयितुं मम राजा विश्वासपात्रीभूतं मां प्रधानचरं नियुक्तवान् । तद् हे प्रभो ! मनोज्ञकान्त्युल्लासनिर्विभ्रममदनाय नन्दनाय यथेच्छं मदनरमणीविजयिनीं तामुररीकुरु । हे नाथ ! महोत्सवलाभात् तं राजानं वरप्रार्थितस्तां कुमारीं दौत्यसाफल्यतश्च मामनुगृहाण ! इत्यस्मिन् दूते कथयति प्रसन्नो धरानयकः सिंहश्रेष्ठिवदनकमले निहितनयनद्वन्द्व उवाच । हे बन्धो ! आवयोः कश्चिद्भेदो न, अमुं तनयमादाय नागपुरं याहि ! अयं सम्बन्धश्च क्रियताम् ! । अस्माद् भयङ्करदनर्थदण्डाद् भीतः कृतज्ञः स सिंहः किञ्चिदधोवदनो भूभुजः प्रत्युत्तरं न दत्तवान् । ततः किञ्चित्क्रोधकमलनयनः पृथिवीशक्रो व्याजहार-हे मित्र ! अयं सम्बन्धः किं साधुर्न यदुत्तरं न ददासि ? । अथ राजानं क्रोधलेशलाञ्छनं पश्यन् सिंहश्रेष्ठी सुधामधुरां वचनकलां कलयामास । योजनशतादूर्ध्वं न गच्छामि,इति मदीयं व्रतं वर्त्तते, नागपुरं नगरं त्वस्मात् साग्रं योजनशतमस्ति । तद्व्रतनाशभयोऽहमस्मिन् परिणये न गच्छामि तथा चैवं विधेषु कृत्येषु मादृशा न दिश्यन्ते । इति वचनमार्गहोमेन ज्वलत्क्रोधमहावह्निः स राजा तच्छिखासमूहसन्तप्तामिव वाणीमुवाच-यत्र मम यातुं युक्तं स्यात् तत्र मया त्वं निदिश्यते,

रिग्रहो यदि धर्ममगुं भजे तदन्तःशत्रुविनाशेऽप्ययमुद्यमी भवति। इति विचिन्त्य विद्यापतिः शृङ्गारसुन्दरीगर्भसमुत्पन्नं शृङ्गारसेननामानं तनयं निजे स्थाने स्थापयामास। स्वयं संयमसूरिनाम्नामाचार्याणामग्रे व्रतमङ्गीकृत्य तपोवह्निना कल्याणमयमात्मानं निर्मलं व्यधात्। ततो विद्यापतिमुनिः सम्पूर्णायुर्देवलोकमगच्छत्। पञ्चभिर्मनुष्यदेवजन्मभिः परमं पदं (मोक्षं) लेभे। तद्विद्यापतिनिदर्शनज्ञाननिश्चलमानसैर्धर्मेच्छुभिर्भव्यलोकैर्मितपरिग्रहैर्भवितव्यम्।

## ॥ इति परिग्रहप्रमाणव्रतविचारे विद्यापतिकथा ॥

पुनर्दशदिक्कृतसंचारे सीमानुलङ्घनं प्रथमं दिग्विरतिनामकं गुणव्रतं प्रथयन्ति। पापगजदुरुत्थानपातसंवर्तगर्त्तिका धर्मपृथिवीनाथसुवर्णासनमिदं व्रतं राजति। इदं दिग्विरतिव्रतं धर्मपुष्पस्योच्चैर्वृक्षो यदधिरूढानां मनुष्याणां पापश्वापदाद् भयं न भवति। दिग्विरतिव्रती यः पुमान् स्वं गतौ सङ्कोचयत्येव स नरः सिंहश्रेष्ठीव संसारलङ्घनवरफलप्रारम्भो भवति। तथाहि—

अथ नगरविस्तारेषु सर्वश्रेष्ठा वासन्तीति प्रसिद्धा नगरी वर्त्तते, आश्चर्यमिदं यदियं पुरी सरलगुणवद्भिः पुम्भिः पूर्णास्ति। तस्यां पुरि कीर्त्तिपालनामा राजा बभूव, यस्य कीर्तिकन्याक्रीडासु गगनाङ्कोऽपि संकटो बभूव। तस्य भूभुजो रूपशोभास्पर्शसंलुब्धैरिव सकलैर्गुणैरन्वितः श्रीमान् भीमनामा तनयो रराज। तस्मान्नन्दनादपि निजेभ्यः प्राणेभ्योऽपि महाप्रियस्तत्र पृथिवीवल्लभस्य सिंहनामा श्रेष्ठिवर्यः सुहृदभूत्। जिनेश्वरभक्तिर्जैनशासनज्ञानं जैनधर्माचरणमिति सारभूतं भूषणत्रयं स नित्यं धारयामास। तच्छ्रेष्ठीमुखनिहितलोचनं चारुपरिषदं तं भूभुजं कदापि प्रतीहारिश्रेष्ठो निवेदयामास। हे स्वामिन्! मनोहराकारो भवदाननकमले

सन्निवाः प्रणम्य पादपोपगमव्रतस्थितौ सततांकाशभ्रमणित्रौ सूर्याचन्द्रमसाविव कञ्चित्पर्वततले मुप्तौ तौ दृष्ट्वा वैलक्ष्यमलिनवदनाः सन्निवाः प्रणम्य श्लाघासमूहमयं वचनं जगदुः। हे स्वामिनौ! अस्माकं मकन्दुवननविपुलीकृतोऽपराधः सोढव्यः, शीघ्रमुत्तिष्ठतम्, नागपुरं गच्छामः। इदं समाचारं ज्ञात्वा राजा कुप्यन् यन्त्रे तिलानिव दुःखकृष्णशरीरान् सवंशानस्मान् घातयिष्यति। तद्दयासागरौ युवां दयां कृत्वाऽस्मान् कृपामाद्राभिर्दृष्टिभिः पश्यतं तथा हास्यक्षालिताधरैर्वदनैर्वदतम्। अथेत्यादिश्लाघावचनवादिभिर्मन्त्रिभिर्व्यर्थीभूय शीघ्रं सवेगैर्दूतैः स नृपस्तत्स्वरूपं ज्ञापितः। वत्सौ नन्दनः परिणेयः सिंहस्तु शत्रुवद् वध्यः, इति क्रोधं कुर्वन् महीधवोऽपि महावेगवद्भिर्नगयर्यौ। इद्धविरुद्धमतिः स भूपो व्याघ्रगजकेसरिप्रमुखजीवैः सेव्यमानचरणौ तौ महायती विलोकितवान्। माहात्म्यशालिनाविमौ बलात् तिरस्कर्तुं नाहं भर्त्तैव च वान्यावििति हृदि विचारयन् भूभर्त्ता तौ जग्मिवान्। व्याघ्रादिभिर्दत्तवर्त्मानं दर्शनानि मार्गन्तं प्रणमन्तं श्लाघानादिनं च तं तौ मुनी न ददृशतुः। पुनश्च मासोपवासान्ते देवदानवैः स्तूयमानौ तौ निर्मलध्यानाभीनां मुक्तिकामिनीमसेवताम्। योजनशतादूर्ध्वं न गच्छामीति तावकीनो निश्चयः, हे मित्र! असंख्यैर्योजनैर्मां त्यक्त्वा किं त्वं निर्वाणं गतोऽसि?। इति क्रन्दन् महीपतिः सिंहनाम्नः सुहृदो निजसुतस्य च शरीर वह्नावात्मानं च शोकाग्नौ चिक्षेप। ततस्तयोः पराक्रमातिशयकथनेन सुमनोभिर्बोधितो धर्मकर्मण्यमतिर्महीवासवो निजनगरमगच्छत्। यः सिंहः कामं स्वप्राणान् मुमोच, किन्तु गृहीतं व्रतं न तत्याज स सिंह इव हे भव्याः! दिग्विरतिनामव्रतेऽनुरागं कुरुध्वम्!।

॥ इति दिग्विरतिविचारे सिंहश्रेष्ठिकथा ॥

तदपि कृत्यं तवाकार्यं तद् भोः! त्वं तु कोऽपि महाराजाधिराजोऽसि!। योजनशतादूर्ध्वं न गच्छामीति तव व्रतमस्ति, ततस्त्वां दासेरिकैः सहस्राद्योजनेभ्यः पुरस्त्यक्ष्यामि। अथ कोपेनाकारगोपनपूर्वकं कृतहास्यः सिंहस्तच्छ्रुत्वा विचक्षणः प्रत्युत्पन्नमतिः स भूभुजः पुरोऽवदत्। हे स्वामिन्! तव विरहमसहिष्णुरहङ्काररहितोऽहमेवमुत्तराण्यकरवम्, भवदादेशस्तु शिरोमणिरस्ति। अथ तद्वचनेन प्रसन्नो राजा परिणयाय महाकटकमहासचिवमहावीरसहितं नन्दनमत्रोचत्। पृथग्भूतमात्मानमिव मानसवल्लभं मित्रं सिंहश्रेष्ठिनं राजा सकलकार्यगुरुं चकार। ततः कृतप्रयाणः सिंहश्रेष्ठी रहस्यसंवेगवचनसमूहै राजकुमारस्य संसारनिवासवासनां त्रोटयाञ्चकार। अथ प्रकटमोक्षकामिनीलोभः शोभमानः सः पृथिवीपतितनयस्ता लक्ष्मीस्तृणवद्गणयामास। विहितछद्मोत्तरो दिग्विरतिव्रतस्थितः स वणिम् योजनशतादूर्ध्वं न प्रयाणं चकार। अथ प्रयाणविरामात् पञ्चपेषु वासरेषु गतेपु सस्मितवचसो मन्त्रिण एकान्ते राजपुत्रमवोचन्। यदि कुत्रापि विधिव्याजात् सिंहो यात्रां प्रतिषेधति तद्बलादपि कार्यं कुर्वन्तो यूयं नापराधभाज इति प्रयाणकाले महीपतिर्गुप्तमस्मान्छिक्षयामास, तत्साम्प्रतं तं सिंहं बध्वापि वयं नागपुरं कथं न गच्छामः। इति कथितवचनान् मन्त्रिणो राजकुमार उवाच–इदं कार्यं श्वो विधेयं यदि यात्राऽद्य न निर्णीयते। अथ रहसि मेदिनीजानितनयो धर्मकलागुरोः सिंहस्याग्रे तद्धृदयविप्रियं वचनं जगाद। ततो धर्मसागरामृतधामा प्रारब्धभवशमनो महाबुद्धिः स सिंहो राजपुत्रमुवाच–इदं मम शरीरमपि नेति कथयित्वा प्रतिलेखिते क्षितितले निश्चलावयवसमूहो वृक्ष इव क्वचित् पवित्रे विपिनोद्देशे पादपोपगमाभिधानं व्रतं स्वीकरिष्यामि तत्ते बद्ध्वा मम किं प्रापयिष्यन्ति?। इति कथयित्वा केसरीव स सिंहः रात्रौ वनं जगाम। त्वमेव मम गतिरिति वदन्नृपनन्दनोऽपि तमन्वगच्छत्। ततो रात्र्यन्ते शय्यादिषु तावनवलोकयन्तः सचिवाः पदश्रेण्यनुसारेण विपुलतरामुर्विं. जग्मुः। उररीकृतयतिवेषौ

मिर्दैवज्ञानामुपहासकारी ममयोऽनया वृष्ट्यैव निष्पन्न इति लोकोऽवदत्। अथ वसुधां कृतार्थां विधाय जनस्तुतिभयादिवैष मेघः क्वापि ययौ, महतामेवैव गतिः। ततो दूरीभूतचिन्तासन्तापं पृथिवीनाथं परे दिवसे करमिलन्मस्तकः कान्ताररक्षक आगत्य न्यवेदयत्। तवागमे चतुर्मासव्रतं विस्तार्य स्थिरव्रतो युगन्धराख्यस्य यतेर्विशदं केवलज्ञानमद्य समुत्पन्नम्। अथोद्यानपालं विपुलैः पारितोषिकैरपूर्यापरिमितपुण्यो विचक्षणोऽयं भूप उद्यानायागच्छत्। स तं मुनिं त्रिः प्रदक्षिणीकृत्य प्रणम्य च बद्धाञ्जलिः श्रेष्ठधर्मं देशनामपृच्छत्। हे प्रभो! तेषां दैवज्ञानामवृष्टिविषयं वचनं कथमुर्व्यामन्यथाऽभूत्? अथ स केवलज्ञानी बभाषे। ग्रहयोगेन द्वादशवार्षिकं दुर्भिक्षं भवद्येन कारणेन न बभूव तत् तेषां ज्योतिर्विदामप्रत्यक्षमस्ति। पुरिमतालाभिधे नगरे प्रवरनामा मनुष्यो बभूव, स तरुणोऽपि निजकर्मवशान्महागदैः पीडितोऽभवत्। सरसास्वादचञ्चलजिह्वारसः प्रवरो यं यं स्वादुमयमाहारमश्नाति स स आहारस्तस्य विकारमकरोत्। अथ सोऽचिन्तयत्, देहाहितकर्त्ता य आहारोऽस्ति तस्य प्रत्याख्यानादनाहारफलं किं न स्वीकरोमि?। शृङ्गारसङ्कोचितनयनाः प्रमदा मां न सेवन्ते तत् तास्तिरस्कृत्य साक्षान्मनुष्यत्वफलं नाङ्गीकरोमि?। इति निर्मलीकृतवृद्धिर्बुद्धिमतां वरेण्य एष गुणोपाध्यायान् गुरून् साक्षीकृत्येदमुवाच। ऊनजठरव्रतोऽहं स्निग्धाम्लमधुरक्षाराणि भोजनानि नाद्मि किन्तु कटुतिक्तकषायानि गृह्णामि। यदासक्तान् मनुष्यान् मुक्तिरीर्ष्ययेव पश्यत्यपि ताः संसारसागरस्याधिदेवताः प्रमदाः प्रत्याख्यामि। इत्यादृतं व्रतं गोपायन् पराक्रमविशालोऽयं क्रमशो रोगैरमोचि। पुण्यस्यासाधनीयं किम्?। तद् व्रतमत्यजन् नीरोगतां प्राप्तोऽपि स विपुलानां विभूतीनामपि क्रमेण स्वामी बभूव। तस्य सद्मनि मदननृत्यशोभमाननयना दास्यः स्वल्पविभूतिकं नाकलोकं त्यक्त्वाऽऽगता नाकवारवनिता इव शुशुभिरे। सत्संयमगुणहृदयावष्टम्भस्तम्भयन्त्रितस्तस्येन्द्रियसमूहो विषयैस्तैराक्रष्टुं न

यद्भोग्यमुपभोग्यं च परिमाणत्वेन गृह्यते तद्भोगोपभोगमाननामकं द्वितीयं गुणव्रतं ज्ञेयम्। पुण्यलक्ष्मीनिवासैककमलं तत्सप्तमं व्रतमत्र परत्र च सज्जनान् सुगन्धीकुरुत इत्याश्चर्यम्। विचक्षणो मितीभूतभोजनो जनः सप्तमव्रतक्रीडया सञ्चितेनापि कर्मरोगेण धर्मनृप इव त्यज्यते। तथाहि---

अस्ति विद्यासु साहित्यमिव सिद्धं तेजस्वि पुरीषु महालक्ष्मीकं श्रीकमलं नाम नगरम्। तत्र नगरे नृपचन्द्रः सत्यनामा भूपशिरोमणिर्बभूव, यस्य निस्त्रिंशः कालनिशाया दर्पण इव शत्रुभिर्व्यलोकि। स महीपुरन्दरो निखिलैः कलाभाजनैः क्षात्रैरिव गुणैरन्वितः कस्य कस्य प्रणम्यत्वं न जगाम ?। अथ कदाचिद्दैवज्ञवर्या, 'हे राजन्! द्वादशवार्षिकं दुर्भिक्षं वसुधायां सम्भावी'ति तस्य भूभुजोऽग्रे जगदुः। एषां ज्योतिर्विदां वचनं सर्वथाऽन्यथा नेति राजा तेन वचनेन वायुना तृणमिवाकम्पत। ततो राजतसुवर्णरत्नप्रमुखधनव्ययतः स राजा धान्यानां तृणानां च भूरि संग्रहं व्यधात्। अथ कणसंग्रहव्यापृते सकले लोके समन्ततो देशस्य मध्ये कापि दुर्भिक्षचारिणी प्रविवेश। कणसंग्रहविक्रीतसकलालङ्कारो लोकः फाल्गुने पतितपलाशराजिवृक्षसमूह इव शुशुभे। धान्यरहिता धनरहिताश्च काश्चिन्मम प्रजाः शुचा क्व गमिष्यन्तीति प्राजापत्येन त्रपितो महीशोऽविचारयत्। इति सततं दीप्तचिन्तातप्तस्य क्षितिनायकस्यानन्दायाषाढस्य प्रथम एव दिवसे प्रथमो वायुर्ववौ। अथ प्रसन्नेन धराधवेन सुभिक्षफलतरोरङ्कुर इव पूर्वदिशि नीरदस्य लेशो व्यलोकि। उदयमानभाग्यसमूहस्य लक्ष्मीरिव स मेघलवो भूपतिहर्षेण सहातिमात्रमैधिष्ट। अथ वृष्टिनिरोधग्रहान् सौदामिन्यङ्गुल्या तर्जयन्निव बकपङ्क्तिरदनैर्दैवज्ञानां वचनानि हसन्निव विलोकनादेव दुर्भिक्षं शत्रुं भुक्त्वा गर्जन्निव धारामुशलसम्पातैः क्षितिदुःखं शकलीकुर्वन्निव समुद्रयुगलनीराकर्षनालयन्त्रतुल्यचापः स मेघः प्रजानन्दोत्कर्षाश्रुमेघं ववर्ष। परस्परहस्ततालि-

नयनाः सकलाः पवित्रा नन्दिन्यो नद्यो वारिधिमिव तमाययुः। निखिलपृथिवीगोलचक्रदादेशो गुरुभक्तिमान् धार्मिकः स धर्मः कर्माण्यगंनिन्यभङ्गुरान् भोगान् भुक्तवान्। भुक्तभोगो निर्मलं योगबलमाश्रितः समुत्पन्नकेवलज्ञानप्रभावस्त्वसौ मुक्तिमलभत। इति धन्यस्य धर्मस्य भवद्वयोदाहरणाज्जितसमृद्धिसम्पातैर्भवद्भिः सप्तमं व्रतं सेवनीयम्।

## ॥ इति भोगोपभोगव्रतविचारे धर्मनृपकथा ॥

रौद्रार्तबुद्धि–शस्त्रदान–पापशिक्षा–प्रमादिता अनर्थदण्डस्तत्त्यागः सप्तमं गुणव्रतं भवेत्। अनर्थदण्डविरतिव्रतधारिणः शुभसमूहतेजस्विनो जनाः सुरसेनवन्महोदयं प्राप्नुवन्ति। तथाहि—

गुणचन्द्रोद्यद्ध्यान्धैः पद्मपदैर्वारिचारं गीतगुणगणा लक्ष्मीपूर्णा मन्धुरा नाम नगरी वर्त्तते। तस्यां नगर्यां प्रचण्डभटसेनाशेखरः पावनः सदाचारनिर्मलः श्रीवीरसेनाख्यो वसुधापतिर्बभूव। तस्य भूभर्त्तुरन्तःशत्रुघातेषु धर्मकाण्डाद्भुतौ सुरसेन–महासेननामानौ शुभौ तनयौ बभूवतुः। तयो रूपे साहचर्यं चोपमानोपमेयत्वं नामाभिधेयत्वं लोकैर्व्यचार्यत। धर्मस्य शुभदर्शनेषु नयने मोहादिमर्दने करौ मनस्विनेषु च पादौ तौ कुमारौ शुशुभाते। अथैकदा महासेनस्य जिह्वायामकस्मादाश्चर्यकरो दुःसहो महान् शोथः समुत्पन्नोऽभूत्। भिषग्वरा रोगशान्त्यर्थं यद्यदौषधं चक्रुस्तेन तेनापि स रसज्ञाश्वयथुर्लोभ इवैधिष्टैव। अस्य धर्म एवौषधमुचितमिति कथयन्तो भिषग्वरास्ततस्तं महासेनं निर्धनं जारं वारवनिता इव तत्यजुः। अथ क्रमेण राजकुमारस्य कुथिता जिह्वा मक्षिकाणां दुर्निवारयगालयत्वमाजगाम। प्रचण्डदुर्गन्धस्थानमसौ महासेनः स्वीजननीजनैरपि पथिकैः श्वपचपाटक इव दूरतो-

सप्तमो भागः ॥२८९॥

समर्थो बभूव। तस्य यन्निरन्तरं धनं वर्त्मकोटीभिराजगाम तत्सुपात्रकृपौचित्यदानवर्त्मत्रयेण जगाम। अथैकदा, अन्नार्थयुद्धव्याकुलपितृमातृतनयोद्धतं निःस्वदुरालोकं दुर्भिक्षं पृथिव्यां समभूत्। दानिनां दानैर्विलीनं तद्दानं तत्समय ऐधिष्ट, ग्रीष्मर्त्तौ तडागजलं शुष्येत, समुद्रस्तूत्तरङ्गः स्यात्। दुर्भिक्षभयवद्भिर्भुवनलोकैः संसारभीरुभिः सर्वज्ञदिष्टो धर्म इव समन्ततः स एवैकः प्रवरः सेवितः। विपुलैः पेयपक्वान्नदधिदुग्धसर्पिःप्रमुखैः स प्रवरो दिगन्तसमागतॉल्लक्षशो मुनीन् प्रत्यलाभयत्। स प्रवरो वयःक्रमेण श्राद्धान् पितृभ्रातृतनयीकृत्य प्रतिदिनं सदन एवोच्चैरसंख्यकांस्तानभोजयत्। इत्यखण्डव्रतो वरस्तुतिर्दानैकव्यसनवान् प्रवरः कालयोगात् स्वर्गं जगाम। शाश्वततीर्थङ्करमहायात्रानित्यविशदधर्मबुद्धिः पूर्णायुः पुरन्दरोपगमः स देवो विचारयामास। पृथिव्यां यो युगप्रधानः श्रावकोऽस्ति तत्तनयः भूयासं, किन्तु सार्वभौमोऽपि मलिने वंशे माभूवम्। इतश्च चित्रशालाभिधाने त्वत्पुरोपपुरेनगरे विमलादेव्याः स्वान्तकान्तः शुद्धबुद्धिनामा श्रावको वर्त्तते। द्वादशव्रतनिष्कपटरक्षणनिर्मलजीवितो य ईदृक्षदुर्भिक्षवचनेनापि कणसंग्रहं नाकरोत्। सुस्वप्नसूचितः स देवस्तस्य कान्ताजठरं प्राप्तवान्। सापि सती विमला ह्यस्तने वस्त्रे पवित्रं नन्दनमजीजनत्। महाभाग्यशालिनस्तस्य जननं दुष्टग्रहाञ्छीघ्रं जित्वा भुवि द्वादशवार्षिकं दुर्भिक्षं दूरीचकार। इति निशम्याश्चर्यप्रसन्नः स राजा केवलज्ञानिनं तं मुनिं प्रणिपत्य शीघ्रं तत्र गत्वा तं शिशुं शिरसि न्यस्येदं बभाषे–हे दुर्भिक्षमज्जल्लोकोद्धरणकुशल! तुभ्यं नमोऽस्तु, मम राज्ये त्वमेव भूपोऽसि, तथाहं तवैव तलारक्षोऽस्मि। इत्थमयं शरीरी धर्म इव दुर्भिक्षनाशकारकोऽस्तीति महीपतिस्तस्य "धर्म" इति नाम चकार। इतरेऽपि राजानो दूतैरिति ज्ञात्वा निजनिजवसुधासु धर्मादेशं वर्त्तयित्वा शीघ्रं बलाहकान् वर्षयामासुः। वयःसमययोग्यैराश्चर्यमयैः सकलभूपानामुपाहारैरखिन्नहर्षसन्दोहः स बालः समैधिष्ट। सकलमहीवासवानां पञ्च-

व्यग्रमानसे धीरे पृच्छति; एकोऽश्रुत्यागी पुरुषस्तत्र व्याजहार। एको दुष्टफणी प्रतिमास्थमिमं यतिं दष्ट्वा दुर्गे राजापराधकारीवास्मिन् महाबिले प्रविष्टः। अथ मातुलमोहेन कोपेन वीर उवाच–रे रङ्काः! असौ पापी सर्पो नश्यन् कथं न हि हतः?। ततो धीरः फणिनि कर्मतो जीवति गते च जगाद। हहा! महात्मन्! किं व्यर्थं रसज्ञया पापं बध्नासि?। अथ वीरोऽप्यवादीत्–दष्टमहायतौ दुष्टे तस्मिन् हतेऽपि धर्मः स्यात्, हतिवचनेन पातकं क्व स्यात्?। अयं हि साधुरक्षणे दुष्टनिग्रहे च क्षत्रियाणां धर्मः "क्षतात् त्रायते" इति क्षत्रशब्दस्य रूढत्वात्। यदीदमसत्यं स्यात् तदा पातकं मम रसनां यातु!। पुनरपारदयारसो धीरस्तस्य वचनं विचारयन् मणिमन्त्रौषधीप्रभावान्मुनिराजं जीवयामास। ततो मुनिराजप्राणदानान्महाहर्षस्य प्रशस्तां प्रीतिं धारयन्तौ सकललोकनुतौ शुभं धर्मं रचन्तौ पातकं च ज्वालयन्तौ यशसा चात्मानं सुचिरं क्षालयन्तौ तौ भटस्यैतौ तनयौ प्रीतौ बभूवतुः। अथ क्रमेण पूर्णायुर्धीरो भवान् सुरसेनोऽभूत्, अविचारिततादृशवचनो वीरस्तवानुजो बभूव च। निर्मलौषधीज्ञानां सकलवैद्यानामसाध्योऽस्य रसनारोगः फणिप्रहारवचनपातकादुत्पन्नः। मुनिप्राणदानादेव प्राप्तरोगविनाशप्राप्तिना त्वया महासेनस्य स रसज्ञारोगो दूरी कृतः। इति निजवृत्तान्तं विदित्वा समुत्पन्नजातिस्मरणौ संसारपीडितौ सुरसेनमहासेनौ व्रतमसेवताम्। अथ लतावद्व्रतं मनोहरचारित्रपीयूषैः सिक्त्वा धर्मकुसुमोत्पन्नं मुक्तिफलं समयाञ्चेभिरे। हे जनाः! अमुना सुरसेनमहासेननिदर्शनेन कष्टसमूहकारणमनर्थदण्डाख्यं दूरतस्त्यजत॥

॥ इत्यनर्थदण्डव्रतविचारे सुरसेनमहासेन कथा॥

ऽत्याजि। तं तथाविधमालोक्य बन्धुप्रेमाधीनः सुरसेनकुमारो दुःसहं दुर्गन्धं विजित्य समीपस्थितो यावदसौ गदोऽस्ति तावन्न किञ्चिद्भक्षयामि यद्यसौ भ्राता मृत्युं प्राप्स्यति तदान्नत्यागादहमपि म्रिय इति विचिन्त्य बन्धोरग्रे दृढनिश्चयो वस्त्रप्रान्तेन वदनपातिनीर्मक्षिका वीजयन्नसौ न्यविशत। असौ सुरसेनो नमस्कारनाममन्त्रेण प्रासुकं जलमभिमन्त्र्य वारंवारं तं स्मारयंश्च रसज्ञां सिषेच। यथा बुभुक्षापीडितस्य ग्रासे ग्रासे क्षुधाशान्तिस्तथा सेके तस्य क्रमशो रोगशान्तिर्विशेषं समभूत्। क्षणाद्रोगरहितं व्रणहीनं दुर्गन्धमुक्तं सुगन्धि च तदाननमभूत्। अहो! धर्मः क्व न माहात्म्यशाली?। यो रोगो वैद्यवर्गेण निर्भरं त्यक्तः स धर्मेणास्तोऽभूत्, सूर्यच्छेद्यं ध्वान्तं दूरीकर्त्तुं खद्योताः किल क्व समर्थाः स्युः?। राहुत्यक्तं सूर्यमिव पूर्वलब्धकान्तिच्छटं रोगरहितं तं महासेनं दृष्ट्वा सकलोऽपि जनः सोत्सवो बभूव। ततो विशेषतोऽत्युच्चैर्धर्मभारे तौ भ्रातरौ शरदर्त्तौ सूर्याचन्द्रमसाविव शोभमानौ बभूवतुः। अथ कदाचिदवधिज्ञानवान् श्रीभद्रबाहुनामाचार्यवर्यस्तन्नगरारामं गगनं चन्द्र इवाशोभयत्। तौ भ्रातरौ प्रदक्षिणात्रयेण तमुपप्रेमतुर्ववन्दाते च, तथोपविश्य धर्मदेशनां पीतवन्तौ च। ततः पीतसुरसधर्मदेशनापीयूषः सुरसेनो धर्माचार्यं गुरुं बन्धुजिह्वाव्याधिकारणं पप्रच्छ, स च गुरुः प्रवचनक्षीरसागरकल्लोलसदृशं संसारदवोत्पन्नदुःखहरं वचनं बभाषे।

अथ पृथिवीभूषणभूतमाकारितवासवनगरकान्ति भुवनप्रसिद्धं मणिपुरं नाम नगरमस्ति। तत्र पुरे मलिनीकृतशत्रुमुखो भगवद्धर्मामृतसागरहिमांशुर्मदनो नाम भटोऽजायत। सदृशाकारौ सदृशशक्तिमन्तौ सदृशार्थौ सदृशमहसौ च धीर–वीरनामानौ तस्य नन्दनौ बाहू इव बभूवतुः। जिनप्रवचनस्वादहर्षामन्दपीयूषरसौ तौ धीर–वीरौ संसारसर्पजया मोहगरलमूर्च्छया न ग्रस्तौ बभूवतुः। अथ कदाचिदेतौ निजारामे गतौ, तत्र पुरुषैरन्वितं भूमौ पतितं वसन्तनामानं निजमातुलं यतिमपश्यताम्। अथैतत्किमभूत्किमभूदिति

नगरपालको गत्वा नमगा स्वनिलयं जगाम। भूपाय मां तस्करं निवेद्य त्वं नगरान्निष्काशय इति कथयित्वासौ दण्डैः स्वजनकं भृशं ताडयामास। ततः प्राप्तमरणं जनकं मुक्त्वा स महासमृद्धिवन्ति गृहाणि प्राविशत्, बहुमूल्यं च वस्तुसमूहमचूचुरत्। भूयो निशायाश्चरमे प्रहरे स केशरी दुर्गमकान्तारभूषणं तदेव तडागं त्वरितं समाजगाम। इत्यत्यन्तनिर्दयस्तास्कर्यलसद्रसो नानाविधलुण्टनोऽयं केशरी तदेव पुरं गत्वाऽलुण्टत्। पापवति मुनिमतीप्रमुखं जनं सन्तापयति तत्र राज्यागमो यमराजागम इव भयायाभवत्। अथ तत्स्वरूपं विज्ञाय खिन्नमानसेन भूभुजा परिपृष्टो नगरपालो वैलक्ष्याधोवदन उवाच। हे राजन्! कोऽपि गगनमार्गगः सदा नगरमिदं मथ्नाति, यत्नमुधायां क्वापि तस्करपादन्यासो न चालभ्यत। ततश्चिन्तातुरः पृथिवीजानिः क्रोधसन्तप्तं नयनयुगलं नगरीशाट्याश्चुषु निमज्जयंस्तपस्वितपःप्रभावाच्छीलवतीशीलानुभावाच्च तत्कष्टसोद्यमः स तस्करोऽद्य मम गोचरो भवतु! इति गदित्वा स्वल्पपरिच्छदोऽयं भूपः प्रतिसभास्थानं प्रतिद्यूतागारं प्रतिदेवमन्दिरं च नगरीमद्राक्षीत्। क्वचित् किञ्चिदपि तस्करलाञ्छनमपश्यन्नतिचिन्तातुरो भूपो नगरीसामीप्यभूमिमगच्छत्। वापीकूपतडागप्रमुखेषु पदेषु निरूपयन्नपि महीधवः क्वापि तस्करसञ्चारलाञ्छनं नालभत। अथ मध्यदिवसे विपिनमध्यभूमौ स्थितस्य पृथिवीपतेर्नासिकायां कर्पूरागुरुधूपजन्मा गन्ध आसादयत्। तद्गन्धानुगमनेन गच्छन्राजा चण्डिकामन्दिरमाजगाम, तत्र चम्पकादिपुष्पपूजितां चण्डिकामद्राक्षीत्। ततस्तादृशधूपनं विहाय श्रेष्ठरागतः पूजाकरो बद्धाञ्जली राजानं समाययौ। राजोवाच-अद्य केन महेन केन जनेनेदृक् चण्डिकापूजा कारिता? कान्तितिरस्कृतामितुतेजांसि वस्त्राणि तुभ्यं केन दत्तानि?। ततः पूजाकारी व्याजहार--हे प्रभो! दरिद्रवंशस्य मम भक्त्याऽद्य चण्डिका प्रीता बभूव। प्रभाते यदा पूजायै समागच्छामि तदा सततं चण्डिकायाश्चरणपुरोवर्त्तीनि रत्नानि सुवर्णानि च प्राप्नोमि। तदेवं

अथोत्तमध्यानवतामपापकारिणां पुंसां हृदये यन्मौहूर्त्तिकं साम्यं तत् सामयिकाभिधानं प्रथमं शिक्षाव्रतं ज्ञातव्यम्। पुनर्मुनिधर्मलक्ष्मीनृत्यक्रीडनभूमिका सामयिकं व्रतं पापकल्लोलविरत्यै राजते। मोक्षलक्ष्मीममत्वप्रारम्भः सादृश्याभ्यासरङ्गभूमिः कृपारससागरवीचिराद्यं शिक्षाव्रतं कथितमस्ति। सामयिकव्रतवान् मनुष्यः क्रूराचारोऽपि केशरी चौर इव त्रुटत्कर्मस्रगाशु भवकारागारतो मुच्यते। तथाहि—

कामपुरनामके नगरे रिपुजनफणिमयूरः क्षीणजनजुगुप्सो विजयो नाम धार्मिको राजा बभूव। अथ कदाचित् सिंहदत्तनामा वणिक् तं भूपं प्रणम्येति जगाद–हे स्वामिन्! केशरी नाम मामकस्तनयस्तस्करकार्यासक्तो जातः। अथ 'यदि मम भुवि स्थास्यसि तन्मम वध्य एव स्या' इति धराधवः केशरिणं स्वदेशान्निष्कासयामास। राजभयाक्रान्तः सोऽपि केशरी देशान्तरं गच्छन् परिश्रान्तो विपिने क्वापि निर्मलस्वादुजलं सरो ददर्श। शक्तिपूर्वकमचौर्याहृतं जलमपि मया न पीतमहो! अद्य तदपि कर्त्तव्यं, दैवविपर्ययं धिग्धिक्! इति विचारयन् खिन्नोऽयं तस्करस्तत्र वनतडागे जलपानं व्यधादधिकं च स्नानं चकार। ततो दूरीभूतश्रमः स निर्गत्य क्षुधाव्याकुलः सरःकोणस्थितं फलच्युततरं रसालवृक्षमारुरोह। ततः फलैः सन्तुष्ट उन्मत्तः स इति चिन्तां चकार–हहा! किं तास्कर्यमन्तराद्य मम दिवसो गमिष्यति?। इति चिन्तयति तस्मिन् मन्त्रसाधितपादुकः कोऽपि योगिराजो गगनात् तत्र सरःकूल उत्ततार। आकाशगमनसामीप्यसूर्यातपतापितः स योगीश्वरः ककुप्सु दृष्टिं दत्वा पादुके त्यक्त्वा जले प्रविवेश। जानाम्यहं, यदस्येदं पादुकाद्वयं गगनगमनसमर्थं यदसाविहैतत् त्यक्त्वा चरणाभ्यामेव नीरे प्रविवेश तदेतन्मुष्णामीति विचार्य शीघ्रं वृक्षादुत्तीर्य पादुके चरणयोः क्षिप्त्वा तस्करः स नभोमार्गेण जगाम। ततः स चिन्ताव्याकुलसमयं वासरं क्वापि निर्गम्य धृत-

यान् मलीधवम्तं हन्तुमनुदधावेतत्र दत्तव्रतसमूहः सुरसमुदायो वन्दितुमाजगाम। अथ केशरिणि देवै रचितं हैमकमलं निषण्णे ते गजादयो हन्तारोऽपि प्रणामकरा अभूवन्। दशनकिरणैरिन्दुतेजसां सुसमयं विदधन् स यतिराजः पापान्धकारस्य पूर्णिमोपमां धर्मदेशनां चकार। ततो हे प्रभो! तव तच्चरित्रं क? क चायं केवलज्ञानप्रादुर्भावः? इति क्षोणीनायकेन पृष्टः स केवली व्याजहार। हे राजन्! जन्मपर्यन्तं तादृशपापकारिणोऽपि मम यतिवचनप्राप्तसामयिकचित्तलीनत्वादियं ज्ञानलक्ष्मीरुत्पन्ना। यत्कर्म जन्मरकोटितपसामप्यच्छेद्यं तदप्यहो! मनःसमतया क्षणादेव निर्मूलं छिद्यते। इत्याकर्ण्य प्रीतमना धराजानिः पुरीं ययौ, स यतिराजोऽपि पृथिवीं बोधयन् विजहार। जनकघातके सकललोकसन्तापप्रदे तस्करेऽपि दत्तमोक्षं सामयिकाख्यं व्रतं विचक्षणैः सेवनीयम्।

## ॥ इति सामयिकव्रतविचारे केशरिकथा ॥

दिग्व्रते निरन्तरं यः प्रमाणसंक्षेपो विधीयते तदिदं देशावकाशिकनामकं द्वितीयं शिक्षाव्रतं मतम्। विचक्षणः श्रद्धया यावद्देशावकाशिकं व्रतं कुरुते तदन्यत्र प्राणिनां तेन तदाऽभयदानमर्पितं भवेत्। एतद्व्रतमाहात्म्यात् सुमित्रस्येव निर्मलमनसामत्रलोकेऽन्तराया दूरी भवन्ति परत्र लोके च शुभलक्ष्म्यः प्राप्ता भवन्ति।

अथ पृथिव्यास्तिलकरूपा नगरीश्रेण्यामाद्या धर्मादिचतुर्वर्गशोभापूरितजनपदा चन्द्रिकानाम्नी नगरी वर्त्तते। संग्रामभटश्वासनिर्गमुद्रीनरिपुसमूहस्तारापीडो नाम राजा तां पुरीं महामहेन गोपायाञ्चकार। तस्य राज्ञो यशःपुष्पं समन्ततो जगत्सुगंधिकारी

त्रिसमयं देवीमर्चामि तदनुग्रहोत्थसकललक्ष्मीसमूहश्चाहं कुबेरमपि जयामि। महाबुद्धिमान् स धराधवस्तद्वचनेन रात्रौ तस्करागमं निश्चित्य दिवसकार्यकरणाय स्वनिलयं जगाम। ततो रात्रौ ससत्त्वपरिवारः स राजा चण्डिकामन्दिरं समागतो भटान् दूरे संस्थाप्येह स्वयमेक आस्थितः। ततोऽर्धरात्रे स्तम्भगुप्तशरीरः स महीजानिराकाशादुत्तीर्णं पादुकासिद्धं तं चौरं ददर्श। अथ स वामेन हस्तेन पादुकायुगलं गृहीत्वा गर्भगृहं गत्वा शुभैर्मणिभिश्चण्डिकां पूजयामास उवाच च, निजेच्छागमनकारिणश्चौर्यकर्मणो ममेयं महासम्पत्तिप्रदा रात्रिरानन्दाय स्यात्। इति कथयित्वा वलमानोऽयं द्वारमारुह्य खड्गहस्तेन मेदिनीनाथेन, 'रे! जीवन्न यासि'इति धर्षितः। इति कथयति भूभुजि कालवित् स नृपमस्तकं प्रति पादुकाद्वन्द्वमेव शस्त्रीकृत्य कोपेन तत्याज। तत्प्रहारप्रतारणाकुले राजनि स महाग्राहुरयमहं जीवन्नेव गच्छामीति कथयन्नेवैष निर्जगाम। असौ केशरी तस्करो गच्छतीति राज्ञो वचनेन वीरा भूपादेशेन दूरे नश्यन्तं तं त्वरितमन्वधावन्। चौराणां चौर्यधनभूमिं गन्तुं सचिवाय दृष्टप्रभावं तत्पादुकाद्वयं प्रदाय राजापि वीराननुजगाम। त्वरादूरत्यक्तभटसमूहः स तु चौरो नगरग्रामान्तर्गैर्वर्त्मभिरेव पादुकार्थं जगाम। भयव्याकुलमानसः किञ्चिद्वैराग्यमापन्नः सोऽचिन्तयत्, अद्य नूनं मामकीनं प्रचण्डं पापं फलितम्। ग्रामोद्यानभूमौ क्वापि धर्मदेशनां कुर्वतः कस्यापि यतेर्ध्यानतत्त्वं वचनमिति श्रद्धया स चौरः शुश्राव। सर्वत्र ध्यानसादृश्यरुचिर्लोकोऽन्धकारैः कृतदीपं निकेतनमिव सद्यः पातकैरपि मुच्येत। इति हृदयमर्मनिर्मग्नं वचनं निशामयन् स तस्करः सञ्जातरोमाञ्चं शरीरं वहन्नूर्ध्वस्तत्रैव निश्चलं स्थितः। सारासारसमस्तभुवनप्रणतिगर्हारहितमतिर्दूरीभूतपापततिः स चौरो मध्यस्थतामग्नः स्थितः। अवशिष्टां निशां घस्रं चैष समतालीनस्तथा स्थितो यथा पावने परमात्मनि लयं मानसं स्थिरम्। घातिकर्मनाशे सायन्तने कालेऽस्य केवलज्ञानमुत्पन्नं तत्समये महीपतिरपि सर्वत्र मार्गयंस्तत्रायया। तत इतश्च शूरसमूह-

मनोहरः सचिवाधीशो नमस्कारमन्त्रजपतत्परोऽभवत्। तत्समये युष्मान् विपुलकृत्यत्वेन राजाऽऽकारयतीति भूपालद्वारपाल आगत्य तं न्यवेदयत्। 'प्रातःकालादारभ्य गृहबहिर्गमनप्रत्याख्यानतया स्थितोऽहं प्रभात आगमिष्यामी'ति वदित्वा सचिवो द्वारपालं प्रैषीत्। ततो मन्त्रिवरः पुनः परमेष्ठिनमस्कारामृतसेकविवेकतो मानुषं जन्मवृक्षं सफलमकार्षीत्। पुनः प्रतीहारः समागत्य सचिवचन्द्रमुवाच–युष्मत्कथितनिजादेशभङ्गान्महीपः क्रोधान्धतां ययौ। कपटातिचित्रमतिः स मन्त्री यदि चेदत्र नागच्छति तन्मम सकलैश्वर्यमुद्रा याननीयेति मां प्रैषीत्। इत्याकर्णितवेत्रधारिवचनो मन्त्री हसन् कुलटां सेविकामिव तत्कालं राजमुद्रां प्रैषयत्। कल्याणसागरः सचिवो मुद्रागृहीते प्रतीहारे गृहतो निर्गते राष्ट्रचिन्ताशल्यनाशाद् दृढं धर्मपरोऽभवत्। तदा कौतुकतः प्रतीहारः पाणौ मुद्रिकां परिधाय "अहं सचिवोऽभूव"मिति हसन्निजभटेषु व्याजहार। हे सचिवमौलिमणे! मन्दं मन्दं चरणावधारणं विधेहि इति स्मितवदनैः पुरुषैरन्वितः स गृहादचलत्। तत्समय एव दैवयोगात् प्रकटितखड्गैः कैश्चिद्वीरैराहत्य पातितोऽयं वार्ताशेषत्वं प्रापितः। तदा त्रस्तावशिष्टैस्तस्य वीरैः शत्रवो नाशिताः। ततो द्वारपालो हतो हत इति महान् कोलाहलोऽभूत्। इत्याकर्ण्य कोपाग्निप्रज्वल्यमानः स मेदिनीजानिर्ज्वालामयमनल्पं वचनमुच्चैरुवाच। इदमसाकीनं कार्यं विदधन्नसौ वेत्रधारी नूनं निस्तीर्णकपटस्यानेन तेन सचिवेन नाशितः। यद्यहमेतस्य कपटिनो वृद्धस्य निजकरेण मस्तकं छित्वोच्छालयामि तदैव मम हृदये शान्तिः स्यात्। एवमुच्चैर्वदन् भूभर्ता क्रोधावेशशूरभयङ्करस्तत्राययौ, यत्र ते प्रतीहारनाशकाः प्रहारपीडिता आसन्। एते सचिवसेवका न स्युः केऽपि वैदेशिका इवेति विचिन्त्य भूपतिर्दीपविलोकितांस्तानब्रवीत्। अथ यूयं के? प्रतीहारः कथं हतः? इति पृच्छति क्रोधदष्टाधराः कण्ठायातप्राणास्ते भटा अवोचन्। हे राजन्! अस्मान् किं पृच्छसि? दुराशयं दैवं पृच्छ! येनैवमस्मन्नाथस्य मनोरथो व्यर्थीकृतः।

जिनेश्वरभक्तिवल्लीतरुः सुमित्रनामा सचिव आसीत्। शास्त्रमङ्गलदीपोल्लसिततेजसि बाहुस्तम्भतोरणे यस्य हृदयाख्यनिलये बुद्धिपराक्रमौ लीनावास्ताम्। नूतनयौवनो मेदिनीजानिः पुण्यकर्मपराङ्मुखः कदाचिज्जरावस्थाशोभिनं मन्त्रिनायकं जगाद–हे सचिव! सुरपूजानिजपाणिमहादानधर्मकथाश्रवणादिभिर्धर्मकार्यैः साम्प्रतं व्यर्थं शरीरं किं क्लिश्यते?। अहो! एभिर्निष्फलैर्धर्मकर्मक्लेशैर्भवादृशः कः पुमान् वृद्धावस्थाजीर्णं शरीरमित्थमविरतं भस्मसात्करोति?। इति कथितो हास्यमुखोऽयं सचिवो भूभुजङ्गमुवाच–हे नरदेव! त्वमप्येवमयोग्यतया किं वदसि?। अहं तु त्वां धर्मकार्येषूद्यमं चिकीर्षयामि, हे प्रभो! त्वं तु हा! मामपि तेषु किं प्रतिषेधयसि?। यस्य कृपया निरन्तरायैर्विचक्षणैः स्वर्गापवर्गाणामपि सौख्यं लभ्यते स धर्मः किं निष्फलः स्यात्? अथ क्ष्मापेन मन्त्री भण्यते स्म–हे सचिवेश्वर! विघ्नविनाशत्वेनाथ सम्पत्तिप्रदत्वेन च मम प्रत्यक्षं धर्मभवं फलं दर्शय!। इति कथयन्तं महीवासवं स मन्त्री बभाषे–त्वं स्वाम्यसि, अन्ये च तव सेवका, एतच्च नूनं साक्षाद्धर्मस्य फलमस्ति। ततो भूपः सचिवमुवाच–ग्रावणि द्विशकलीभूते एकेन सोपानं द्वितीयेन तु देवता, तत्तस्यैकदेशेन किं धर्मः कृतः परेण न? निसर्गतो जगतो भव्याभव्यव्यवस्था निष्पन्नास्ति। अथ सचिव उवाच–अत्राजीवः पाषाणो दृष्टान्तं न स्यात्, ततो धार्मिके सति धर्माणां स्थापना सम्भाव्यते। इति गदितो भूपः किञ्चिद्वैलक्ष्यहास्यस्तमब्रवीत्–हे सचिव! त्वया वचनसामर्थ्येनाहं निरुत्तरः कृतः। परन्तु हे सचिवेन्द्र! कुत्रचित् प्रत्यक्षविलोकितेनानुभावेनैव निःसन्देहं धर्मं करिष्यामि नान्यथा। इति तयो राजसचिवयोः सततं संलापः प्रायो जनानां मध्येऽधिकं प्रसिद्धिमधुरोऽभवत्। अथैकदा मन्त्रिवर्यः सकलकार्याणि निर्वर्त्त्य पाक्षिकप्रतिक्रमणं विधातुं सायाहनि निजालयमाययौ। गृहीतदेशावकाशिकव्रतः सत्यप्रतिज्ञो महामन्त्री गृहाद् बहिर्न गच्छामीति प्रत्याख्यानविधिमकरोत्। प्रतिक्रमणे कृते विशदश्रद्धा-

॥ इति देशावकाशिकव्रतविचारे सुमित्रकथा ॥

तत् पौष- ध्यापागणां स्नानादेश्च त्यागो ब्रह्मचर्यरक्षणं तप इदं च पौषधनामकं तृतीयं शिक्षाव्रतं कथयन्ति स्माचार्याः । तत् पौष-
धव्रतं तु कथितशुद्धदीक्षितमुनिवर्जितेन्द्रियैर्दिवानक्तमथाशेषां निशां यावत् परिरक्ष्यते । संसारसर्पगदनाशाय पौषमासवत् पौषध-
व्रतं मित्रानन्दनामसचिवेश्वरस्येव विपत्तापनाशायास्ति । तथाहि–

अस्ति धर्मनिशदमत्यर्थे द्रव्यतेतस्वि मदनचाञ्चल्यमनोहरं पुष्पपुरं नाम नगरम् । तत्र नगरे शत्रुभूपानां संग्रामामृतसत्रं निज-
महसा जितसूर्यो भानुनामा क्षोणीश्वरो बभूव । तस्य भूपालस्य बुद्धीनां भाजनं शिष्यीकृतसुरगुरुर्मित्रानन्दनामा सचिवो बभूव ।
अथ कदाचित् सभामध्ये पृथिवीपतिमन्त्रिपत्योर्व्यवसायस्य पुण्यस्य च प्रतिष्ठाने कलहोऽभवत् । अथ पृथिवीकान्तः कोपेन मन्त्रिणं
प्रति जगाद । यदि व्यवसायो न प्रमाणं पुण्यमेव प्रमाणं तर्हि निजपुण्यप्रभावात् पुण्यबलोदयाहङ्कारस्त्वमित्थमेधितमत्सरो मम
राज्यसमृद्धिं गृहाण ! । यः कश्चन नगरमध्याद् भवन्तमनुगमिष्यति तस्य कण्ठादसौ संजाततृष्णो मम कृपाणो रुधिरं पास्यति । हे
तुन्दरुद्र ! शीघ्रं याहि स्वं वचनं पूर्णं विधेहि ! हन्त ! गृहे न व्रजितव्यम् , इत एवान्यतो गच्छ ! । इति भूभर्तुरादेशं विदित्वा
मन्त्रीश्वरो दृढावेश एकाकी चैव देशान्तरं प्रति प्रतस्थे । प्रथमपृथिवीगमनविपत्तिभ्यामक्षुतोद्यमः शैलेन्द्र इवोन्नतः स सचिव-
शरणाभ्यागेन नगरान्निरगमत् । महापुण्यवानसौ मन्त्रिवर्यो व्रजन्नाधिकं परिश्रान्तो मध्याह्नसमये चन्द्रस्येव कलाकोटीभिर्निर्मितं
सरोवरमेकमद्राक्षीत् । चपलवीचिपाणिसमूहं यत्सरस्तृपितानाकारयितुमिव कमलव्याजाद् भ्रमरगम्भीरनादा वदनकोटीर्दधार ।
अत्र कृतस्नानपानः सरस्तीरजवृक्षस्य तले स्थितः स मन्त्रिचन्द्रोऽग्रे व्योमतो रभसोत्तीर्णं पुरुषमेकमद्राक्षीत् । एष मणिस्तव वाञ्छितं

धारावासनगरपतिः शूरसेनो महामनोरथेन सुमित्रं सचिवं हन्तुमस्मान्निजकिङ्करान् प्रैपीत्। यदयं मन्त्र्यस्माकं स्वामिनं प्रत्यब्दं दण्डयति, अस्मत्प्रभो रिपुं त्वामपि सततं भृशं पोषयति। प्रभोराज्ञात इहास्माभिरद्य सचिवस्य मार्गो ववन्धे यथा केसरिबन्धनं शृगालस्तथायं कुतोऽपि पपात। इति कथनेन भयङ्करावेशास्ते व्यक्तीकृताभिप्रायाश्चत्वारोऽपि घातका वीरास्तत्रैव पञ्चत्वमगच्छन्। अथ कृतपश्चात्तापो धराधवो नगरवासिभिरन्वितो गत्वा करौ धृत्वेति कथयन् सचिवं क्षमयामास। अल्पमतिना मया मनुष्यकल्पस्यापि तव योऽपराधः कृतोऽमुं तमपराधं त्वं मयि क्षमस्व! क्षमस्व!। हे पितः! त्वं चेद् व्रतं नाचरिष्यस्ततो नाजीविष्यस्त्वामन्तरा मामकं राज्यं भूरिविभवशालि नाभविष्यत्। तदद्याहं चिरादनुपमकल्याणकारकस्य पुण्यकार्यस्य पापनाशकं फलं प्रत्यक्षमद्राक्षम्। त्वत्कृतेनानेन व्रतेनाद्य तव पवित्रं जीवनं पुष्टं जातम्, मम पातकं दुर्यशश्चाशोषि। तद् हे सत्त्वशालिन्! मन्त्रिन्! ममापराधं क्षमस्व! प्रसीद! कथय! हे पितः! मां धर्मं कारय! त्वरिततरं संसारसागरात् तारय! अथ मन्त्रिवर इदमुवाच–हे राजन्! नूनं तावकोऽपराधो नास्ति यत्साम्प्रतं सपश्चात्तापस्त्वं धर्ममतिं करोषि। ततः प्रत्यर्पितराजमुद्रेण सचिवेनाकारितो राजा पूर्णचन्द्रगुरोरग्रे गृहमेधिनां धर्ममग्रहीत्। अथ सचिवाच्छङ्कमानः शूरसेनोऽपि स्वीये कण्ठे धृतकुठारः समाययौ, दयालुना राज्ञा च लक्ष्म्या व्यभूषि। ततोऽमात्यवरोपदिष्टैः सुरपूजादानवरध्यानरथयात्रामुख्यैः कर्मभिर्मेदिनीजानिर्निजं जन्म पवित्रमकार्षीत्। तत्र राजनि स बालकोऽपि श्वपचोऽपि च नाभवद्यो जिनेश्वरोपदिष्टधर्मकार्यतत्परत्वं न ययौ। इत्थं सचिव इव निर्मलमती राजा महाविदेहक्षेत्रे मनुष्यजन्म लब्ध्वा पुनर्मोक्षमगमत्। ततः सुमित्राख्यदीपेन प्रकाशतां गमितेऽत्र देशावकाशिकव्रतमार्गे विचक्षणाः सुखं सञ्चरन्तु!।

दत्त्वा स क्षणेन रमुधाजानिना सहोद्यानभूमिमगमत्। अथ तौ नृपसचिवौ नयनपीयूषकल्पं यतिं लोचनैरापीय प्रणम्य श्रवणसुधा-
मयं वचनं पातुमुपविष्टावास्ताम्। ततो धर्मदेशनान्ते जगतीनाथो यतिमपृच्छत्–धन्यस्यास्य मन्त्रिणो विपत्तिसमयेऽपि सम्पत्तयः
कथं प्राप्ता अभूवन्?। अथ यतिरुवाच–व्यक्तैश्वर्या भाग्यशालिभारच्युताद्यौरिव "पद्मनेत्रा"भिधाना नगरी वसुधायां राजते। तत्र
नगर्यामादित्यनामा मेदिनीधव आसीत्, तत्कृपाभाजनं जैनधर्मशिरोमणिः सुदत्तनामा धनवान् वणिगासीत्। अथैकदा स श्रेष्ठी
पापरोगाणामौषधरूपं रात्रौ पौषधव्रतं चकार, रात्र्यन्तेऽसौ हर्षेण शान्तेन चेतसा स्थितः। तत्समये तस्य गृहेऽवस्वापविद्यावेत्ता
भूरिभयङ्करपरिजनः कश्चिच्चौरधुरन्धरः प्रविवेश। चौरकृतसरणा विद्या तत्र निखिलं जनममूर्च्छयत्, किन्तु नमस्कारमन्त्रध्याने
सुदत्ते सा नास्फुरत्। अथैकान्ते स्थितं पश्यन्तं तं सुदत्तमपश्यन्तस्तस्करा महाहर्षवन्तः सकलानि तदोकोद्रव्याणि जगृहुः। अमी
तस्करास्त्वरितं मञ्जूषा बभञ्जुः, कपाटसमूहमत्रुटन्, वित्ताय भूमिगृहाण्यपि स्पष्टयामासुः। अहो! अस्मिन्नुत्पातगणे भवत्य-
पि तस्य महात्मनो धर्मालम्बनासक्तं मानसं ध्यानान्न चलितम्। अथ तेषु तस्करेष्वनायातेषु समागत्य वित्तश्रेणीर्गृहीत्वा निर्गतेषु
न तस्य कश्चिद् ध्यानभङ्गो न बभूव। अथ रात्र्यन्ते त्यक्तनिद्रे लोके स्वसर्वस्वं शोचति वणिक् पूर्णीकृतपौषधव्रतो वासरकार्येषु
व्यलगत्। भाग्यश्रेणिमङ्गीकृतात्मनस्तस्य श्रेष्ठिनः क्रमेणार्जयतो भूयोऽपि धनराजयो भूरयोऽभूवन्। अथ कदाचिदवस्वापविद्यावेत्ता
स तस्करशिरोमणिस्तच्चौर्यधनत एकं हारं विक्रेतुं तां नगरीं समाययौ। धननामा श्रेष्ठिपुत्र एकस्तस्य वणिजो हारं तमुपलक्ष्य
मलिम्लुचं तलारक्षाय समर्पितवान्। तज्ज्ञात्वा दयालुः स वणिगाशु तत्र गत्वा स्वं श्रेष्ठितनयमाक्षिप्य तलारक्षमिदमब्रवीत्।
अयं धनो न किञ्चिद्वेत्ति, तस्करव्यतिकरात् पूर्वं मयास्मै महात्मनेऽयं हारो मूल्यात् समर्पितः। तदयं जनो मुच्यताम्! अस्मिंश्चौ-

सैन्यं दास्यति पश्चादप्यर्चितोऽयं प्राज्यलक्ष्मीं पूरयिष्यतीति कथयित्वा किं किमित्युच्चैराश्चर्यान्वितस्य सचिवस्य हस्ते **चिन्तामणिं** समर्प्य स दिव्यपुरुषो व्योम जगाम। अथ पुलकाञ्चितशरीरः स **मन्त्री** पञ्चश्रियं **मणिं** पूजयित्वा सेनासमूहं निर्माय सायन्तने काले नगरं प्रति प्रतस्थे। अथ **मित्रानन्दो** मन्त्री हस्तितुरङ्गस्यन्दनसमूहमग्रनिस्वानगर्जनस्तैः सैन्यैस्तन्नगरं वेष्टयामास। नगर-रोधं कश्चकारेति विज्ञानार्थं भूपो हेरिकान् प्रेषयामास, तान् दृष्ट्वा **मन्त्री** व्याजहार। अये! बाहुगर्वतिरस्कृतभूरिभाग्यसमूहसम्भवो महीधवो भवद्भिर्मद्वचनेनेति कथनीयः। पुण्यप्राप्तपृतनासमूहो **मित्रानन्दः** समाययौ, पराक्रमाक्रान्तभुवनोऽसि त्वमतः संग्रामाय वहिर्भव!। इति कथयित्वा संभूष्य मन्त्रिणा प्रेषितास्ते हेरिका गत्वा नृपाय सर्वं यथातथं न्यवेदयन्। अथ विचक्षणो महीपतिः स्वस्थीभूय कैश्चिज्जनैः समन्वितो यत्र **मित्रानन्दः** स्वयमुपस्थितस्तत्र जगाम। तत्समये **सचिवो**ऽग्रे राजानं वीक्ष्याभ्युत्तस्थौ यतः सज्जनानां दर्शनं यावदिष्टजने विरोधो युज्यते। अथ प्रणम्य वसुधापतिः काञ्चनासने निवेशितः, स भूपश्च बलान्निजस्यार्धपीठे मन्त्रिणं निवेश्याब्रवीत्। पराक्रमादिव्यवसायतः **पुण्यमेव** श्रेष्ठं वर्त्तते यतः पुण्यात्मनां व्यवसायिनः सेवका भवन्ति। अयमीदृक्से-नासमूहः कश्चिद् भावत्कभाग्योदयो येनाहं तव पुरतस्तव स्वाम्यपि सेवक इव द्योते। परन्तु भवतोऽसावीयती समृद्धिः कुतो लब्धा? इति नृपेण भाषितः **सचिवो** निजं चरित्रं कथयामास। अथाश्चर्यविकस्वरनयनदललोकविलोकितः प्रसन्नो भूजानिर्मित्रानन्देन सह नगरं प्रविवेश। ततो **मणिप्रभावत** उद्यमैर्लक्ष्मीभिः फलितं महीशेन **सचिवस्य** सख्यमाश्चर्यकरमेधाश्चक्रे।

अथ कदाचिद् भानुनृपेण साकं सुशोभितराजसभं तं धार्मिकं **मन्त्रिणमुद्यानपालः** शीघ्रमागत्य न्यवेदयत्। हे प्रभो! अद्य दिष्ट्या वर्धसे, शरीरी धर्म इव **सुमन्धरनामा ज्ञानी** यतिस्तव क्रीडाविपिने समागतः। अथ मुदा तस्मै वनपालाय शरीराभरणानि

चतुर्विधभोजनचीवरपात्रोपाश्रयाणां यतौ दानं तच्चतुर्थमतिथिसंविभागनामकं शिक्षाव्रतं ज्ञेयम्। एकदेशतोऽपि विपुलं श्रद्धापूर्वकं मेलितमेतद् द्वादशं व्रतं सुमित्राया इवाभ्युदयाय भवति। तथाहि–

वसुधाभूषणं वामवनगरलक्ष्मीनामवष्टम्भं श्रीवसन्तपुरनामकं नगरमस्ति। तत्र पुरे पराक्रमाक्रान्तदिक्समूहः पृथिवीवासवो दयापवित्रः क्षत्रियशिरोमणिर्विक्रमनामा भूपो बभूव। तस्य वसुनामा सचिव आसीत्। त्रिकस्वराढ्ये यस्य मतिसमूहकमले गजश्रीरक्षोगात्रं सुखं स्थितवती। तस्य भूभुजः प्रियो जैनधर्मधुरन्धरः कल्याणानामाकरो जिनदासनामा वणिगासीत्। तदर्जि-नरसंघैः काञ्चनरत्नैरपि पृथिव्यामपरौ मेरुरोहणाचलावपि निष्पाद्येते। कुबेरस्तु धनाध्यक्ष इति प्रसिद्धिमेवार्हति, जिनदासस्तु धनद इति याचकवृन्दैरपि स्तुतः। काशीपुरनिवासिनो धनाख्यस्य सार्थपस्य रत्नवतीं नाम्ना प्रसिद्धां तनयां स व्यवहारी परिणीतवान्। तस्य जिनदासस्य लक्ष्मीधरनामा ब्राह्मणो विश्वासभाजनं कनिष्ठबन्धुरिव परममित्रमभवत्। पुनस्तस्य पृथिवी-पतेर्जिनदास इव न सचिवो न दयिता न नन्दनो नान्यच्च किञ्चित् प्रियं बभूव। राजा कदाचिदप्यत्र सुहृदि सचिवत्वं दास्यतीति नृपमन्त्रिमन्त्रं जिनदासं हन्तुं विरुद्धं मनश्चकार। चातुर्येण परमानसोपलक्षको जिनदासस्तु नयनवचनविकारेण तं मन्त्रिणं रिपुवदमन्यत। अथ राजानमापृच्छ्य तीर्थयात्राव्याजतोऽसौ रत्नवतीं प्रियां तज्जनकगृहं प्रति प्रैषीत्। अथासौ सचिवो मलि-म्लुचापदेशनमतमालब्धुं सावधानो रात्रौ तद्गृहमार्गं सेवकैः रुणद्धि स्म। इत्यवेत्य धृतसेवकवेषो जिनदासः श्रेष्ठी माहात्म्यशालि-रत्नान्यादाय स्वमित्रेण लक्ष्मीधरेण समं नगरान्निर्ययौ। मार्गमजानन्नपि निरन्तरं व्रजन्नेष श्रेष्ठी तृष्णाचपलनयनः क्वापि विपिने पपात। तत्र स्वस्य प्राणानिव चीवरखण्डाबद्धां रत्नश्रेणिं स्नुतोऽयं श्रेष्ठी मित्रस्य पाणौ समर्पितवान्। क्वापि कूपे जलं

यद्दुर्यशो मोच्यताम्। रोहिणीनक्षत्रयोगमात्रात् सूर्यः किं चन्द्र इव कलङ्की स्यात्?। अथ द्वादशव्रतकर्त्तायमनृतं न कथयतीति सुदत्तश्रेष्ठिवचनेन तलारक्षो चौरं तत्याज। असत्यमपि यज्जीवहितकरं तत् सत्यमित्यसौ श्रेष्ठ्यसत्येन वचनेनामुं मलिम्लुचममूमुचत्। अथ विचक्षणो वणिक् तं भोजयित्वा सुन्दरे वस्त्रे दत्वा, "अकार्येषु बुद्धिर्न कर्त्तव्या" इति संभाव्य प्राहिणोत्। श्रेष्ठिचन्द्रस्योपकारेण शिक्षया च कोमलमानस एष चौरः "अकार्ये किं स्यात्?" इति ज्ञातुं बुद्धिं धारयन्नगरान्निर्गच्छन् बहिर्भागभुवि धर्मोपदेशान् ददतं शुभ्रप्रभनामानं मुनिराजमद्राक्षीत्। तद्धर्मदेशनां निशम्य विदितकार्याकार्यविवेकोऽयं विचक्षणस्तस्य मुनिराजस्य चरणान्ते दीक्षां स्वीचकार। ततोऽसौ निर्मलं चरित्रं पालयित्वा सौधर्मदेवलोके देवो बभूव, अयं सुदत्तस्तु मृत्वा तव मन्त्री जातः। सम्पत्तिषु ह्रियमाणास्वपि यत्पौषधं व्रतं न त्यक्तं तदत्र पदे पदेऽयं नानाविधाः सम्पत्तीरलभत। देवीभूतः स विचक्षणस्तस्करस्तूपकारान् स्मरन् प्रसङ्गं लब्ध्वा चिन्तातुरायास्मै मन्त्रिणे मणिमदत्त। हे भगवन्! सचिवस्तं द्रक्ष्यति? इति भूपेन पृष्टो मुनिरुवाच–सचिवस्य जीवनान्ते मोक्षाय दर्शनं भविष्यति। हे राजन्! यतो नन्दीश्वरे देवान् वन्दितुमिच्छतः समयविद्देवानीतविमानस्थस्य गच्छतोऽस्य निर्मलध्यानलीनस्यान्तकृतकेवलिताप्राप्तस्य सचिवस्य लवणवारिधेरुपर्येव मुक्तिर्भविष्यति। इति यतेर्वचनं श्रुत्वा प्रकटधर्ममतयो वसुधापतिप्रमुखास्ते सर्वेऽपि सहर्षं स्वस्वगृहं ययुः। एवं पूर्वपुण्यपूर्णसमृद्धिमित्रानन्दोदाहरणाद् विद्वांसः संसारच्छेदाय पौषधव्रते बुद्धिं भजन्तु।

॥ इति पौषधव्रतविचारे मित्रानन्दकथा ॥

पश्यन् स श्रेष्ठी रत्नलोभाद् ब्राह्मणेन बाहुभ्यां प्रेर्य पातितः, जीवतां विश्वासः कोऽस्तु । कूपे पतितः स श्रेष्ठी तदायं कः ? इति वचनं शुश्राव । अथ स्वरेण तां स्वदयितां रत्नवतीमुपलक्ष्य जगाद । अयि कान्ते ! त्वमप्यत्र कूपे कुतः पतितासि ? स तव परिवारः क्वाऽस्ति ? विधिविडम्बितं धिग्धिक् ! । सापि रत्नवतीविपत्प्राप्तमासन्नासीनं पतिं दृष्ट्वा दुःखहर्षमिश्रितसंकटं बाष्पं नयने धृतवती । ततः सतीमौलिमणिरियं रत्नवती तत्रापि कान्तविलोकनादात्मनं धन्यं मन्यमाना बभाषे । तत्सकलमिह विपिनमध्ये मलिम्लुचैरात्तम्, सकलः परिवारोऽपि भयद्रुतः क्वचिज्जगाम । तेषु मद्भोगलुब्धेष्वहं वेगादिह कूपेऽपतं, यतो नारीणां मरणं वरं किन्तु शीलखण्डनं न वरम् । हे कान्त ! यमराजवदनरूपेऽस्मिन् कूपे पतिताऽपि भवदाननदर्शनभोक्तव्यकर्मभिरहं जीविताऽस्मि । उच्यतां इह कूपे भवतामपि कथं पातः ? स च शत्रुरमात्यो विरोधतः किं चकार ? । अथ जिनदास उवाच—मारणोद्यते मन्त्रिण्यहं सेवकवेषधारी गृहत एकाकी रात्रौ निर्गतः । ततो निरन्तरविहारेणेह विपिने समागतः संजाततृष्णोऽत्र जलं पश्यंश्चरणस्खलनतोऽपतम् । तत्समयेऽकथितमित्रदोषस्य तस्यातिसत्त्वतोऽस्मिञ्जलरहिते कूपे शिरा नाभिदघ्नं जलं ददुः । अथ प्रथितस्वेदश्रान्ततृषापरम्परौ तौ दम्पती जितदुग्धेन तेन जलेन परां मुदमलभताम् । अथास्मिन् कूपे जलग्रहणायैतयोः पुण्यघट इव सज्जगुणनियन्त्रितो घटः केनापि क्षिप्तः । ततोऽन्तर्घटनिरोधेन तौ विदित्वा तेन विदुषा लोकान् मेलयित्वा मृत्योराननादिव कूपान्निस्सारितौ । यावत्तौ निर्गतौ तावत्पुरःस्थितो महान् सार्थः "कूपाद् युगलं निस्सृत"मिति कोलाहलं चकार । तत्कोलाहलनादेन कौतुकी सार्थपोऽपि त्वरितं समागतः पुरः स्वामिसहितां तनयां पश्यंश्चैतस्याश्चर्यं प्राप । जिनदासोऽपि तं धननामानं सार्थपतिं वीक्ष्यायं मम श्वशुर इति विज्ञाय विस्मितो ववन्दे । अहो ! भाग्यस्य सौरभ्यमिति निजमनसि विचारयन्ती रत्नवत्यपि परमानन्देन जनकं

पश्यन् स श्रेष्ठी रत्नलोभाद् ब्राह्मणेन बाहुभ्यां प्रेर्य पातितः, जीवतां विश्वासः कोऽस्तु। कूपे पतितः स श्रेष्ठी तदायं कः? इति वचनं शुश्राव। अथ स्वरेण तां स्वदयितां रत्नवतीमुपलक्ष्य जगाद। अयि कान्ते! त्वमप्यत्र कूपे कुतः पतितासि? स तव परिवारः क्वाऽस्ति? विधिविडम्बितं धिग्धिक्!। सापि रत्नवतीविपत्प्राप्तमासन्नासीनं पतिं दृष्ट्वा दुःखहर्षमिश्रितसंकटं बाष्पं नयने धृतवती। ततः सतीमौलिमणिरियं रत्नवती तत्रापि कान्तविलोकनादात्मनं धन्यं मन्यमाना बभाषे। तत्सकलमिह विपिनमध्ये मलिम्लुचैरात्तम्, सकलः परिवारोऽपि भयद्रुतः क्वचिज्जगाम। तेषु मद्भोगलुब्धेष्वहं वेगादिह कूपेऽपतं, यतो नारीणां मरणं वरं किन्तु शीलखण्डनं न वरम्। हे कान्त! यमराजवदनरूपेऽस्मिन् कूपे पतिताऽपि भवदाननदर्शनभोक्तव्यकर्मभिरहं जीविताऽस्मि। उच्यतां इह कूपे भवतामपि कथं पातः? स च शत्रुरमात्यो विरोधतः किं चकार?। अथ जिनदास उवाच–मारणोद्यते मन्त्रिण्यहं सेवकवेषधारी गृहत एकाकी रात्रौ निर्गतः। ततो निरन्तरविहारेणेह विपिने समागतः संजाततृष्णोऽत्र जलं पश्यंश्चरणस्खलनतोऽपतम्। तत्समयेऽकथितमित्रदोपस्य तस्यातिसत्त्वतोऽस्मिञ्जलरहिते कूपे शिरा नाभिदघ्नं जलं ददुः। अथ प्रथितस्वेदश्रान्ततृपापरम्परौ तौ दम्पती जितदुग्धेन तेन जलेन परां मुदमलभताम्। अथास्मिन् कूपे जलग्रहणायैतयोः पुण्यघट इव सज्जगुणनियन्त्रितो घटः केनापि क्षिप्तः। ततोऽन्तर्घटनिरोधेन तौ विदित्वा तेन विदुषा लोकान् मेलयित्वा मृत्योराननादिव कूपान्निस्सारितौ। यावत्तौ निर्गतौ तावत्पुरःस्थितो महान् सार्थः "कूपाद् युगलं निस्सृत"मिति कोलाहलं चकार। तत्कोलाहलनादेन कौतुकी सार्थपोऽपि त्वरितं समागतः पुरः स्वामिसहितां तनयां पश्यंश्चेतस्याश्चर्यं प्राप। जिनदासोऽपि तं धननामानं सार्थपतिं वीक्ष्यायं मम श्वशुर इति विज्ञाय विस्मितो ववन्दे। अहो! भाग्यस्य सौरभ्यमिति निजमनसि विचारयन्ती रत्नवत्यपि परमानन्देन जनकं

सह वसन्तपुरं जगाम। भूपात् सर्वाधिकारं लब्ध्वा स विचक्षणो जिनदासोऽपकारिणे मन्त्रिणे सचिवत्वमदात्, यत उपकारिणः शत्रुत्वकरा न भवन्ति। अथ विपिनरक्षीति वर्धयन्नत्र राजानं न्यवेदयत्, कान्तारे तपस्यतः शङ्करनाम्नो मुनिराजस्य केवलज्ञानमुदभवत्। ततो विक्रमो राजा तस्मै प्रसन्नतादानं दत्वा जिनदासेन सममेव विपिने ययौ, यतस्तादृशा धर्मे पुरस्सरा भवन्ति। अथ मुनिराजं प्रणम्य धर्मोपदेशं चाकर्ण्य राजेदमुवाच—हे प्रभो! मामके सुहृदि जिनदासे विपत्तिसहिताः सम्पत्तयः किम्?। अथ बोधसुधासागरः केवली रदनकान्तितरङ्गैस्तत्पुण्यतटकान्तारं सिञ्चन् व्याजहार।

अथ कौशम्बीनगर्यां दत्त नामा जननीभक्त इभ्यः श्रेष्ठी बभूव, तस्य सुमित्रानाम्नी माता जयानाम्नी च भार्याऽऽसीत्। दानमेव गृहमेधिनां स्फुटमाद्यो धर्म इति निजगुरोर्वचनं सुमित्रैकदा तनयाय कथयामास। जनन्या मानसं दानोत्सुकं विज्ञाय बुद्धिमतां श्रेष्ठः सस्त्रीकः स हर्षेण मातरं न्यवेदयत्। सुपात्रेषु दयाभाजनेष्वपि विधिपूर्वकं त्वं धनं धान्यं यच्छ! यतस्त्वत्कृपात ओकसि बहुधनादिकमस्ति। नियमात् सत्फलमिति परिज्ञायैषा सुमित्रा निजेच्छया प्रत्यहं यथाविधि दानं दत्वाहमाहरिष्यामीत्यभिग्रहं जग्राह। ततस्तनयपुत्रवधूभ्यां चानुमतवाञ्छितं निजं पूर्णयन्ती सा हर्षेण कियन्तं समयं निनाय। अथैकदा ज्योतिर्विद्भिरत्यर्थं भयङ्करे वृष्ट्यभावे निगदिते सर्वतो दुर्भिक्षे भूते जया दत्तमिदमब्रवीत्। हे कुटुम्बाश्रय! नाथ! मूलेऽपि कालोऽयं दारुणः, तव गृहं च सन्ततिपूर्णमतः स्वां मातरं दानान्निवारय!। अथ तेन दत्तेन क्षणात् सुमित्रा माता दानाद् वारिता, यतो नारीजिताः पुरुषा निर्बलतामपि स्वीकुर्वन्ति। अथ सा निजं नियमं संस्मृत्य मनसीदं निश्चयमकरोत्, भोजनमात्रेऽप्यदत्ते जीवितस्यान्तेऽपि नाहरिष्यामि। सत्त्वमहाकरायास्तस्या उपवासाष्टकान्ते दुष्कीर्त्तिशङ्किता सा जया दत्तं तत्समाचारं न्यवेदयत्। अथ बन्धुभिः सह

जिनदासोऽपि निजसमाचारं प्रथमतो व्यजिज्ञपत्। ततस्ता-
वयन्दे। अथतत्किमिति पृच्छतेऽस्मै सार्थपाय धनाय तत्समये जिनदासोऽपि निजसमाचारं प्रथमतो व्यजिज्ञपत्। ततस्तदव-
लोकस्वजनमिलननष्टदुःखकल्लोलास्ते सर्वे हर्षातिरेकेण चीरसदने स्थिताः। अथासिन्नाश्चर्यजनके घृचे सूर्येण गत्वा कथयतीव तदव-
लोककौतुकेनेव सन्ध्यायां चन्द्रोदयो बभूव। ततो रात्र्यागमे जिनदासो जलभाजनमादाय शरीरचिन्ताकृते बहून् वृक्षानन्तरया-
माम (अग्रे चचालेत्यर्थः)। अथासौ जिनदासश्चन्द्रकान्तिभिः कञ्चन पुमांसं सुप्तमवलोक्य यावत् पुरो गच्छति, तावत् पुरुषो मृतो
लक्ष्मीधर इव दृष्टः। घातहीनमेव तं मृतमेनं दृष्ट्वा मित्रप्रेमी स जिनदासो दुःखितस्तस्मिन् सर्पदशनं निश्चिकाय। अथ निजान्
मर्णान् गृहीत्वा तस्मात् पुंसः फणिमणिं कृष्ट्वा तदीयस्पर्शपवित्रेण जलेन तमजीवयत्। उपकारिषूपकारकर्तारः के न पृथिव्या धार्यन्ते ?
किन्तु योऽपकारिषूपकारी तेन तु धरित्री धार्यते। अथ जीवंल्लक्ष्मीधरः पुरतो जिनदासमवेक्ष्य तन्मित्रत्वमिव लज्जानम्रवदन-
कमलो वर्वदे। अथ महाप्रभावो जिनदासो हृदयप्रीतिपीयूषवारिधिकल्लोलोच्चरया भारत्या तमुवाच। चरणस्खलनादहं कूपे पतित-
स्त्वया मुक्त इति किं त्रपसे ? निजोऽपि लोकः केनानुम्रियते ?। अत्र विपिने साम्प्रतं धनाख्यो मम सार्थपतिर्मिलितः, अहं वारा-
णसीं गमिष्यामि, इदानीं त्वं निजगृहं प्रति याहि !। इति कथयित्वा तेन प्रेषितो ब्राह्मणस्तदा लज्जमानो जगाम, जिनदासोऽपि
सार्थपेन सममेव काशीनगरीं ययौ। लक्ष्मीधरो यावद् वसन्तपुरनगरं गच्छति तावन्महीभर्त्ता जिनदासविरहेण पीडित
आसीत्। लक्ष्मीधरस्तज्ज्ञात्वा भूभुजोऽग्रे गत्वा जिनदासस्य सचिवस्य च चरित्रं सर्वं व्यजिज्ञपत्। इत्याकर्ण्य, जिनदासस्य
पक्षपातोऽयं वध्य इति क्रोधेन मेदिनीनाथेन सचिवः कारागारे निहितः। अथ राजा स्वयं त्वराशालिदासेरकारूढो वीरयुगल-
सहितो गुप्तो जिनदासाय वाणारसीमगात्। स एव सचिवो विधेय इति वचनं निश्चित्य धर्ममतिः सभार्यः स जिनदासो नृपेण

पृथिवीं पुष्टपुण्यवतीं विदधन् मोहान्धकारं दूरीकुर्वन् विजहार । देशनावचनामृतजलधरः प्रभुः क्रमशः पृथिवीतलं धर्मबीजाङ्कुरचिह्नितमकार्षीत् ।

॥ इति श्रीवर्द्धमानसूरिकृतस्य पद्यमयस्य वासुपूज्यचरित्रस्य संस्कृतगद्यानुवादे सप्तमो भागः समाप्तिमफाणीत् ॥ श्रीरस्तु ॥

दत्तेनाधिकमाग्रहं बध्नता नवमे दिवसे भोक्तुमुपवेशिता सुमित्रेदं विचारितवती। अयं तनयः स्वयं भोजनत्यागे हेतुं जानन्नपि मां किञ्चिन्न दापयते, मम दुष्कर्मोदयं धिक्!। तदिदं किञ्चित् स्वाहार्यं कस्मैचित् सांप्रतं यदि ददे तन्मम नियमः प्रशंसनीयः स्यात्, पुत्रश्च मम दुर्यशोभाङ् न स्यात्। इति विचारयन्त्या तयाऽऽत्मनो मूर्त्तिमान् पुण्यसमूह इव सहसा तत्समये गृहागतो मुनिर्व्य-लोकि। हे मुने! विशुद्धमिदं भोजनमङ्गीकुरु! मामनुगृहाण! इति कथयन्त्या तया सानन्दाश्रु साधुः प्रत्यलाभि। सुगन्धजलकु-सुमवृष्ट्यवसाने शासनदेवता बभाषे-हे धन्ये! त्वया यन्मासोपवासकारी मुनिः पारणं कारितस्ततसत्त्वभवात् तव दानतो वृष्टिप्रति-बन्धका ग्रहाः शान्ता, असाद्दिव्यगर्जननादाद्दुर्भिक्षहारी मेघो वर्षति। अथात्र नृपेण साक्षतभाजनैर्नगरवासिभिश्च महे कृते दत्त सहसमन्वितो जननीं प्रणिपत्य क्षमयामास। अथ ते श्रद्धावन्तो निरन्तरं निर्मलं धर्मं चक्रुस्तत्रायुर्भुक्त्वा सुमित्राजीवो भवानभूत्। दत्तस्य जीवो जिनदासोऽभूत्, रत्नवत्यपि जयाजीवो, दानरोधात् त्वत्सुहृदि सकृदन्तरा श्रीर्वभूव। इत्याकर्ण्य पूर्वजन्म स्मृत्वा गुरुं प्रणम्य राजप्रमुखास्ते नगरं ययुः, धर्मध्यानासक्ताश्च मोक्षमलभन्त। हे नराः! इति सुमित्राया मनोज्ञं दृष्टान्तं निशम्य कल्याणस्थानमतिथिसंविभागाख्यं व्रतं भजत!।

॥ इति अतिथिसंविभागव्रतविचारे सुमित्राकथा ॥

एवं सम्यक्त्वमूलद्वादशव्रतवर्णनमाकर्ण्य द्विपृष्ठो वासुदेवः सम्यक्त्वं लेभे, पुनर्विजयः श्रावकत्वमङ्गीचकार। अत्यानन्दतत्परा बहवोऽपि लोकाः प्रभोरग्रे भद्रकत्वं श्रावकत्वं मुनित्वं च स्वीकृतवन्तः। कीर्त्तिहाराध्यक्षो जिनेश्वरः

स्वयंवरं विधेहि ! इयं त्वदीया कुमारी यथारुचि नयनपरीक्षकनिरीक्षितं कञ्चन वरं वृणोतु ! । अथ तथेति राजा स्वयंवरं रचयामास, तेनेह सर्वेऽपि राजानो द्रुतं चराकारिता रूपाहङ्कारेण समागताः । तदा मघवता महीधवेन भोजनताम्बूलवस्त्रभूषणोपायनैस्ते हर्षेणानन्दिता बभूवुः । अथ सूर्यं घटीविधातुमिव महोन्नतिं नीते स्वयंवरमण्डपे ते राजान आनिन्यिरे । रूपं पापाचरणाय न भवतीति वचसां निदर्शनं श्रीकोशलपुरनायकः श्रीमान् महेन्द्रसेननामा राजा । निजदेहशोभासुधापानानिमिषभुवनः सुधर्मैकादरवान् मिथिलानगरीधवः सिंहनाथः । लावण्यपीयूषसागरवीचितरत्कामदेवः पुरुषाणां रत्नं जिनभक्तनामा रत्नपुरनाथः । कामिनीनयनकुमुदविकस्वरक्रीडानिपुणो विधुमनोज्ञाननश्चन्द्रपुरस्वामी चन्द्रवर्धनः । कान्तिकिसलयलावण्यकुसुमरूपफलवृक्षो जयचमूशाली राजगृहपतिर्जयसेनः । पुण्यमहावारिधिनीरमानुपरतलं धारयन् सूर्यचन्द्रकीर्त्तिश्चन्द्रमित्रनामा काशीनगरीनायकः । देवसंशयजनकशरीरकान्तयोऽन्येऽपि राजानः कामदेवस्य प्रपञ्चान्मञ्चसमूहं शोभयामासुः । कुरुजाङ्गलदेशभूषणनागपुरनायकः श्रीवीतशोकभूपस्य पुत्रो विद्युत्प्रभाख्यराज्ञीगर्भजः प्रकटगुणगौरवो भुवननयनेन्द्रियविशालभोगकर्मफलं सोऽशोकोऽपि मञ्चमभूषयत् । शरीरगुणगौरवैः शृङ्गारमपि भूषयन्ती, श्रेष्ठैर्भावानन्दैः कामदेवमपि मदयन्ती, "अस्याः शरीरनिःस्यन्दि लावण्यं सकलशरीरं मामागच्छतु" इति रत्नभूमौ प्रतिबिम्बच्छलादधो रत्याश्रितेवेयं रोहिणीयं वेति दर्शकान् मोहयन्ती सहचरीभिरन्विता राजकुमारी ततो मण्डपमाजगाम ।

अथ नृपाणां गुणसमूहवंशनामविज्ञापिनी मधुरवचनवादिनी दक्षा नाम सहचरी तस्या अग्रेऽभवत् । नयनान्तेन नृपान् पिवन्ती वमन्ती च राजकुमारी मञ्चमध्यमार्गे वयस्यामनुचचाल । मदनविशिखैस्तेषु राजसु ताड्यमानेषु यं यं भूपं सा ददर्श स स वीर-

# ॥ श्रीवासुपूज्यचरित्रम ॥

## [ अष्टमो भागः ]

इतश्च देवलोकस्य युवावस्थेवाखर्वपुण्यवती सम्पत्तिसमागमा चम्पा नाम नगरी क्षितिं शोभयति । जयादेवीसमन्विते वसुपूज्ये नृपे स्वर्गं गते श्रीवासुपूज्यप्रभोरात्मजो मघवा नाम तन्नगरीपुरन्दरोऽभवत् । कटाक्षपातैर्मदनस्याकाण्डलास्यनिपुणाऽलक्ष्यवदनेन्दुशोभा लक्ष्मीनाम्नी तस्य पत्नी बभूव । अनयोर्जयसेनप्रमुखा बहवस्तनया अजायन्त, तेषामुपरि सुकृतशालिनी रोहिणी नाम्नी नन्दनी जाता । निजनिजव्यवस्थावस्थानप्रशंसनीयकान्तिवर्णशालिनी या रोहिणी रूपराजस्य जङ्गमा राजधानीव शुशुभे । समग्रप्रकटकलालताया गुणवृक्षविपिनभूमेर्यस्याः कीर्त्तिकुसुमानि मदनः क न शस्त्रीचकार । प्रकटतारुण्यां तां रोहिणीं विलोक्य सानन्दो भूभर्त्ता "अस्या अनुरूपं वरं कथयत" इति मन्त्रिणोऽब्रवीत् । ततः सुबुद्धि–सिद्धार्थ–समुद्र–नयचादकनामानश्चत्वारो मन्त्रिणो मनोज्ञदृष्टिसम्यग्विलोकितभुवनाः कला–विलास–रूप–लक्ष्मीक्रीडापर्वतान् नरेन्द्रान् पराक्रमनामवंशस्थानैर्वर्णयित्वादो व्यजिज्ञपन् । हे स्वामिन् ! अमी राजानो लक्ष्म्या सादृश्यं भजन्ते, परन्त्वेतन्न जानीमो यद् राजकुमार्या मनः कुत्रापि रमते । ततः

नन्दपूर्वकं क्रीडतोः, ऋतुसमूहेनानन्दं दधतोरशोकरोहिण्योः कत्यपि वर्षाणि व्यतीतानि बभूवुः। पृथिव्याकाशयोर्दिग्भागा इव तयोः सविस्तारगुणवन्तो गुणपालादयोऽष्टौ तनया अभूवन्। तथा मदनमहीपतिचतुरङ्गसेनाकल्पा अतिशोभावत्यो गुणमाला-प्रमुखाश्चतस्रः सुता अभूवन्। अथैकदा मनोज्ञे सप्तमे क्षणे गवाक्षे भूपालेन सहोपविष्टा रोहिणी वसन्ततिलकाख्यां धात्रीमुवाच। हे मातः! प्रतोल्यां दृष्टिं देहि! यदामुक्तकचं करुणनादगीतभृदिदं नारीकुलं किं दृश्यते?। रीत्यन्तरस्फुरद्वाद्यध्वनिप्रमित-नृत्यं प्रकटतरस्वस्तिकाकृतिकरास्फालनहस्तकं भरतादिनाट्यशास्त्रेषु क्वचिन्नाकर्णितं न विलोकितमतिविस्मयजनकं किं नाटकममूः प्रमदाः कुर्वन्ति?। अथ धात्री तामुवाच-किमेष तव रूपगर्वः? लक्ष्मीगर्वः? स्वामिगर्वो? वा, यदमू नारीरुपहससि। अथ रोहिणी बभाषे-मातः! मा क्रोधं कुरु! मम कोऽपि गर्वो न, इदमाश्चर्यमनालोकितपूर्वं, तद्यथार्थतः पृच्छामि। अथ धात्री जगाद-पुत्रि! याऽसौ कामिनीसमूहमध्यस्था, तस्यास्तनयो मृतः, तस्य हि नीरदानदिनमिदमस्ति। अरे! पुत्रस्य गुणान् ग्राहं ग्राहमसौ विलप्य रोदिति, तवासिज्ञन्मन्येतत् संसारनाटकमपूर्वं ज्ञायते। अथ सा रोहिणी धात्रीमित्युवाच-चेदस्याः पुत्रो मृतस्तदसावित्थं कथं रोदिति? अनया क्रन्दनं क्व विदितम्?। त्वां रोदनं ज्ञापयामीति हास्यं कथयन्भूपस्तदुत्सङ्गाल्लोकपालनामकं सर्वकनिष्ठं पुत्रं जग्राह। तव सुतमुर्व्यां क्षिपामीति कान्तां प्रति वदन् महीजानिः पाणिस्थं तं शिशुं भित्तेर्बहिरान्दोलयत्। अथोच्चपर्वतशिखरवृक्ष-शाखाग्रतः पवनात् फलमिव स शिशुर्दैवात् पृथिवीधवहस्ताच्च्युतः। अथ नागरिके परिवारेऽपि कृतहाहाशब्दे, किमभूत् किमभू-दिति वचने रोहिण्यां दयोन्मुखे राजनिऽस्पृष्टवसुधातलं तं बालं तत्कालं नगरदेवता कुसुमचन्दनपूजितं महीपतिविष्टरे मुमोच। ततो निजस्य, पुत्रस्य क्रियाश्च सुकृतस्तुतिमाकर्णयन्नृपस्तत्र तनयाऽमृत्युमहमकारयत्। तत्समये नगरारामे चतुर्ज्ञानो मणिकुम्भादि-

रगावेशो मुमुदे। यं यं सा ददर्श स स श्यामाननपार्श्वमहीपयुगलः सन्ध्यायुगलमध्यस्थ वासर इव शुशुभे। तत्र लक्ष्मीरिव महीजा-नीन्नुत्कण्ठाश्चर्यप्रेमदुःखभाजो विदधन्ती क्वचिदप्यस्थिरा सा कन्या प्रतस्थे। भ्रमरप्रिया कुसुमानीव रोचमानान् महीभुजोऽपश्यन्ती तस्या दृष्टिः स्पृष्ट्वा स्पृष्ट्वा त्वरितं तत्याज। अथ वीतशोकभूपस्य नन्दनमशोकं तस्य प्रदर्श्यानन्दिता सा वयस्था व्याजहार, गुणर्नाचिभिश्च वर्णयामास। अथ रोहिणी कन्याऽस्मिन् नयनं हर्षं आत्मानमाश्चर्ये मानसं सात्त्विकभावे च शरीरं मज्जयामास। तत्ममय आकर्षणमन्त्रविदेव तद्रूपेणाकृष्टा सा रोहिणी त्वरिततरं वरमालां तत्कण्ठे चिक्षेप। ततः कलाबहुलमहसश्चन्द्रस्यार्धासने रोहिणीव सा रोहिणी सत्वरमानन्देन तस्यार्धासन उपाविशत्। तत्कालप्रकटवादित्रगीतनृत्यपूर्णो विरुदावलिमधीयमानचारण-गृहः प्रेममयोऽयं समयो बभूव। सुन्दरमभूत्, गुणज्ञेयं योग्यं पतिमवृणोदिति स्वयंवरे सर्वे राजानोऽपि मुमुदिरे। मघवा भूपोऽपि निजनामयोग्यमहार्महैर्मुदितस्तयोर्विवाहमङ्गलं रचयामास। ततो रोहिण्याः पुण्यप्रभावतः प्रीतानखिलान् भूभुजो दानसंमानैरानन्द्य मघवा भूपो व्यसर्जयत्। जैनधर्मानुरक्तया रोहिण्या धर्मैकधुरन्धराभिगीर्भिः पतिरपि जैनधर्मानुरक्तो व्यरचि। सोऽशोक-कुमारो दोगुन्दको देव इव राजकुमार्या समं भोगं भुञ्जानस्तत्रैव यथासुखमतिष्ठत्। अथैकदा सागरोर्मिसमूहमेलकदर्सिरकैर्वीतशो-कस्य राज्ञः पुरुषा आगत्याशोकमाहूतवन्तः। तत उत्कण्ठितोऽशोकोऽपि मघवानं राजानमापृच्छ्य रोहिणीयुतस्ततस्त्वरिततरं जगाम। पौरीशृङ्गाररसागरोर्मिभिर्नेत्रैः स्नातः स पितृचरणनखकिरणानि कुसुमवन्मूर्ध्नि दधौ। नृपेणापि स्वयमुत्थाय स उत्थाप्य करा-भ्यामाश्लिष्य च भद्रासनमुपवेश्यानन्दाश्रुभिरेवाभ्यषेचि। ततः स राजाऽशोककुमारस्य राज्यप्राप्तिमहामहं कारयित्वा श्रीसंय-मधरसूरिसमीपे दीक्षामग्रहीत्। सचिवनिहितवसुधाभारः स दिवानिशं रोहिण्या सह धर्मशृङ्गारयोरेव सेवया शुशुभे। रसादा-

मत्रागतं परिज्ञाय हर्षितान्तःकरणः सान्तःपुरपुरव्रज आजगाम। अथ महीपतौ प्रणम्योपविष्टे मुनिराजो युक्तिप्रकटानुक्रमं जीवानां विचारं तांश्च धर्माधर्मगतीरुवाच। ततो राजनि हर्षनिर्मलपात्रे, दुर्गन्धया स्वस्य दुर्गन्धकारणं पृष्टः स मुनिराजः स्पष्टं व्याजहार। जम्बुद्वीपस्य भरते क्षेत्रे मनोज्ञलक्ष्मीनां भाजनं देशानां शिरोमणिः सुराष्ट्रनामा देशो वर्त्तते। तत्र देशे निजसौन्दर्याकृष्टत्रिदशो मनोहरवृक्षपङ्क्तिसुशोभितो रैवतनामा गिरिवरोऽस्ति। तस्य पर्वतस्य पश्चिमे भागे लक्ष्मीनां भागधेयमिव त्रिदशपुरसदृशं गिरिनगरं नाम पुरं वर्त्तते। तत्र नगरे जैनधर्ममतोद्यानममलोद्यानरक्षकः पृथिवीपालाभिधानो मेदिनीपतिर्बभूव। तस्य राज्ञः प्रीतिरससिद्धिः सिद्धिमतीनाम्नी कान्ता बभूव, स्वामिप्रियत्वेन सापि जैनधर्मे बुद्धिं धृतवती। एकदाऽन्तःपुरसहित उद्यानिकायां गच्छन् भूभर्त्ता पर्वतान्नगरे गच्छन्तं गुणसागरनामानं महामुनिं ददर्श। अथ स कान्तामुवाच–अमुं मासोपवासिनं यतिं पारणं कारयित्वा त्वरितमागच्छ! मन्दं मन्दं वयं गच्छामः। निजेच्छागतिभङ्गात् क्रोधेन राजादेशभङ्गाच्च बिभ्यती सा सिद्धमतिस्ततो मुनिं पारणं कारयितुं गृहे निनाय। अथ लोकेन वार्यमाणापि सा घोटकेभ्यः परिपाचितं कटुतुम्बीफलं खाद्यसहितं तस्मै साधवे दत्तवती। तद्भुक्त्वा दह्यमानोदरो गृहीतानशनो मुनिर्भोजनादि प्रत्याख्यानमनोहरो देवलोकं जगाम। अथ भूभुजा तद्विज्ञाय सर्वं गृहीत्वा सा क्रोधेन गले शरावस्रजमालम्ब्य नगरान्निर्गमिता। अथोडुम्बराख्यकुष्ठरोगेन गलिता गलितश्रवणनासिकोष्ठा सा सप्तमे दिवसे मृत्वा षष्ठनरके जगाम। ततस्तन्नरकादुद्धृता सा संख्यातीतदुःखदुष्टात्मतिर्यग्भवान्तरासु सप्तस्वपि दुर्गतौ ययौ। अथ सा नागिनी, क्रमेलिका, शुनी, जम्बूका, वराही, गृहगोधिका, मूषिका, जलौका, वायसा, मार्जारिका, गर्दभस्त्री, गौश्च बभूव। ततः सा गौर्मरणसमये व्यथया मार्गे पतिता यतिभिर्दत्तां परमेष्ठिनमस्कारमश्रौ-

मुनिसहितः क्षमामृतकलशो रूपकुम्भनामा मुनिराजः समाययौ। तनयसचिवपत्नीसमन्वितो महीपतिस्तत्राजगाम, महामुनिं प्रणम्य जीवविचारां धर्मदेशनां शुश्राव। अथ हृदये विपुलां भक्तिं दधानो रोहिणीभाग्यसौभाग्याश्चर्यवन्मानसो भूपो मुनिमपृच्छत्। हे प्रभो ! मघोनः सुतया पूर्वजन्मनि किं पुण्यमाचरितं ? यदेनां कदाऽपि शोकलवोऽपि न पस्पर्श। अथवा ममैतस्या मिथो निरवधिः प्रीतिः किं ? अथवाऽस्या अमूनि सकलान्यप्यपत्यानि शुभान्येव किम् ?। अथ सकलसभाजनचकोरानन्दकौमुदीं मनोज्ञा निर्मलां वाणीं यतिचन्द्रो विस्तारयामास।

हे वसुधापते ! अत्रैव तव नागपुरे नगरे वसुपालनामा राजाऽऽसीत्। तस्य वसुमतीनाम्नी पत्नी बभूव। तस्य महीपतेः साऽऽज्यसमृद्धिर्धनमित्रनामा श्रेष्ठी सुहृदभूत्। तस्य धनमित्रानाम्नी कान्तासीत्। अनयोर्वैरूप्यैकभाजनं पुत्री समजायत, साऽत्यन्तदुर्गन्धकारणत्वाद् दुर्गन्धेति नाम्ना प्रसिद्धाऽभूत्। लोकैर्धनिष्टां बीभत्सरसस्याधिदेवतामिवातिदुर्भगां तां तारुण्येऽपि वयसि कोऽपि न परिणीतवान्। अथेहासंख्यधनवान् वसुमित्रनामा श्रेष्ठी बभूव। तस्य वसुकान्ताख्या भार्या, श्रीषेणनामा तनयश्च बभूव। सप्तव्यसनासक्तः स श्रीषेणः क्वापि चौरकर्मकारी नगरपालैर्धृत्वा वध्यभूमिं नेतुमारेभे। महीपतेर्विज्ञप्तिमारच्य धनमित्रस्तं विमोच्य धनैर्वचनैश्चानन्य दुर्गन्धां पर्यणाययत्। मरणोन्मुक्तिमपि शोचन् स श्रीषेणो दुर्गन्धपीडया यथाकथञ्चिद् दिनं गमयित्वा रात्रौ निर्गत्य जगाम। अथ भिक्षुकेषु दानं वितरीतुं जनकेनासौ नियुक्ता, किन्तु तद्धस्तगृहीतां भिक्षामपि कश्चन न जग्राह। अथ साधुभ्यो धर्ममाकर्ण्य धर्मपरायणा सा दुर्गन्धा वेश्मन्येवानातुरा शान्तात्मा जनन्या निकटे निवसति स्म। हे राजन् ! एकदाऽत्रारामे ज्ञानसुधासागरः शाश्वतागाधतेजा अमृतासवनामा मुनिराययौ। धनमित्रकथनेन महीपतिस्तं मुनि

मूर्हैराश्चर्यकरशरीरवन्ध इव नृपशिरोमणिः सिंहसेननामा भूजानि बभौ । तस्य तिरस्कृतकाञ्चनकान्तिः कनकप्रभाख्या कान्ताऽभूत्, यदाननं कलङ्कोद्वेगमुक्तचन्द्रा लक्ष्मीरशिश्रियत् । तयोर्मनोज्ञरूपोऽपि दुर्गन्धशरीरवान् पुत्रोऽजनि, तत्पृथिव्यां "दुर्गन्ध" इत्येव तस्य नाम प्रसिद्धमभूत् । राज्यदानलोभेऽपि प्रमदाजनस्तं न स्वीकरोति स्म, वालव्यजनपवनेऽपि तं मक्षिका नामुञ्चन् । वदनसंचारितश्वासैर्गुप्ततूलाप्तनासिकैः क्रमायातैः किङ्करैरपि हृदयवलात् सोऽसेवि । इति मातृपितृदुःखभयङ्करसंकटस्थे तस्मिन् महीपकुमारे मरणमपि श्रेष्ठं मानिनि प्रमोदौत्सुक्यधारिणः प्राज्यालङ्कारदीप्यमानकङ्कवानना विद्याधरदेवदानवा आकाशमार्गेषु चरन्ति स्म । कमलप्रभं षष्ठं श्रीपद्मप्रभनामानं जिनेश्वरमागतं विदित्वा तेभ्यो वन्दितुं नन्दनादिसमन्वितो राजा जगाम । ततः स राजा यथाविधि समवसरणे प्रविश्य पद्मप्रभप्रभुं प्रणम्य सतनयः समुपाविशत् । अमृतवारिधिरिव गाम्भीर्यपूर्णनादः प्रभुर्धर्मवचनाम्बुकर्णैर्भव्यात्मनां तापं दूरीचकार । ततो नृपेण दुर्गन्धाख्यपुत्रस्य दौर्गन्ध्यकारणे पृष्टे भारतीचञ्चरीकवदनकमलः पद्मप्रभः प्रभुरभूत् (अर्थादुवाच) ।

अत्र भरतक्षेत्रे श्रीनागपुरं नाम नगरं वर्त्तते। ततो द्वादशयोजनदूरे नीलगिरिनामा पर्वतोऽस्ति । तस्य शैलस्य सानुशिलायां मासोपवासकर्त्ता संयमराशिनामा शान्तो मुनिः सकलानुपद्रवान् क्षन्तुं स्थितः । तस्य पर्वतस्य शिखरे पापर्द्धिप्रेधितसदारसः क्रूरताक्रान्तो यम इव मृगमाराभिधो व्याधो वभूव । प्राज्यलब्धिजुषस्तस्य महर्षेर्माहात्म्येन स मृगमारको निरन्तरं व्यर्थीभूतपापर्द्धिरभवत् । ततः कोपासक्तस्य मुनिवधं चिन्तयतो व्याधस्य सतो मुनिः पारणाय पर्वतादुपत्यकापुरं ययौ । अत्रान्तरे दुष्टात्माऽसौ व्याधो भूरिभिः काष्ठैस्तत्राधः प्रज्वाल्य सकलं पापाणं दूरीकृत्यान्यतो ययौ । अथ तत्रावधेरायुषो नाशं

धीन्। तन्माहात्म्यात् समाधिस्था मृत्वाऽस्य श्रेष्ठिनस्तनया त्वमभूः, पातकशेषेण महादुर्गन्धदूषिताऽसि। ततः समुत्पन्नजातिस्मरणा
ताला नरकादिपीडाः साक्षादनुभवन्तीवाखर्वसकलशरीरकम्पा शुष्कौष्ठी दीनमुखी चपलभयभीतनयना मौलिरचिताञ्जलिः सा दु-
र्गन्धा मामुनिमुवाच। हे स्वामिन्! हहा! भीताऽसि, भीताऽसि, मां दुःखतो मोचय! भूयो यथा तासु पीडासु न गच्छामि
तथा विधेहि! ततो दयाकमलिनीविकस्वरसूर्यो महामुनिरज्ञानान्धकारगणभेदनसमर्थां गिरं व्याजहार। रोहिणीनाम्ना नक्ष-
त्रेण पवित्रिते दिवसे त्वया वर्षसप्तकं यावन्निरन्तरमुपवासः कर्त्तव्यः। अस्माद्व्रतात् त्वं जन्मान्तरे पुरन्दरस्येन्द्राणीवाशोकाख्यस्य
भूभुजः कान्ता भविष्यसि। चिरमलब्धशोकैव भोगान् भुक्त्वा दयितसमन्विता क्रियमाणविहारस्य श्रीवासुपूज्यस्य चरणसेवया
सिद्धिं प्राप्स्यसि। ततोऽशोकरोहिणीसहितामशोकवृक्षसंश्रयां श्रीवासुपूज्यस्याद्भुतां मूर्त्तिं त्वं कारयेः!। तदग्रे तस्य रोहि-
णीतपस उद्यापनमहः करणीयस्तत्राभयप्रदानस्य पटहो नूनं विधीयते। श्रीवासुपूज्यस्य स्नानं, सुगन्धिद्रव्यैर्विलेपनं, मौक्तिक-
सुवर्णमाणिक्यपुष्पवसनैश्च पूजा कर्त्तव्या। तदग्रे च भूरिपक्वान्नफलतण्डुलोपायनं रासकैर्लास्यैः संगीतैश्च प्रभावना विधीयते।
धार्मिकाणां जनानां भोजनवस्त्रालङ्कारैर्वात्सल्यं दीनजने कृपया दानं कारागारतः शरीरिणां त्यागश्च कर्त्तव्यः। तत्समये यथाशक्ति
जिनमन्दिरविरचनं सुपात्रेषु भक्त्या दानं विधिपूर्वकं च जैनधर्मग्रन्थानां लेखनं कर्त्तव्यम्। हे वत्से! इदं कुर्वती विकस्वरपुण्य-
परम्परा सुगन्धनामा भूप इव त्वं दुःखबन्धेन मुच्यसे! हे नाथ! पुरापि तप एतत् केनापि कृतं? यज्ज्ञानिना त्वयात्रैवमुदाहरणं
दर्शितमिति दुर्गन्धया पृष्टः पापतापहारी स मुनिराजो ज्ञानबीजदुर्भिक्षनाशकं वचनामृतं ववर्ष।

अस्य भरतखण्डस्यालङ्कारे शकटाख्याभिधे देशे चाश्चल्यश्रान्तलक्ष्मीतल्पं सिंहपुरं नाम नगरं विद्यते। तत्र विविधमणिस-

भूतरोहिणीव्रतकारिणी दुर्गन्धा दुष्कर्मबान्धवेन दुर्गन्धेनात्याजि। तेन तपसा किमपि रूपं धारयन्ती सा सती देवाङ्गनानामहङ्कारं दूरीकर्त्तुमिव देवलोकमगमत्। तत्र चिरं विविधान् भोगान् भुक्त्वा देवलोकाच्च्युता सा चम्पानगर्यां मघवद्भूपलक्ष्मीदेव्योस्तनया बभूव। हे श्रीमन्नशोकराजेन्द्र! नूनं सा तव कान्ता रोहिणी रोहिणीव्रतप्रभावतो दुःखरहिता सुखान्विताऽभवत्। हे राजन्! यश्च षष्ठजिनेश्वरोपदिष्टं रोहिणीव्रतं सेवते स तस्य सुगन्धस्य वृत्तान्तमथ निशामय!। अथ सिंहसेनो राजा सिंहपुरे निजपुत्रं तं सुगन्धं राजानं विधाय स्वयं परिव्राजको भूत्वा विपिने सिंहो बभूव। अथ सुगन्धो राजा दुर्गन्धनाशात् प्रत्यक्षमाश्चर्यकरं प्रत्ययं दृष्ट्वा नूनं विशदे धर्मे महाश्रद्धामकार्षीत्। क्षमावांल्लक्ष्मीवान् स सुगन्धो बलेन बाह्यशत्रूनन्तरङ्गशत्रूंश्च जयंश्चिरं मेदिनीं धर्मं चागोपायीत्। उत्तमज्ञानः श्रावकधर्मैकध्यानधारणमहाधनी धरापतिः समाधिमृत्युतो नाकसम्पत्तिमलभत।

इतश्च पूर्वविदेहे पुष्कलावतीनामा विजयोऽस्ति, तत्र भुवनभूषणं पुण्डरीकिणीनाम्नी नगरी वर्त्तते। वासवेनेव चन्द्रिका धवलयशसा विमलकीर्त्तिनाम्ना भूपेन स्वर्गलक्ष्मीमनोहरा सा नगर्य्यरक्षि। तस्य मेदिनीजानेः प्रशंसनीयकीर्त्तिरन्तःकरणवल्लभा वदनविनिर्जितकमलशोभा पद्मश्रीनाम्नी बभूव। सुगन्धस्य धरापतेर्जीवो नाकलोकतश्च्युतश्चतुर्दशमहास्वप्नसूचितस्तदुदरे समवततार। अथ सा देवी महैः पूजनीयं सुनन्दनं सुषुवे, राजा तु तस्य "अर्ककीर्त्ति"रिति नाम चकार। यशश्चन्द्रिकाव्याप्ताकाशः स हिमांशुरिव रराज, तरुणेन तेन च सकला कलाराजिरुरीकृता। तस्य राजपुत्रस्य विद्यासु सब्रह्मचारी क्रीडासु सहचारी मेघसेननामा वयस्य आसीत्। इतश्चोत्तरमथुरानगर्यां श्रेष्ठिनः सागरदत्तस्य लक्ष्मीवतीनाम्न्यां स्त्रियां मन्दरनामा पुत्रो बभूव। पुनर्दक्षिणमथुरानगर्यां नन्दिमित्राभिधानो वणिक् श्रेष्ठी बभूव, तस्य सुभद्रानाम्नी भामिनी चासीत्। नन्दिमित्रेण सद्गुणैः

विधाय कृतकृत्यो यतिः धर्मान्तं विधातुं मुक्तभोजनस्तां शिलामारुरोह। अतिभयङ्करं तं ताप सहमानस्य महर्षेः शुक्लध्यानं वर-ज्ञान निर्वाणं च समुपजायते स्म। अथ व्याधोऽपि तेन पापेन कुष्ठरोगेन विगलत्कायस्तत्र भयङ्करपीडां सप्तमीं दुर्गतिं ययौ। अथ स्वयम्भूरमणाख्ये द्वीपे मत्सीभूय ग्राज्यपापवान् स महादुःखमयीं षष्ठीं दुर्गतिभूमिमलभत। ततः सर्पो भूत्वा स पातकी पञ्चमीं दुर्गतिं जगाम, ततः सिंहो भूत्वा चैष चतुर्थीं दुर्गतिमगच्छत्। अथ स पापी गजो भूत्वा तृतीयं नरकं जगाम। ततो बिडालो भूत्वा द्वितीयं बकश्च भूत्वा प्रथमं नरकमयासीत्। एवं श्वपचादिष्वेव जन्मसु भ्रान्त्वा नागपुरे पुरे गोपभामिन्या गान्धार्यां वृषभसेननामा पुत्रो बभूव। अथ वृषभसेनस्तेषां श्राद्धानां सङ्घाद् गाश्चारयन् नीलगिरेः समीपभूमौ जगाम, दैवतो वनाग्निना धृतोऽभूत्। मयापि पूर्वजन्मनि कोऽपि दग्ध इति पश्चात्तापकारी स पञ्चनमस्कारमन्त्रं स्मरन् वनाग्निनाऽदाहि। हे राजन्! ततस्तेन पुण्येन स तव तनयो भवत्, किन्तु शेषेण दोषेणायं महादुर्गन्धशरीरोऽस्ति। ततो जिनेश्वरस्य तेन वचनेन भयाकुलो भूपकुमारो जातिस्मरणवशात् समुत्पन्नवेपथुः प्राञ्जलिरुवाच। हे देवाधिदेव! संसारसागरान्मामुद्धरोद्धर! तैः पापैरहं कथं त्यक्ष्ये? कथय! कथय!। इति दीने राजकुमारे कथयति पापशत्रुः श्रीजिनेश्वरो रोहिणीव्रतमुपदिदेश। अथ जिनेश्वरं प्रणम्य सपरिवारो धराप्रियो नगरं ययौ स तु कुमारो यथाकथितं रोहिणीव्रतमकरोत्। समुत्पत्स्यमानमुक्तिफलं रोहिणीव्रतकल्पाज्जातः पुण्यप्रकर्षः स कुमारो दुर्गन्धमुक्तः सुगन्धो बभूव। हर्षसमूहपूर्णेन महीशेन नगरे महं कारयता राजकुमारस्य "सुगन्ध" इति नाम प्रसिद्धं चक्रे। अतो हे कल्याणि! त्वमपि रोहिणीव्रतं कुर्वती सुगन्ध इव विपुलसौख्यग्रामभाजनं भविष्यसि। इत्याकर्ण्यामृतास्रवाख्यं मुनिराजं प्रणम्य शोकरहिता दुर्गन्धाऽपि जनेन समं नगरं विवेश। अथ मोक्षनिःसरणी-

पुत्रचन्द्रोऽहारि। ततो वैताढ्यगिरिशिखरे त्यक्तनिद्रं तं राजकुमारं क्रोधेन रक्तमवलोक्य हरणभयभीता सा सिद्धमन्दिरे त्यक्त्वा जगाम। वासरमणौ दृष्टे कमलदलैरिव तस्मिन् कुमारे दृष्टे सिद्धमन्दिरे त्वरिततरं वज्रकपाटैरुदघट्यत। ततो मुदावेशनिर्भरदुरितो राजकुमारः सिद्धमन्दिरस्थान् सिद्धान् ववन्दे। अथ तत्र तं प्रणम्य कश्चित्पुरुषः कृताञ्जलिरुवाच–हे प्रभो! अनुपमेभ्योल्लासिश्रीकोऽयं वैताढ्यः पर्वतोऽस्ति। इह लक्ष्मीस्थानमभयपुरं नाम नगरमस्ति। अत्र शत्रुवंशदवानलः पवनवेगनामा भूपोऽस्ति। तस्य राज्ञो मदनशस्त्रभूता चित्तवेगानाम्नी हृदयवल्लभा वर्त्तते, रूपे च वचनानामगोचरो गतशोकाख्या तस्य तनया विद्यते। अस्यास्तनयायाः कः स्वामी भविष्यति? इति महीपतिना पृष्टः पूर्वमपि विश्वासदायी दैवज्ञो बभाषे–हे स्वामिन्! रूपमोहितया विद्याधर्या दूराद्धृतो भविष्यत्सार्वभौम इति तनयायाः स्वामी भविष्यति। हे दैवज्ञवर! स पुरुषशिरोमणिः कथं विदितव्यः? इत्यतिप्रमोदी राजा ज्योतिर्विदमपृच्छत्। यस्मिन्नागते सिद्धमन्दिरे कपाटाभ्यामुद्घटिष्यते स चक्रवर्त्ती तवास्याः पुत्र्या भर्त्तेति ज्योतिर्विन्महीपतयेऽदिशत्। तं नरं ज्ञातुमहं नृपेण दिष्टस्तच्चिराद् विलोकितोऽसि, तदागच्छ! मूर्त्तिमती मदनाज्ञेव सा तव गृहिणी भवतु। इति श्रुत्वा स राजकुमारस्तेनैव सह चचाल, तेन पुरुषेण च विज्ञापितो विद्याधरेन्द्रः संमुखमाजगाम। अथ विद्याधरो महेन राजपुत्रं नगरे प्रवेश्य प्रसन्नो गतशोकया तनयया सह विवाहयामास। प्रीतेन मदनमात्राधिकशोभेन तेन जामात्रा सकलः खेचरवंशः परमानन्दमविन्दत। मदनमहीपतिमनुष्यलक्षणकला इवेतरैर्विद्याधरैरपि दत्तास्त्रिंशतं कन्याः स परिणीतवान्। प्रसन्नोऽसौ राजकुमार उपभोगवान् पञ्च वर्षाणि तत्र स्थित्वा प्राप्तविद्यासमुदायो विद्याधरपतिमापृच्छ्य प्रतस्थे। स्वप्रियावदनैर्गगनं पद्मसमूहं विदधन्नसौ राजकुमारः स्यन्दनविमानतुरगगजस्थैर्विद्याधरैरन्वितो

प्रसिद्धे निजे कमलश्रीगुणमालाभिधे तनये मन्दराय समर्पिते। परन्त्वर्ककीर्त्तिकुमारो रूपलोभान्मदनकीर्त्तिलक्ष्म्याविव ते कन्यके मेघसेनेन मित्रेणाहारयत्। ततो विमलकीर्त्तिभूपालः श्रेष्ठिनो वक्त्रात् तद्विदित्वा कन्यके विमोच्य जनं शोकरहितं चकार। य एवं प्रजा पीडयति तेन किमिति नीतिशाली राजा तदपराधेन ससुहृदं तनयं निरकासयत्। अथार्ककीर्त्तिः ससुहृज्जलस्थलदेवलोकभामिनीनामपि नयनानि विलोभयन् वीताशोकाख्यां नगरीं जगाम। राजराजितारामां तां पुरीं वीक्ष्यार्ककीर्त्तिः किमेतद्विति कञ्चनपुरुषमपृच्छत्, स च बभाषे–इह पुर्यां लक्ष्मीनामुत्साहकारी विमलवाहननामा भूपो विद्यते, धीगुणेन गुरुणा यस्य कृपाणोऽर्हिमाव्रतवान् व्यधायि। वरकान्तिभाजनं सुप्रभा नाम तस्य वल्लभा रराज, यस्या रूपनिर्माणे प्रजापतिरपि विस्मित इति मन्ये। मदनमहीपतेर्लक्ष्मीरिवानयोर्जयवतीनाम्नी पुत्री वर्त्तते। या कान्त्या सुवर्णानां राशिरिव दृश्यते। सत्यविश्वासज्योतिर्विकथितज्ञानपराधीनो राजा राधावेधकारिणे तां कन्यां दातुं प्रतिज्ञातवान्। ततो बाहुबलगर्वा मदनादेशवशीभूता राधावेधकाङ्क्षिणः के के महीपतयोऽत्र नाम नायाताः ?। तज्ज्ञात्वा सानन्दो राजकुमारः सुहृत्सहितो यत्र राधायन्त्रं रचितं तत्राशुतरमाजगाम। तत्र भ्रमणखिन्नमसदृशतृष्णाव्याकुलमिव यन्त्रं सर्वेषामपि महीपतीनां यशोमयं जलमपासीत्। परन्तु विततयशा अर्ककीर्त्तिर्नृपाणां मानसे चमत्कृतिं वदने च म्लानिं रचयन् राधावेधक्रियामकरोत्। अथ यथा सूर्यः सप्तदिक्सहितां पूर्वदिशं परिणयति तथानार्ककीर्त्तिः सप्तकनिष्ठभगिनीयुतां जयवतीं पर्यणैषीत्। ततस्तत्र कमलपलाशैर्भ्रमर इवाष्टभिः पत्नीभिः सह भोगसमृद्धात् सुखमनुभवन् यथासुखं स चिरमतिष्ठत्। अथैकदा लोकैरन्वितः स राजपुत्रो जिनेश्वरं वन्दितुं विमलाचले ययौ, तत्र जिनपूजनकरणैः परिश्रान्तो निशि सुष्वाप। तत्र पर्वते त्वायातया चित्रलेखाख्यया विद्याधर्या कुमाररूपमोहितया सुप्तो राज-

भुवनोत्सङ्गे रेमाते। वह्नीनां लक्षैरिव सूर्याणां कोटीभिरिव दीप्तं चक्रमस्य शस्त्रागारे समुत्पन्नम्। अथ महामहैश्चक्ररत्नस्य महीमानमाधाय समुपजातसकलरत्नसमृद्धिरेधमानसेनासमूहः प्रयाणसमयाशुभं जिनेश्वरपूजावसरैर्दूरीकुर्वन्नसौ राजा क्रमशः षट्खण्डं पृथिवीमण्डलं जिगाय। ततः स राजा नवद्वादशयोजनां पुण्डरीकिणीं नगरीं स्फुरज्जैनमन्दिरसमूहभूषणां व्यधात्। स राजा मोक्षगमनस्पृहिणां सज्जनानां पथ इव ग्रामे ग्रामे नगरे नगरे जिनमन्दिराणि रचयामास। एवं स नृपो मदरहितो महाबुद्धिः पृथिवीमानन्दवर्ती विरचय्यात्मानं कृतकृत्यमिवामन्यत। अथैकदा स विचक्षणो जितशत्रुनाम्नो मुनेराननान्मुनित्वस्वरूपमाकर्ण्य पूर्वकृतेभ्यः पुण्येभ्यो बह्वमन्यत। स बलाद्दारास्तनयान् सुहृदोऽमात्यांश्च पृष्ट्वा धवलकीर्त्तिनामानं सुतं राज्येऽभिषिच्य स्वयं दीक्षामग्रहीत्। सोऽर्ककीर्त्ती राजर्षिस्तपस्तैक्ष्ण्याद् वासवतुल्येन महसा सूर्यकीर्तिमासाद्य मृत्वाऽच्युते देवलोकेऽगमत्। हेऽशोकनृप! ततः स श्रीमांस्तत्र भुक्तभोगगणोऽच्युतदेवलोकाच्च्युतः शोकरहितभावनास्थानं भवानभवत्। तत एकेन रोहिणीनामतपसा समुपार्जितपुण्ययोर्युवयोर्दम्पत्योरस्खलितः प्रेमबन्धोऽस्ति। तस्य रोहिणीतपसो माहात्म्याद् भवतोरेवं जगदाभोगदेदीप्यमाना सौभाग्यलक्ष्मीरभूत्। एवं प्रभावं विज्ञाय भव्यैर्दुःखरहितसुखसिद्ध्यर्थं यथाविध्युपवासैरिदं व्रतं सेवनीयम्। उपवासासमर्थैर्जीवैरिदं रोहिणीव्रतं मनोज्ञोद्यापनमाचाम्लैर्निर्विकृतिकैरपि सेवनीयम्। हे राजन्! इति युवयोर्महती जन्मान्तरकथाऽवोचि, साम्प्रतं तव सन्ततीनां पूर्वजन्मवृत्तं भणामि।

वसुधाया नेपथ्यं मथुराख्या पुरी विद्यते, वीररसेन क्षितिं सिञ्चन् वीरसेनो नाम राजा तां पर्यपालयत्। तत्राग्निशर्मा नाम ब्राह्मणो बभूव, सावित्री च तत्कान्ता, तयोः शिवशर्मप्रभृतयः सप्त तनया अभूवन्। भद्रकभावास्ते सप्तापि दारिद्र्यमुद्रया

जगाम। अत्रान्तरेऽञ्जनपर्वतस्य समीपे भग्नस्तम्भेन मदोन्मत्तेन दुर्दान्तेन गजराजेन व्याकुलीकृतं जनं सोऽद्राक्षीत्। अथ रविरिवार्ककीर्त्तिराकाशादुत्तीर्य सत्वरमन्धकाराधिदैवतमिव गजराजमधीनमकरोत्। तत्समयेऽञ्जनाचलस्य प्रभुः प्रभञ्जनो ज्ञानिवचनस्मरणादस्मै कुमाराय मदनावलीप्रमुखा अष्ट कन्यका अदात्। शत्रुनाशकः स कुमारः प्रभञ्जनानन्दाय तत्र किञ्चित्कालं स्थित्वा जननयनविहिताभ्युत्थितिर्विलीनशोका नगरीं जगाम। अथोररीकृतजयवतीप्रभृतिपरिजनः स राजकुमारः पितृयशोभिर्विकासिनीं पुण्डरीकिणीं नगरीमयासीत्। अल्पानल्पस्फुरच्चक्रद्वयैर्धुर्यक्रमेलकगर्दभैः शकटैरेकनयनकुब्जखञ्जतुन्दिलखेटकैर्घनसारखटिकानालीकस्तूरीकनकपित्तलरितैररपि श्रेष्ठाधमैः संमिश्रैः पूर्णैर्भाण्डैः पञ्चवर्णपञ्चशरीरः पञ्चवर्णकेशः सोऽर्ककीर्त्तिर्वणिग्भूय तां नगरीं साश्चर्यं प्रविवेश। तेन तेन स्वरूपेण तथोपायनीकृतैस्तैस्तैर्भाण्डैः स आनृपरङ्कं नगर सोत्प्रासाश्चर्यं व्यधात्। ततो मलिम्लुचरूपेण पुरगोधनं हृत्वा पश्चाद्धावता महीपतिनायं कुमारो रणाधिक्यमकरोत्। घोटकवीचिभिः प्रगच्छतो महीपतिसैन्यसागरस्यार्ककीर्त्तिविशिखाः मर्यादाद्रिवदस्यमभञ्जन्। विवेकेन दोषग्रामा इव तेनैकेन स्वपाणिना ते बहवो योद्धारो दूरं निवारिता। अयमेकोऽपि प्राज्यसैन्येनापि मया न जेतुं शक्यते, मम पराक्रमं धिग्धिक्! इति महीपतिर्विचिन्तयन् मेघसेनेन निवेदितः, हे स्वामिन्! प्रसन्नो भव! मा शोकं कुरु! अयमर्ककीर्त्तिः पराक्रमोपायन आत्मानं सूचयति। इत्याकर्ण्य हर्षसागराम्बुकणायितनयनोदको राजा समीपमागत्य स्वरूपस्थं प्रणमन्तं तनयमालिलिङ्ग। अथ स भूपो नगरप्रवेशपूर्वं चिरागमप्रेमप्रदातव्यपदे पुत्राय राज्यमेव दत्तवान्। अथ स राजा सामन्तसहस्रसहितः श्रीचारुगुप्तनाम्नो गुरोः समीपे दीक्षां गृहीत्वा मुक्तिकामिनीवल्लभोऽभूत्। एताः प्रजा विमलकीर्त्तिना (स्वपित्रा) विना न प्रगदा भवन्तीतीवार्ककीर्त्तिर्निर्मलकीर्त्तित्वमधारयत्। भुवनैकाश्चर्यो यदीयप्रतापयशसोः रात्रिष्वपि यशश्चन्द्रो दिवसेष्वपि

यात्रामहमकरोत्। धर्मप्रीतिः स उत्कण्ठानाशितान्तरायसमूहो यत्र यत्र यातुमशकत् तत्र तत्र जिनेशान् प्रणनाम। निर्मलश्रावकव्रतकमलवनसूर्यमण्डलः स विद्याधरोऽपि सौधर्मदेवलोकस्य शृङ्गारतामभजत्। इतश्च जम्बूद्वीपे पूर्वविदेहे दक्षिणस्यां दिशि वैताढ्यगिरौ गरुडवेगनामा विद्याधरपतिरभवत्। तस्य कमलश्रीवदना कमलश्रीनाम्नी रमणी बभूव, तयोः पद्मश्रीप्रभृतयश्चतस्रस्तनया बभूवुः। अथैकदा वनभूमिगतास्ताश्चतस्रोऽपि कन्यास्तत्र समाधिगुप्तनामानं मुनिं विलोक्य हर्षिताः प्रणेमुः। मुनिस्तासामल्पायुष्कं ज्ञात्वा तत्तारणैकबुद्धिस्तत्पञ्चमीतिथिदिनं च मत्वा ता इदमुवाच। पञ्चम्यां ज्ञानप्रपञ्चतो य उपवासः क्रियेत तन्निर्मलं फलमनन्यसामान्या भोगा भवन्ति। स एवोपवास उच्चैरचितकर्मशान्तिः क्रमशः स्वर्गमोक्षलक्ष्मीसुखदानादिकारणतां गच्छति। इत्याकर्ण्य चतस्रस्ताः पञ्चमीव्रतमुररीकृत्यात्मानं कृतकृत्यमिव मन्वाना गृहे प्रतस्थिरे। मार्गे सौदामिनीपातेन मृतास्ता देवलोकं जग्मुस्ततश्च्युत्वा हे भूपालमणे! भवतस्तनया बभूवुः। ते च शिवशर्मप्रभृतयः स्वर्गाच्च्युतास्तव नन्दना अभूवन्, स च पुण्यात्मा विद्याधरः सर्वकनिष्ठः पुत्रोऽस्ति। इति प्राग्जन्मश्रवणेन जातिस्मरणं लब्ध्वा तेऽशोकप्रभृतयः श्राद्धधर्ममवाप्य निजालयं जग्मुः।

अथ कदाचिद् राजनि सभानिषण्णे धर्मगजाद्भुतगर्जननादवदाकाशमार्गं शब्दाययन् दिव्यो दुन्दुभिरध्वनत्। ततो राजातन्नादाय श्रीवासुपूज्यागमनवादिने दूरोच्छ्वासशरीरप्रेरितानीवाभरणानि दत्तवान्। अथ भद्रासनं त्यक्त्वा पञ्च षट् पदानि पुरो दत्त्वा राजा प्रभुचरणपवित्रितां दिशं ववन्दे। ततो नागपुरं नगरं विस्तीर्णोत्सवोत्साहशालि विधाय सानन्दः सुतसुहृद्दाराः समाहूय शृङ्गारमनोहरगजघोटकारूढसज्जनो गायन्नृत्यद्भव्यसमूहमध्यस्थः स नृपः प्रभुमयासीत्। पुण्यसागरावर्त्तमध्यवर्त्तीव स राजा

क्षिप्ता धनोपार्जनाय पाटलिपुत्रनगरमगच्छन् । तत्समये तत्र सिंहवाहनाभिधो भूजानिरासीत्, तस्य कमलश्रीनाम्न्यां स्त्रियां हरिवाहननामा सुतोऽभूत् । तदा तत्र हरिवाहनकुमारो वसुमित्रनाम्नो राज्ञः कमलमालानाम्नीं तनयां महर्द्ध्या व्युवाह । तदेह तां समृद्धिं वीक्ष्य स्वदारिद्र्येण दूनाः षट् कनिष्ठा भ्रातरो ज्येष्ठं शिवशर्माणं कथयामासुः । हे आर्य ! पश्य ! ब्रह्मणः केयं क्रीडाविचित्रता ? सामान्येऽपि नरत्वे कियदन्तरं विदधाति ? । अस्मिन् परिणयेऽमी जना महागजघोटकनिषण्णाः, परन्तु पादुकारहिताव-स्माकं चरणौ तीक्ष्णकण्टकैः परितप्येते । एषां जनानां प्रत्येकं शरीरे यावन्तो भूषणमुक्ताकणास्तावन्तो जोनालधान्यकणा अप्यस्माकं भोक्तुं न सन्ति । एषां चीवरैकतन्तोर्यन्मूल्यं तदस्माभिर्जीवनपर्यन्तं धार्यमाणानां चीवराणामपि न लगिष्यति । तत्किममी जनास्तस्मै विधात्रे महर्घां दास्यन्ति ? यत्स एतेषामीदृग् दत्तवानस्माकं तु किञ्चिदपि न ददौ । अथ शिवशर्मा तानुवाच—विधाता किमुपालभ्यते ? अयमात्मैवोपालभ्यो यः पूर्वमेव धर्मं न चकार । पूर्वाकृतधर्माणामस्माकमिह लक्ष्मीर्नाभवत्, इहापि यदि धर्मं न कुर्मस्तदाग्रेऽपि सा न भविष्यति । ततस्तद्वचसोपशान्तहृदयास्तेऽब्रोचन्, हे आर्य ! तदस्माभिर्धर्मः कर्त्तव्यस्तत्कर्म भण्यताम् ! । पुनः शिवशर्मा कपटमुक्तं वचनं जगाद—सोऽत्यन्तसुखकरो धर्मः कुतोऽपि सद्गुरोर्ज्ञातव्यः । तत्कचिदुद्यानपर्वतगुहावसुधासु गच्छामः, सामान्यलोकमान्यासु भूमिषु सद्गुरुर्न दृश्यः । इत्यमी सप्त नगरान्निर्जग्मुः, कान्तारे च यतिमपश्यन्, यतो धर्मस्य मनोरथोऽपि कल्पवृक्षो भवति । अथ दशविधयतधर्मविधीनुपदिशन्तं तं मुनिराजं बुद्धिमान् स शिवशर्मा सहजैः समं सहसा ववन्दे । ततः शिवशर्मप्रभृतय आकर्णितधर्मा व्रतं लब्ध्वा तपस्तापेन सुखामृतसरोवरं सौधर्मं देवलोकमगमन् । अथात्रैव च भारते क्षेत्रे वैताढ्ये गिरौ जिनेश्वरधर्मोद्यानरुचञ्चरीको भल्लक्षुल्लकनामा विद्याधरो बभूव । स्वल्पीकृतकर्ममहाभरः स प्रत्यहं पञ्चदशकर्मभूमिषु तीर्थङ्कर-

प्रतिस्थानमुद्यद्विस्मयैः सहचारिभिस्त्रिदशैश्च स्वाध्यमानं धर्मोपदेशं क्रमशो रचयन् प्रभुरग्रेऽग्रे स्फुरद्भक्तिविधीयमानमहामहो विहारेणार्यानार्यांश्च देशान् व्यभूषयत्। अथ महातीर्थपतिधारिणि यत्र देशे सागरोऽपि निजस्य पापं दूरीकर्त्तुमिव विस्तारवानभूत्, शत्रुञ्जयोज्जयन्तनामतीर्थपर्वतसमुद्भवा रम्या नद्यो यं देशमुच्चैः समन्ततः पवित्रं कुर्वन्ति, यत्र पश्चिमे समुद्रे मज्जतां दैनिकचन्द्राणां कान्तिः सरोवरसमूहनीरव्याजात् पृथग्भूला वर्त्तत इव, आसां वापीनां मूलानि नूनमधोभुवनामृतकुण्डैः सिषेविरे इति यस्मिन् देशेऽस्ताघवापीः पीतजला लोका ऊचुः, निरन्तरं फलतरुभिरानन्दनैर्यस्य विपिनैर्याचकयाश्वासमयकल्पवृक्षं नन्दनं वनं हस्यते, यत्र तीर्थमानिनः पर्वताः शरीरिणो नरकभयङ्करदुःखादुद्धर्त्तुं पृथिवीप्रविष्टशरीरा दृश्यंते, नारिकेरीफलकुचवत्यः कूपगम्भीरनाभयः सत्ताम्बूलीकृतवदना यद्देशवाप्यः कस्य न प्रियाः?, यच्छिरोरुहपाशोऽन्धकाराणां तत्त्वेन रचित इव लोचनानां पदार्थशतविलोकनं प्रतिषेधयतीव, यास्त्रियो विस्तीर्णैर्नयनैः पुरुषाणां मानसं पिबन्तीव, पीयूषमनोहराभिर्वाणीभिः कामदेवं जीवयन्तीव, यासामाननचन्द्रो भवसमुद्रं वर्धयतीव, तमेव मनोहरोऽधरप्रवालः शोभयतीव, यासां सन्ध्यारागप्रभो हस्तचरणकान्तिसमूहः प्रमदाजननिन्दास्वाध्याये मुनीनपि रुणद्धीव, दैवात् कोमलैरिव काञ्चनरत्नैर्निर्मितं यासां शरीरं महसां संसारदूषणान्याच्छादयतीव, ताभिर्यद्देशरमणीभिर्जिता इव देवाङ्गनाश्चिन्तातुरा इव स्वामिभिः सह निद्रां न प्राप्नुवन्नि–तं श्रीसुराष्ट्रनामानं देशं देवदानवयुतः प्रभुर्विहारक्रमलीलया भूयः पवित्रयामास। यत्तीरभाजो वृक्षा स्वदानश्रीसङ्घसेविनः पूर्णायुषो देवलोके दानिनः कल्पतरवः स्युरिति मन्ये, यत्तिर्यञ्चोऽपि श्रीऋषभदेवस्य दर्शनान्मुनिस्वाध्यायश्रवणात् पुण्यप्राप्त्या देवानपि हसन्ति तमुच्चैः शत्रुञ्जयपर्वतं क्षितौ स्वोप्तं सुनिष्पन्नं धर्मक्षेत्रं विलोकितुमिव भुवनपतिरारुरोह। अथ तादृशसमवसरणशोभालङ्कारो भगवान् मोहादिमूर्च्छितं

भ्राम्यन् प्रभुं प्रदक्षिणीकृत्याभिवाद्य च समीप उपाविशत्। अथ तीर्थपतिनीरदे श्रवणपेयममृतं वर्षति केन जनेन शरीरेषु श्रवणेन्द्रियत्वं नेच्छितम्?। हृदयेऽधिकं रागं वहन्नन्तेऽपि यो रागरहितो न, स पुमान् सकुसुम्भं वसनमिव मुक्त्यै न रोचते, चपलाक्षि चलेक्षणाभ्योऽमर्पतश्चित्तं कर्षन् वृद्धत्वजीर्णोऽपि पुरुषोऽनीर्ष्यया मुक्त्याऽऽलिङ्ग्यते। इत्यादिभिः प्रभोरुपदेशैः शान्तमती राजा पुत्रं राज्येऽभिषिच्य पत्नीसहितो दीक्षामग्रहीत्। इत्यशोकनामा मुनिः प्रभुणा सह पृथिवीं विहरन् भुक्ततपाः रसन्तत्या भार्यया सह मोक्षमलभत।

## ॥ इति रोहिणीकथा समाप्ता ॥

पुरा श्रीवीरप्रभुणा श्रेणिकाख्यस्य राज्ञोऽग्रे प्रथितां यां श्रीउमास्वातिराचार्यो व्यरचयत् सा रोहिणीकथेत्थमिह कथितास्ति। ततोऽवमर्पिणीतापविस्तीर्णविपत्तेः पृथिव्याश्चरणसञ्चारिकमलैः शीतलमौषधं विदधन्, मोहनिद्रया प्रसुप्तं लोकानां हृदयनयनं दिव्यदुन्दुभिनादाडम्बरैः समुज्जागरयन्, यो मां श्रयति तं दुःखतः पालयामीति पुरोगामिना धर्मध्वजोर्ध्वबाहुनेव धर्मेणोदीयमानप्रभावनः, गच्छता धर्मचक्रेण निखिलेष्वपि ज्ञानेषु केवलाभिधस्य ज्ञानस्य चक्रवर्त्तित्वं प्रकटयन्, त्रिभुवनपापान्धकारनाशाय सदोदयवतां छत्रत्रयचन्द्रबिम्बानां जङ्गमः पूर्वाचलः, चामरयुगलच्छलात् कीर्त्तिपुण्यचीरप्रान्तदशाभ्यामिव ज्ञानध्यानसमृद्धिभ्यां वीजित इव, अमी एव जगद्गुरोश्चरणभारं क्षमन्त इति दिव्यकुसुमवृष्ट्या मनोज्ञेषु देशेषु विहरन्, निर्मलश्रद्धारसैर्नागरिकैरत्याश्चर्यितैर्ग्राम्यजनैः प्रोज्झितपरस्परद्वेषैः पशूनामपि समूहैर्मूकीकृतसिन्धुचयैः पर्वतवनाधिदेवतैर्निरुद्धशब्दायमानवीचिभिः सागराधिदेवीभिः

प्रक्षालितनरकदुर्मलः सुरवांशिकस्ततसमये सुस्वरं वंशमवादयत् । तत्र मधुरभाषिणी वीणा श्रोतॄन् संसारनदीमुत्तारयितुकामेव बद्धतुम्बा बभूव । तदा भाविनां गीतमुद्धान्तममृतार्णवमिवोद्धाव्य लज्जयेव संसारक्षारसमुद्रो नाशमगमत् । तत्र प्रभाते दीपसहस्रसमकिरणसमूहो वासरनाथः स्वयं धर्मपतेरारात्रिकमभवत् । इति नाटकं सम्पूर्णं कृत्वा हर्षेण श्रीऋषभदेवं प्रणिपत्य शक्रः कृतविहारं श्रीवासुपूज्यं देवैः सह वव्रे । सहस्रस्वरूपं प्राप्तास्तपःपुरुषस्य कला इव श्रीवासुपूज्यस्य द्वासप्ततिसहस्राणि मुनयोऽभूवन् । लक्षसंख्यैर्गुणैर्गुणिता भुवनपतेः शरीरिणीवैका क्षमैव साध्वीलक्षमभवत् । पूर्वशालिनां शतद्वयान्वितं सहस्रं बभूव, तथा चतुःशतियुता पञ्चसहस्री अवधिज्ञानवतामभूत् । मनःपर्यवज्ञानशोभिनां शताधिका षट्सहस्री, केवलज्ञानवतां मुनीनां षट् सहस्राणि, प्राप्तवैक्रियलब्धीनां मुनीनां लक्षसंख्या, तथा वादलब्धिजुषां सप्तचत्वारिंशच्छतानि बभूवुः । श्राद्धानां पञ्चदशसहस्रयुतं लक्षद्वयं षट्त्रिंशत्सहस्राश्चतुर्लक्षी श्राविकाश्चेति केवलज्ञानोत्पत्तिपर्यन्तं मासेन वर्जितं चतुःपञ्चाशतं वर्षलक्षा विहरतो वासुपूज्यस्य परिवारो बभूव । ततस्त्रिभुवननायको वासुपूज्यः पृथिवीं बोधयन् क्रमशो मुक्त्या कृतसंकेतमिव चम्पापुरीविपिनमगमत् । षड्भिर्मुनिशतैः सह पादपोगमं प्राप्तः प्रभुः पर्यङ्कासनं निषण्णोऽनशनमुररीचकार । चरेभ्य इति विज्ञाय तत्र समीपासन्नाः कति दुःखिनो राजानश्चरणचारेण त्वरितं नाजग्मुः ! । हन्त ! साम्प्रतमस्माकं प्रभूणां संशयं को दूरी करोतु ? इतीव मुक्तभोजने जिनेश्वरे वासवासनैः कम्पः प्रापि । अवधिज्ञानेन विदितासनकम्पनहेतवश्चतुःषष्ठिः पुरन्दरा देवतासहिता इहाजग्मुः । अथ वासवा राजानश्च प्रभुं प्रदक्षिणीकृत्य प्रणम्य च महाशोकस्तम्भिता इव निश्चलाः स्थिताः । अथ मासस्यान्ते उत्तराभाद्रपदनक्षत्रस्थे चन्द्रे आषाढशुक्लचतुर्दश्यां प्रभुर्मोक्षोन्मुखो बभूव ।

श्रवनं वचनामृतरज्जीवयदिव। अमुमेव पर्वतमारोढुं पूर्वं प्रबोधितोऽप्येष देशः पूज्यैर्भवद्भिर्भूषितस्तदस्य गुणः कथ्यतामिति श्रद्धा जलममृक्तनिर्मलात्मनि वासवे बद्धाञ्जलौ पृच्छति प्रभुः कर्णभाग्यफलमुवाच। धर्मकल्पवृक्षाराम धर्मकामधेनुगोकुलं यं श्रितैर्धर्म- चिन्तामणिमहानिधिर्दृश्यते, यत्रारूढैर्महद्भिरपि महीयान् यः संसारसागरो गोष्पदीभूतो विलोक्यसो,मुक्तिश्च करेण स्पृश्येत, लोकाग्र- गमने प्रथमं सोपानं यं समासाद्य पुण्डरीकप्रभृतयः कोटिकोट्यो मुनयः सिद्धा अभूवन्, मम मुक्तिक्षेत्रत्वं धिगस्तु! यद्याप्य- नन्ताः प्राणिनो दुःखिताः संसारे भ्रमन्तीति निर्झरैर्यो रोदितीव, अहो! अस्य गिरेः कश्चित्काठिन्यगुणः सुदुर्भेदः! यत्र मुक्तदेह आत्मा नरके गन्तुं न समर्थः स्यात्, क्राभिप्रायाः क्रूरवचनाः श्यामाः पवित्रतारहिताः काकाः पापस्य दूता इव यत्र पदं न धत्ते, यत्रैव पर्वतपतित्वं भाति हिमालये तु कविगिरैव, यत्र तिलकाय प्रथमो विश्वविभुः स्वयं स्थितः तस्यास्य पर्वतस्य गुणकथने सर्वज्ञा अपि न क्षमा यतस्तेषामप्यायुः प्रमाणितमस्ति वचनं च क्रमकथनीयमस्ति। इति कथयित्वा दिवसे किञ्चिदवशिष्टे प्रभु- र्देवच्छन्दं प्रविवेश, पुनश्च सर्वे तिर्यङ्मनुष्यसमूहा निजं निजं स्थानं जग्मुः।

अथास्वमताफलं कथं न स्वीकरोमीति स्मरन् वासवो रात्रौ श्रीऋषभदेवं सम्पूज्याग्रे नाटकं प्रारेभे। वीणाप्रभृतिचतुर्विधवा- द्यैरमहस्तकहेलया देवाश्चतुर्गतिकभवनाशदृश्यं चक्रुः। अथ ते सिंहेनेव पञ्चविधशब्देन शोभमानेन वाद्येन पञ्चमहापापगजविनाशं ध्यगुः। तदा स महामृदङ्गघोङ्कारः कश्चन बभूव, येनाकर्णयितुर्लोकस्य कर्मसन्धयः शिथिला अभूवन्। श्रीऋषभदेववदनेन्दुक्षु- भितस्य पुण्यसागरस्य निरन्तरशब्द इव मुरजनादो बभौ। देवानां दृशः श्रीआदिनाथवक्त्रतः कृपत्यपि नर्त्तकी भावपूर्वकनृत्य- भाग्यभूमिरभावत्। संसारस्य चतस्रोऽपि गतीः संक्षिपन्तीवोर्ध्वीकृतहस्तचरणयुगला नर्त्तक्यावर्त्तनैः शुशुभे। सतच्छिद्रस्वरपीयूष-

णाऽन्येभ्यश्च पश्चिमायां दिशि चतुष्कोणा चिता तै रचिता। अथ वासवः प्रभुशरीरस्य दुग्धसागरजलैः स्नानं गोशीर्षचन्दनैश्चर्चनं न्यधादन्ये स्वर्गिणोऽन्येषां चक्रुः। ततः सुरपतिर्हंसचिह्नेन देवदूष्यवस्त्रेण प्रभुशरीरमाच्छादयत्, कुसुमरत्नालङ्कारैरपि शोभयामास। ततो देवाः प्रभोः शरीरिभिर्भक्तित्रैविध्यपुण्यैरिव रत्नैः शिबिकात्रयं रचयामासुः। तत इन्द्रः प्रभुं प्रणम्य शिरसि विधाय शिबिकायां स्थापयामास, अन्यान् मुनींश्च वासववद्देवाः शिबिकयोर्द्वयोश्चिक्षिपुः। सहस्रवाह्यां तीर्थङ्करशिबिकामिन्द्र उद्दधौ, तथा तदन्यशिबिकाद्वयं देवसहस्राभ्यामूहे। तदा देवाङ्गनासु शिबिकां परितस्तालरासकान् ददानासु, पुरोभागे देवगन्धर्वसमूहे वाद्यत्रयवाद्यमाने, केषुचित् सुरेषु पुरो वस्त्रतोरणश्रेणिबन्धनं कुर्वत्सु अग्रे केसररसविच्छर्दान्कुर्वत्सु, केषुचिदग्रेऽग्रे धूपोत्क्षेपं कुर्वत्सु, केषुचित् स्वामिन उपरि धवलच्छत्राणि धारयत्सु, केषुचिच्छिबिकां परितः प्रसूनमाला वर्षत्सु, केषुचित् सकलदोषाणां नाशिनीं शेषां गृह्णत्सु, केषुचिच्च बहुविधां शोकचेष्टां प्रकटयत्सु शक्रस्त्रिदशाश्च शिबिकात्रयं चिताः प्रति निन्युः। अथ योग्यवेत्ता पूर्वदिङ्नाथः सौधर्मेन्द्रः पूर्वस्यां चितायां प्रभुशरीरं न्यधात्, अपरे च सुराश्चितायुगले मुनीन्न्यधुः। ततस्त्वरितमग्निकुमारैरग्निर्वायुकुमारैर्वायुरपरैर्देवैर्घनसाराणां समूहश्चितासु चिक्षिपे। तस्य चितात्रयस्योच्चैः प्रसृता धूमराजयः सदुःखाकाशत्यक्तवेणिपाशत्रयसादृश्यं धारयामासुः। आकाशमहाज्वालासमुदायेन ताश्चिताः शरीरिणो भुवनत्रयशोकवह्नय इवाज्वलन्। अस्थिभ्योऽन्येषु धातुषु कृशानुज्वालाभिर्दग्धेषु मेघकुमाराः क्षीरसागरस्य जलैश्चिता व्यध्यापयन्। अथ सौधर्मेन्द्रोऽधिमाणवकः स्तम्भं वर्त्तुलवज्रसमुद्गके न्यस्य निजस्य विजयमङ्गलकारणाय पूजयितुं कल्याणबीजमिवोपरितनीं जिनेश्वरस्य दक्षिणां दंष्ट्रां जग्राह, ईशानेन्द्रस्तु वामां दंष्ट्रामग्रहीत्। अथ चमरेन्द्रोऽधस्तनीं दक्षिणां दंष्ट्रां बलिस्तु वामां परे तु वासवा यथोचितान् दन्ताञ्जगृहुः। अपरे देवाः प्रभोः शरीरास्थिकणानगृह्णन्,

अथ प्रभुर्निश्चलतरासनो बादरे काययोगे स्थित्वा योगेन बादरवचनयोगं बादरचित्तयोगं च रुरोध। स भुवनगुरुः सूक्ष्मेण काययोगेन बादरं काययोगं रुद्ध्वा सूक्ष्मौ वचनचित्तयोगौ रुरोध। प्रभुः क्रमशोऽमुं काययोगममाययत्, इदं सूक्ष्मक्रियानामकं तृतीयं शुक्लध्यानं ज्ञेयम्। अथ प्रभुः पञ्चह्रस्वाक्षरोच्चारसदृशसमयमुच्छिन्नक्रियनामकं चतुर्थं शुक्लध्यानमशिश्रियत्। नष्टकर्माष्टकायः क्षीणक्लेशपरम्परोऽनन्तदर्शनज्ञानवीर्यानन्दवान् विश्वगुरुर्बन्धविनाशादेरण्डफलबीजवत् कोमलेनैव मार्गेणोर्ध्वगः शिष्यैः समं लोकाग्रं (मोक्षं) प्राप। तत्समये नारकीयजीवेभ्योऽपि हर्षवर्णिकां ददता प्रभुणा स्वयं महानन्दस्य नवफलश्रेणिर्बुभुजे। तत्सबे प्रभोर्वियोगे मोहचेष्टामाक्रन्दं कुर्वन्तः पुरन्दरादयोऽपि शोच्यत्वदशां न ययुः। हे प्रभो! त्वं भुवनबन्धुः कृपासागरः प्रसिद्धोऽसि, कोऽस्मभ्य महादुःखं दत्त्वा स्वयं महानन्दं (मुक्तिरूपं)कथमशिश्रियः?। हे स्वामिन्! या पृथिवी त्वया नाकस्य प्रणम्यत्वं रचिता, साऽद्य तव वियोगे भुवनाश्रुसमुद्रे मङ्क्तुमिच्छति। हे नाथ! अस्मान् धिगस्तु! एते रेणवोऽपि धन्यतमा राजन्ते, येऽस्माभिःश्वासार्दिता अद्य त्वामनुगच्छन्तीव!। क्षीरवर्षिण्या मात्रेव तव वाण्या वियोगिनोऽति बालस्य भुवनस्याद्य का गतिर्भविष्यति?। हे प्रभो! धर्मक्षीरसागरेन्दुना केवलज्ञानसूर्येण त्वया विना मोहान्धकारात् को विश्वरक्षकः?। हे भुवनोद्धारक! त्वयि शरीरं मुञ्चति हहा! ये महाधमतमा नारका आसंस्तेऽपि हर्षमनुभवन्ति स्म। इत्यादिवचनं रुदञ्छक्रः पाषाणानामपि हृदयानि दूयमानो मित्रेण निजहृदयेनैव प्रत्यबोधि।

अथ विलपतो महीपालान् प्रबोध्य देवराजस्तत्समयकार्यकृत आभियोगिकान् देवानादिदेश। ते च नन्दनकाननाद् गोशीर्षचन्दनकाष्ठान्यानीय पूर्वस्यां दिशि प्रभवे वर्तुलाकृतिं चितामरचयन्। इक्ष्वाकुवंशोत्पन्नेभ्यो मुनिभ्यो दक्षिणस्यां दिशि त्रिको-

## ॥ अथ पद्यमयमूलग्रन्थकर्त्तुः प्रशस्तिः ॥

श्रीनागेन्द्रमुनीन्द्रगच्छतिलकः श्रीवीरसूरिर्बिभौ, यस्माद्बोधमवाप्य मण्डलपतिर्जज्ञे यतिश्चच्चिगः ॥
तच्छिष्यः परमारवंशविशदः श्रीवर्धमानप्रभु,-स्तत्पट्टोदयपर्वतैकतरणिः श्रीरामसूरिस्ततः ॥१॥
चन्द्रः कुवलतोद्बोधे, चन्द्रसूरिभूदथ। ततः शमसुधाम्भोधि,-र्देवसूरिर्मुनीश्वरः ॥२॥
बभूवाभयदेवाख्यः, सूरिर्भूरिगुणस्ततः। श्रीहेमसूरिर्यद्व्याख्यां, व्याचख्यौ भूभुजा समम् ॥३॥
श्रीमान् धनेश्वरः सूरि,-रथाजानि मुनिप्रभुः। रूपे वचसि च प्राप, जयपत्रं जनेषु यः ॥४॥
गुरुर्विजयसिंहोऽभू,-द्यश्चक्रे प्रियमेलकम्। सर्वत्र स्वसरस्वत्या, विद्वज्जनमनोऽम्बुधौ ॥५॥
निस्तन्द्रोऽजनि देवेन्द्र,-सूरिर्यन्मुखमण्डपे। विललास कवित्वश्रीः साकं वक्तृत्वसम्पदा ॥६॥
सूरेर्विजयसिंहस्य, शिष्यो गुर्वाज्ञया ततः। सूरिः श्रीवर्धमानोऽस्मिन्, गच्छे यामिकतां ययौ(दधौ) ॥७॥
उदयाद्रिरिव श्रीमान्, स नन्द्यादुदयप्रभुः। त्रयोदयी वचोभानु,-र्भव्याम्भोजानि भासयेत् ॥८॥
अस्मिन् गुरुक्रमे भक्तः, श्रीगल्लककुलेऽभवत्। वाधूर्व्याधूतदुष्कर्मा, धर्माम्बुधिविधुः सुधीः ॥९॥
योऽकारयन्महावीर,-चैत्यं संगमखेटके। तस्मै हलशतक्षोणीं, चतुर्वाटीयुतां ददौ ॥१०॥
तद्भूरभूदघोन्मर्दी, कपर्दी येन वारितम्। चैत्यं युगादिदेवस्य, ग्रामे वटसराभिधे ॥११॥

राजानो भस्मलेशानन्ये च तन्नामिधूलीमगृह्णन् । धूलीनां ग्रहणेनैव मनुष्यैरद्भुते खाते रचिते वासवा जिनेश्वरस्य चितास्थाने रत्नस्तूपं चक्रुः ।

अथ प्रभोः कुमारावस्थायां वर्षाणामष्टादशलक्षाणि, व्रते चतुष्पञ्चाशदिति द्वासप्ततिवर्षलक्ष्यायुरभवत् । श्रीश्रेयांसप्रभुमोक्षस्य चतुष्पञ्चाशतिसागरेषु व्यतीतेषु श्रीवासुपूज्यस्य प्रभोर्निर्वाणमभूत् । इति रत्नस्तूपे विश्वपतेः प्रशस्तिमालिख्य निर्वृतिकल्याणकारका वासवास्ततश्चेलुः । स्वामिनो मोक्षपदस्य प्राप्तिरभवदिति विचार्योल्लसन्निर्मलहर्षसमूहपूर्णाः पवित्ररुचयो नन्दीश्वरे द्वीपे शाश्वतजिनेश्वरमन्दिरेषु दिवसाष्टकं यात्रां विधाय निरन्तरं हृदि हर्षजनकमेतत्परिपूर्णं श्रीवासुपूज्यचरित्रं हृदयेऽनुस्मरन्तः पुलकमनोहरतेजसो जयिनो वासवाः सकलसुरैः सह निजं निजं स्थानं गतवन्तः ॥

॥ इति श्रीवर्द्धमानसूरिरचितस्य पद्यमयस्य वासुपूज्यचरित्रस्य संस्कृतगद्यानुवादे
अष्टमो भागः समाप्तिमफाणीत् ॥ श्रीरस्तु ॥

[ पद्यमयस्य मूलग्रन्थस्य चतुर्थः सर्गः समाप्तः ]

## ॥ इति समाप्तं श्रीवासुपूज्यचरित्रम् ॥

## ॥ अथ पद्यमयमूलग्रन्थकर्त्तुः प्रशस्तिः ॥

श्रीनागेन्द्रमुनीन्द्रगच्छतिलकः श्रीवीरसूरिर्बभौ, यस्माद्बोधमवाप्य मण्डलपतिर्जज्ञे यतिश्चच्चिगः ॥
तच्छिष्यः परमारवंशविशदः श्रीवर्धमानप्रभु,-स्तत्पट्टोदयपर्वतैकतरणिः श्रीरामसूरिस्ततः ॥१॥
चन्द्रः कुवलतोद्बोधे, चन्द्रसूरिभूदथ । ततः शमसुधाम्भोधि,-र्देवसूरिर्मुनीश्वरः ॥२॥
बभूवाभयदेवाख्यः, सूरिर्भूरिगुणस्ततः । श्रीहेमसूरिर्यद्व्याख्यां, व्याचख्यौ भूभुजा समम् ॥३॥
श्रीमान् धनेश्वरः सूरि,-रथाजानि मुनिप्रभुः । रूपे वचसि च प्राप, जयपत्रं जनेषु यः ॥४॥
गुरुर्विजयसिंहोऽभू,-द्यश्चक्रे प्रियमेलकम् । सर्वत्र स्वसरस्वत्या, विद्वज्जनमनोऽम्बुधौ ॥५॥
निस्तन्द्रोऽजनि देवेन्द्र,-सूरिर्यन्मुखमण्डपे । विललास कवित्वश्रीः सार्कं वक्तृत्वसम्पदा ॥६॥
सूरेर्विजयसिंहस्य, शिष्यो गुर्वाज्ञया ततः । सूरिः श्रीवर्धमानोऽस्मिन्, गच्छे यामिकतां ययौ(दधौ) ॥७॥
उदयाद्रिरिव श्रीमान्, स नन्द्यादुदयप्रभुः । त्रयोदयी वचोभानु,-र्भव्याम्भोजानि भासयेत् ॥८॥
अस्मिन् गुरुक्रमे भक्तः, श्रीगल्लककुलेऽभवत् । वाधूर्व्याधूतदुष्कर्मा, धर्माम्बुधिविधुः सुधीः ॥९॥
योऽकारयन्महावीर,-चैत्यं संगमखेटके । तस्मै हलशतक्षोणीं, चतुर्वाटीयुतां ददौ ॥१०॥
तन्नूरभूदघोन्मर्दी, कपर्दी येन वारितम् । चैत्यं युगादिदेवस्य, ग्रामे वटसराभिधे ॥११॥

तत्पुत्र आम्रदेवोऽभू,-दाम्रवन्मङ्गलास्पदम् । राणुका गेहिनी तस्य, पुण्यश्रीरिव देहिनी ॥१२॥
तत्सूनुर्देवचन्द्रोऽभू,-न्निस्तन्द्रो धर्मकर्मणि । पद्मिनी पद्मिनीवास्य, प्रिया शीलश्रियो गृहम् ॥१३॥
चत्वारो जज्ञिरे विश्व,-नन्दना नन्दनास्तयो । भव्यजीवमनःशुद्ध्यो,-र्धर्मभेदा इवाङ्गिनः ॥१४॥
तेषु ज्येष्ठोऽजनि श्रीमा,-नम्बडः सचिवाग्रणीः । अद्वितीयो विवेकेन, द्वितीयो जह्णणस्ततः ॥१५॥
पश्चादाह्लादनो जाति,-मण्डनं दण्डनायकः । मन्त्री धर्मधुराधुर्य,-स्तुर्यः प्रह्लादनः पुनः ॥१६॥
ज्येष्ठे स्वर्गश्रियं प्राप्ते, श्रीमदम्बडमन्त्रिणि । विशेषाद्धर्मधुर्योऽस,-माह्लादनसुधीर्दधौ ॥१७॥
यत्कीर्त्तिव्रततिस्थारा,-पद्रस्थानकसम्भवा । न्यायधर्मामृतैः सिक्ता, विस्तृता विश्वमण्डपे ॥१८॥
यः श्रीसत्यपुरे वीर,-प्रासादे नाभिनन्दनम् । थारापद्रे च नाभेय,-चैत्ये श्रीपार्श्वनायकम् ॥१९॥
तथा चन्द्रप्रभस्वामि,-सीमन्धरयुगन्धरान् । अम्बिकाभारतीमूर्त्ती,-र्दिव्यस्फूर्त्तीर्न्यधापयत् ॥२०॥
नाभिपद्मे यथात्मानं, योगी ध्यायत्यहर्निशम् । पद्मकोशे तथा योऽय,-मादिनाथं सकान्तिम् ॥२१॥
ग्रामे वटसरे नाम्नि, तथा संगमखेटके । येनोद्दध्रे समं पूर्वं,-श्चैत्यद्वन्द्वं जिनान्वितम् ॥२२॥
अणहिल्लपुरे लक्ष्म्या,-स्तिलकं प्रेयसां निधिः । स्वगुरोर्वसतिर्येनो,-द्दध्रे भक्तिशुभात्मना ॥२३॥
लेखयत्यमलज्ञान,-दानभृत्पुस्तकानि यः । अगण्यपुण्यलक्ष्म्यास्यै, शासनानीव सर्वदा ॥२४॥
प्रासादः शुशुभे येनो,-द्धृतः श्रीवासुपूज्ययुक् । पत्तनस्य पुरो राज्ञो, रत्नानिव शेखरः ॥२५॥

अमेयं स्पृहयञ्छ्रेयः, श्रीमदाह्लादनो गुरुम्। श्रीवर्धमानसूरिं स, भक्त्याऽभ्यर्थितवानिति ॥२६॥
जीर्णोद्धार इहाणहिल्लनगरे श्रीवासुपूज्यप्रभोः, प्रासादस्य मया भवद्वचनतः स्वश्रेयसे कारितः।
यूयं तच्चरितस्य पुण्यघटनां कुर्वीत जीर्णोद्धृतिं, कृत्येऽस्मिन्निपुणा यतो गणधराः स्युः सूत्रधारा ध्रुवम् ॥२७॥
ततोऽसौ निधिनिध्यर्क,-संख्ये (१२९९) विक्रमवत्सरे। आचार्यश्चरितं चक्रे, वासुपूज्यविभोरिदम् ॥२८॥
चतुरा वाचयन्त्वेतद्, वृद्धा व्याख्यां नयन्त्वपि। शब्दप्रमाणसाहित्या,-गमज्ञाः शोधयन्तु च ॥२९॥
यावत्पूर्वाङ्गणेऽस्मिन्नसमतमतमोगोमयालेपनार्द्रे, सायंसंध्यापुरन्ध्री स्फुरदुडुकुसुमे मुञ्चतीन्दुप्रदीपम्।
प्रातःश्रीः सान्ध्यरागप्रसृमरघुसृणे भानुकुम्भं च तुष्ट्यै, धर्माधीशस्य तावज्जिनचरितमिदं सद्बलोके मुदे स्तात् ॥३०॥
सर्वाक्षरगणनायां, जयति श्रीवासुपूज्यचरितमिदम्। वेदनिधिवेदबाणा (५४९४),-नीताङ्कग्रन्थसम्पूर्णम् ॥३१॥

॥ अथ गद्यानुवादकर्तुरुल्लेखः ॥

राधे शुक्लचतुर्दश्यां, जगदानन्दशास्त्रिणा। ग्रन्थो गद्यमयोऽपूरि, मुन्यङ्काङ्केन्दु (१९९७) विक्रमे ॥१॥

॥ श्रीरस्तु ॥

तत्पुत्र आम्रदेवोऽभू,-दाम्रवन्मङ्गलास्पदम् । राणुका गेहिनी तस्य, पुण्यश्रीरिव देहिनी ॥१२॥
तत्सूनुर्देवचन्द्रोऽभू,-न्निस्तन्द्रो धर्मकर्मणि । पद्मिनी पद्मिनीवास्य, प्रिया शीलश्रियो गृहम् ॥१३॥
चत्वारो जज्ञिरे विश्व,-नन्दना नन्दनास्तयो । भव्यजीवमनःशुद्ध्यो,-र्धर्मभेदा इवाङ्गिनः ॥१४॥
तेषु ज्येष्ठोऽजनि श्रीमा,-नम्मडः सचिवाग्रणीः । अद्वितीयो विवेकेन, द्वितीयो जह्लणस्ततः ॥१५॥
पश्चादाह्लादनो जाति,-मण्डनं दण्डनायकः । मन्त्री धर्मधुराधुर्य,-स्तुर्यः प्रह्लादनः पुनः ॥१६॥
ज्येष्ठे स्वर्गश्रियं प्राप्ते, श्रीमदम्मडमन्त्रिणि । विशेषाद्धर्मधुर्यत्व,-माह्लादनसुधीर्दधौ ॥१७॥
यत्कीर्तिव्रततिस्धारा,-पद्रस्थानकसम्भवा । न्यायधर्मामृतैः सिक्ता, विस्तृता विश्वमण्डपे ॥१८॥
यः श्रीसत्यपुरे वीर,-प्रासादे नाभिनन्दनम् । थारापद्रे च नाभेय,-चैत्ये श्रीपार्श्वनायकम् ॥१९॥
तथा चन्द्रप्रभस्वामि,-सीमन्धरयुगन्धरान् । अम्बिकाभारतीमूर्ती,-र्दिव्यस्फूर्तीर्व्यधापयत् ॥२०॥
नाभिपद्मे यथात्मानं, योगी ध्यायत्यहर्निशम् । पद्मकोशे तथा योऽय,-मादिनाथं स्वकारितम् ॥२१॥
ग्रामे वटसरे नाम्नि, तथा संगमखेटके । येनोद्दध्रे समं पूर्वं,-श्चैत्यद्वन्द्वं जिनान्वितम् ॥२२॥
अणहिल्लपुरे लक्ष्म्या,-स्तिलकं प्रेयसां निधिः । स्वगुरोर्वसतिर्येनो,-द्दध्रे भक्तिशुभात्मना ॥२३॥
लेखयत्यमलज्ञान,-दानभृत्पुस्तकानि यः । अगण्यपुण्यलक्ष्म्यास्यै, शासनानीव सर्वदा ॥२४॥
प्रासादः शुशुभे येनो,-द्धृतः श्रीवासुपूज्ययुक् । पत्तनस्य पुरो राज्ञो, रत्नवानिव शेखरः ॥२५॥

## प्रत आकारनां अमारां प्रकाशनोः—

श्रीमद् भावचन्द्रसूरिविरचितम्—
श्रीशांतिनाथ—चरित्रं गद्यबद्धम्

आ ग्रन्थ प्रताकारे सुपर रोयल साइझमां सुंदर छापकाम साथे ड्रोइंग पेपरमां १९६ पानांनो दळदार छे. आमां बार भवनुं वर्णन करवामां आवेल छे.
किंमत रूपिया ४—०—०

पक्खीसूत्र श्रमणसूत्रादि संस्कृत अनुवादसहित, गुजराती भाषान्तर, प्रताकारे सुपर रोयल साईझ—ड्रोइंग-पेपरमां ८० पानांनो ग्रन्थ छे. आ ग्रन्थ साधु-साध्वीने रोजनो उपयोगी छे. किंमत रूपिया १—४—०

श्रीमद् तीलकाचार्य—विरचिता सामाचारी. आ ग्रन्थ प्रताकारे सुपररोयल साइझमां छे. ड्रोइंगपेपरमां छपायेल छे, आ ग्रन्थमां साधुमुनिराजनी सामाचारीनो समावेश थाय छे. किंमत रूपियो १—०—०

श्रीउदयवीरगणिविरचित श्रीपार्श्वनाथ—चरित्रं गद्यबद्धम्

आ ग्रन्थ १६३ पानांनो लेजर पेपरमां प्रताकारनो छे, सुदर छापकाम छे. आमां पार्श्वनाथ भगवाननां दश भवनुं विस्तारथी वर्णन करवामां आव्युं छे.
किंमत रूपिया ३—०—०

रत्नशेखरसूरि विरचितम् श्रीपालचरित्रम् मूळ अने गुजराती भाषान्तर सहित ऊंचा लेजरपेपरमां सुंदर छापकाम साथे २४८ पानांना आ ग्रन्थमां श्रीपाळमहाराजानुं विस्तारथी चरित्र आवे छे. किं. रूपिया ४—०—०

जैनधर्मनां दरेक जातनां पुस्तको अमारे त्यांथी मळशे.

लखोः—

महेता नागरदास प्रागजीभाई
ठे. दोशीवाडानी पोळ—अमदावाद.
संघवी मूलजीभाई झवेरचंद, पालीताणा.